# सागरिका

## ज्योतिष-विशेषाङ्कः



पंचदशवर्षे अङ्कौ प्रथमद्वितीयौ



प्रकाशकः

**सागरिका-समितिः, सागरविश्वविद्यालयः**

सागरम् ( म० प्र० )



# सागरिका

## ज्योतिष-विशेषाङ्कः

पंचदशवर्षे अङ्को प्रथमद्वितीयौ

प्रधानसम्पादकः

**डॉ० रामजी उपाध्यायः**

सागरविश्वविद्यालये

संस्कृतविभागस्य प्राध्यापकाध्यक्षः

प्रकाशकः

**सागरिका-समितिः, सागरविश्वविद्यालयः**

सागरम् ( म० प्र० )

प्रकाशिका
सागरिका-समितिः
सागरविश्वविद्यालयः
सागरम् ( म० प्र० )

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ३–०० रूप्यकाणि |
| वार्षिकम् | १०–०० रूप्यकाणि |
| आजीवनग्राहकस्य | २००–०० रूप्यकाणि |
| अङ्कप्रकाशः | प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र- [ जून-सितम्बर-दिसम्बर-मार्च- ] मासेषु |

सूच्यम् : आजीवनग्राहकेभ्यः सागरिकायाः प्राचीना अपि सर्वेऽङ्काः सवस्त्र-पुटबन्धा निश्शुल्कमुपह्रियेरन् ।

मुद्रकः
विद्याविलास प्रेस
के. ३७/१०९, गोपालमन्दिर लेन
वाराणसी–२२१००१ ( उ० प्र० )
फोन ५२९३९

विद्वद्वरश्रीजगन्नाथसम्राड्-विरचितः

# सिद्धान्तसम्राट्

[ जयपुरस्थद्वितीय-जयसिंहस्थापितवेधशालास्थयन्त्रसाहाय्येन स्वयं प्रत्यक्षीकृत्य निर्धारितसिद्धान्तात्मकोऽद्वितीयः स्वतन्त्रो ग्रन्थः ]

सम्पादकः

**डॉ० मुरलीधरचतुर्वेदः**

लब्धस्वर्णपदकः

ज्योतिषाचार्यः ( सिद्धान्त-फलित ), विद्यावारिधिः ( पी० एच्० डी० )

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसरस्वतीभवनस्थ वाराणसी ।

# उपोद्घातः

॥ श्रीहनुमते नमः ॥

श्रीगोविन्दमनोमिलिन्दनलिनी सौन्दर्यसारावधिः,
सम्मूर्त्ताव्रजवासिपुण्यपटली लीलारसाधीश्वरी।
भक्ताभीष्टविधानकल्पलतिका कारुण्यकल्लोलिनी,
वृन्दारण्यविहारिणी विजयते श्रीरासरासेश्वरी ॥ १ ॥

सर्वदा स्मरणीयो मे पिता सद्बुद्धिदायकः।
कोविदाऽब्जकदम्बार्को देवाख्यः श्रीलकेशवः ॥ २ ॥

अथेदानीं जगन्नाथसम्राड् विरचितः **'सिद्धान्तसम्राट्'** इत्याख्यो ग्रन्थः सम्पाद्य विदुषां पुरत उपस्थाप्यते, प्रायः पञ्चदशवर्षात् पूर्वं वाराणसेयसंस्कृत-विश्वविद्यालये मया शोधार्थं **'सिद्धान्तसारकौस्तुभस्य'** सम्पादनं गृहीत-मासीत्, तदर्थं चत्वारि पुस्तकान्यधिगतानि, तेषु प्राच्यविद्याप्रतिष्ठान-जोधपुरतः तथा अनुसन्धानसंस्थान-उज्जैनतोऽधिगतयोर्मातृकयोः केवलं **'सिद्धान्तसारकौस्तुभ'** एवासीत् किन्तु वा० संस्कृतविश्वविद्यालयीय-सरस्वतीभवनस्थायां तथा इण्डियाआफिसलाइब्रेरी-लन्दनस्थायां च सिद्धान्तसारकौस्तुभेन सहैव सिद्धान्तसम्राडप्युपलब्धः। सिद्धान्तसारकौस्तुभः अरबीभाषायां निबद्धस्य 'अल् मिजस् त' इत्याख्यग्रन्थस्य संस्कृतानुवादरू-पोऽस्ति यस्य सम्पादनं मया विद्यावारिधि ( पीएच्० डी० ) उपाध्यर्थं पूर्वं कृतम्।

अयं च **सिद्धान्तसम्राट्**-ग्रन्थः जयपुराधीशस्य द्वितीयजयसिंहस्य सभा-पण्डितेन जगन्नाथसम्राण्महोदयेन विरचितः स्वतन्त्र एवास्ति न कस्यचिदार-बिकग्रन्थस्यानुवादरूपः, अस्य रचना तेन विद्वद्वरेण्येन राज्ञो जयसिंह-स्याज्ञया दिल्ली–जयपुर–काशी–उज्जैन–मथुरास्थवेधशालासु भारतीयपरम्परया प्रत्यक्षतया ग्रहाणां गतिष्वन्तरमनुभूय कृता।

एतद्ग्रन्थकृतो जगन्नाथस्योल्लेखः विद्वद्भिरेवं कृतः—

१. 'ये सम्राट् महोदय दक्षिणदेशीय ब्राह्मण अरबी फारसी के ज्ञाता थे, महाराजाधिराज द्वितीय जयसिंह की आज्ञा से अरबीभाषास्थ ज्योतिष ग्रन्थों का संस्कृत अनुवाद इन्होंने किया है, युक्लिड्कृत 'रेखागणित' का तथा टलेमी कृत 'अलमजस्ती' का अनुवाद सम्राट्सिद्धान्त नाम से किया है, यह **'अल् मिजस्‌ त'** अरबी भाषा में था, इसका प्रसार यूरप व अरब देश में सहस्रवर्ष पर्यन्त था।'

२. 'अयं तैलङ्गब्राह्मणो जयपुरनरपतीन्द्रजयसिंहस्य प्रधानपण्डितो जयसिंहमहाराजतो लब्धपण्डितराजोपाधिर्गोलगणितागमानन्योपधीर्महाराजजयसिंहाज्ञयाऽरबीभाषीय**मिजस्तीनामक**ज्योतिषसिद्धान्तग्रन्थस्यानुवादं संस्कृतभाषायां **सिद्धान्तसम्राजं** कृतवान् , अत्र ग्रन्थे त्रयोदशाध्यायाः, एकचत्वारिंशत्प्रकरणानि, षण्णवत्युत्तरशतं क्षेत्राणि सन्ति, युक्लेदाख्यस्य ज्यामितेरनुवादो रेखागणितनाम्नाऽस्य प्रसिद्धोऽस्ति।'

३. 'भारतवर्षीय ज्योतिषशास्त्र के सम्बन्ध में जयसिंह एक अपूर्व पुरुष हुए, जिस समय हमारे देश में केशव और गणेश दैवज्ञ जैसे अन्वेषक ज्योतिषी हुए उसी समय यूरोप में कोपर्निकस् का जन्म हुआ, उस समय तक दोनों देशों में ज्योतिष शास्त्र की स्थिति प्रायः समान थी परन्तु यूरोप में बाद में क्रमशः उन्नति होते-होते उसमें बहुत बड़ा परिवर्तन हो गया, मुझे अपने देशमें उनकी जोड़ी का पुरुष एकमात्र जयसिंह ही दिखाई देते हैं। भारतीय, मुसलमानी और यूरोपीय ज्योतिष ग्रन्थों से दृक्प्रत्यय न होता देखकर इन्होंने वेधशालाएँ और प्राचीन सिद्धान्तों से नवीन यन्त्र बनवाकर उनके द्वारा वेध करके नवीन ग्रन्थ बनवाया [ यन्त्रनिर्माण का कारण ग्रन्थ में वर्णित है ] सात-आठ वर्ष वेध कराकर अरबी में 'जिज महम्मद' और संस्कृत में 'सिद्धान्तसम्राट्' बनवाया। उस समय दिल्ली का बादशाह महम्मद शाह था, सिद्धान्तसम्राट् शक १६५३ सन् १७३१ ई० में इन्होंने जगन्नाथ-

---

१. ( द्रष्टव्यं–प० चण्डीप्रसादकृतं 'काशी का मानमन्दिर' टि० पृ० २ )
२. ( द्र०—सुधाकरद्विवेदीकृता गणकतरङ्गिणी पृ० १०२ )
३. (द्र०–शङ्करबालकृष्ण दीक्षितकृतं 'भारतीय ज्योतिष' पृ० ४००-४०२)

सम्राट् द्वारा बनवाया है, मुख्यतः यह मिजस्ती का ही अनुवाद है, इसमें १३ अध्याय १४१ प्रकरण और १९६ क्षेत्र हैं, प्रथमाध्याय में १४ प्रकरण १६ क्षेत्र हैं, द्वितीयाध्याय में १३ प्रकरण १६ क्षेत्र हैं, इसके अतिरिक्त यन्त्र-ज्या–चापादि रेखागणितसाध्य त्रिप्रश्न, मध्यम स्पष्टाध्याय हैं······।"

मया स्वकीयेऽनुसन्धानकाले स्पष्टमनुभूतं यदनेन जगन्नाथसम्राजा ग्रन्थद्वयं निर्मितम् । प्रथमः यूनानीसिद्धान्तज्योतिर्विदा **बत्लमियूस्** संज्ञकेन विरचितस्य **अल्मिजस्त** इत्याख्यग्रन्थस्य संस्कृतानुवादो यः **सिद्धान्तसार-कौस्तुभ** इत्याख्यया प्रसिद्धः, यत्र १३ अध्यायाः १४१ प्रकरणानि १९६ क्षेत्राणि सन्ति, द्वितीयश्च 'सिद्धान्तसम्राट्' नामा स्वतन्त्रग्रन्थोऽनेन विरचितः, यत्र अरबीय–भारतीयज्योतिषमतयोरनुक्तिदुरुक्तिपरिहारपूर्वकं विविधयन्त्रद्वारा वेधशालाभिश्च ग्रहाणां गतिस्थित्यादिनिश्चयं विधाय आवश्यकं परिवर्तनं परिवर्धनं च कृत्वा स्वीयः सिद्धान्तः स्थिरीकृतः ।

तात्पर्यमेतत् यत् सिद्धान्तसम्राडित्याख्येन ग्रन्थेन सह अल्मिजस्तस्य न कोऽपि सम्बन्धोऽस्ति, स्वतन्त्रोऽयं ग्रन्थः, भारतीयारबीयग्रन्थानुसारं गणितं कृत्वा वेधशालास्थयन्त्रसाहाय्येन स्वयं परिवेक्ष्य तत्र यदन्तरं परिलक्षितं तत्तत्सर्वमत्र ग्रन्थे सन्निवेशितम् । भारतीयपरम्परायां न कोऽप्येतादृशो ग्रन्थो दृश्यते यः वेधशालास्थयन्त्रसाहाय्येन स्वयं निर्णीय सिद्धान्तितः । स्थालीपुलाकन्यायेन वर्षमानमेव द्रष्टव्यम्—

| | |
|---|---|
| वेदाङ्गज्योतिषे | ३६६।०।०।० |
| पितामहसिद्धान्ते | ३६५।२१।२५।० |
| पुलिशसिद्धान्ते | ३६५।१५।३० |
| सूर्यसिद्धान्ते | ३६५।१५।३१।३० |
| वसिष्ठसिद्धान्ते | ०।०।०।० |
| रोमकसिद्धान्ते | ३६५।१४।४८ |
| पाराशरसि० | ३६५।१५।३१।१८।३० |
| आधुनिक पञ्चसिद्धान्तोक्तं | ३६५।१५।३१।३१।२४ |
| प्रथम आर्यभटोक्तं | ३६५।१५।३१।१५ |
| द्वितीय ,, | ३६५।१५।३१।३० |

| | |
|---|---|
| ब्रह्मगुप्तसि० | ३६५।१५।३०।२२।३० |
| भास्कराचार्यसि० | ३६५।१५।३०।२२।३० |
| नित्यानन्दसि० | ३६५।१४।३१।५३ |
| वटेश्वरसि० | ३६५।१५।३१।१५ |

किन्तु सिद्धान्तसम्राजि वेधसिद्धं वर्षमानं ३६५।१४।३१ इत्यस्ति, एवमन्यत्रापि।

पूर्वोद्धृतैर्ग्रन्थकारैर्ग्रन्थमनधीत्यैव सिद्धान्तसारकौस्तुभस्य सिद्धान्तसम्राजा सहैकीकरणं कृतमिति सुधीभिः पाठकैर्विवेचनीयम्, यच्च केनचिदपूर्णोऽयं ग्रन्थ इत्युक्तं तत्रेदं वक्तव्यं यत् सिद्धान्तसारकौस्तुभे यावद्विषयस्य घोषणा कृता तावत्पूर्ण एवोपलभ्यते। सिद्धान्तसम्राजि तु यन्त्राध्यायः ज्योत्पत्तिप्रकरणं मध्यमाधिकारश्च पूर्णतया प्राप्यते स्पष्टाधिकारस्त्रिप्रश्नाधिकारश्चावान्तरपुष्पिकाभावादपूर्णौ। भारतीयसिद्धान्तपरम्परायामद्भुतोऽयं ग्रन्थः यतो हि अस्मिन् ग्रन्थे यः सिद्धान्तः प्रतिपादितः स वेधशालासु यन्त्रेषु स्वयं परीक्ष्य निर्धारितः, अत एव श्रीशङ्करबालकृष्णदीक्षितेन स्वकीये भारतीयज्योतिषग्रन्थे स्पष्टतयोक्तं "जयसिंह के समय यूरोपवालों की ग्रहगति की स्थिति की अपेक्षा भारतीयों की ग्रहगति की स्थिति का ज्ञान अधिक सूक्ष्म था"। इति। अस्य ग्रन्थस्य प्रचारः प्रसारश्च निरन्तरं देशे प्रचलितः स्याच्चेत्, अधुना भारतीयपञ्चाङ्गानां या दुर्दशा यच्च वैविध्यं वर्तते तन्न स्यात्। सूर्यसिद्धान्तवादिनां मुखं पिहितमेव तिष्ठेत् यतो हि गणितविद्यायां कथमपि भिन्नत्वं न भवति। केचनाधुनिकाः— 'अदृष्टफलसिद्ध्यर्थं यथार्काद्युक्तितः कुरु' इत्युक्त्वा सूर्यसिद्धान्तमाधृत्य-निर्मितानां पञ्चाङ्गानामेव धर्मकर्मोपयोगित्वं स्वीकुर्वन्ति नैतद्युक्तम् फलितविद्यापि प्रत्यक्षफलाय विद्यते, सिद्धान्तसम्राड्ग्रन्थे भूपरिधिविवेचनं कृत्वा स्पष्टं सिद्धान्तितं यत्—भास्कराचार्योक्त्या 'व्यासे भनन्दाग्निहते विभक्ते' रीत्या भूपरिधिः सूक्ष्मतयाऽऽगच्छति न तु 'व्यासवर्गाद् दशगुणान्मूलं भूपरिधिः' इति सूर्यसिद्धान्तवचनात्। कस्यचिदपि सिद्धान्तस्य खण्डनं मण्डनं वा दुराग्रहेण न क्रियेत चेदधुना भारतीया नाटिकलं न शरणं गच्छेयुः। येन सूर्यसिद्धान्तेन लयपरिधिः सूक्ष्मा न प्रतीयते तेनान्यसंस्काराः कथं सूक्ष्माः स्युरिति पाठकैर्विभावनीयम्।

पण्डितजगन्नाथसम्राड् विरचितस्यास्य **सिद्धान्तसम्राट्**, ग्रन्थस्य प्रचारेण

सर्वा एव भ्रान्तयो दूरे स्युः। अद्यावधि इतिहासकाराणां भ्रमोऽत्र बाधकोऽभवत् यत् अल्मिजस्तस्यानुवादोऽयमिति।

एतद्ग्रन्थसम्पादने मातृकाणां दुर्वचत्वाद्दुरूहत्वात् समस्तक्षेत्राणामप्राप्तत्वाच्च महान् मे श्रमः सञ्जातः यानि यानि क्षेत्राण्यत्रोपलब्धानि तेषां ग्रन्थोक्ताक्षराण्याधृत्य निर्माणे भारतीयसिद्धान्तज्योतिषाधारेण तदाशयज्ञाने चातीवकाठिन्यमभवत्। ईसवीय १९६७ वर्षे इण्डियन इन्स्टीट्यूट आफ आस्ट्रानामिकल एण्ड संस्कृत रिसर्च, गुरुद्वारा रोड दिल्लीतः 'सम्राट्सिद्धान्त' इत्याख्यया भागत्रयात्मकं प्रकाशितं ग्रन्थं दृष्ट्वा तूल्लासो विषादे परिणतः, तत्र च हेतवः—

१. 'सम्राट् सिद्धान्त' इति मुख्यं ग्रन्थनाम कृतं येन प्रतीयते कस्यचित् सम्राजोऽयं वैयक्तिकः सिद्धान्तः। वस्तुतस्तु सिद्धान्तानां = प्रत्यक्षप्रतीतीनां सम्राट् अयं ग्रन्थः इत्यर्थोऽस्य नाम्नः। स्वयमेवोक्तं ग्रन्थकृता—'ग्रन्थं **सिद्धान्तसम्राजं** सम्राट् रचयति स्फुटम्' इति **'सिद्धान्तसम्राजि** महागभीरे' इति च।

२. बतल्मियूस इत्याख्य यूनानीयज्योतिषिककृतस्य अल्मिजस्तग्रन्थस्य संस्कृतानुवादरूपः सिद्धान्तसारकौस्तुभोऽप्यत्रैव निबद्धः। स्फुटमेतद्यत् सिद्धान्तसारकौस्तुभोऽनुवादरूपः, सिद्धान्तसम्राट् तु मौलिको ग्रन्थः तस्माच्च सुतरां भिन्नः।

३. **नसीरतूसी** कृतस्य **उकाराख्य**-ग्रन्थस्य **नयनसुखोपाध्याय**-कृतः संस्कृतानुवादोऽपि ग्रन्थेऽस्मिन्नेव सन्निवेशितः सम्पादकेन, यश्चास्मात्सर्वथा भिन्नः सरस्वतीभवनग्रन्थमालातः श्रीविभूतिभूषणभट्टाचार्यमहोदयानां सम्पादकत्वे प्रकाश्यते।

४. मूलमातृकातः बहुत्र पाठानामसङ्गतिरत्र मुद्रितसंस्करणे येन क्षेत्राणां साधनमेवासङ्गतं भवति।

एतत्सर्वं दृष्ट्वाऽनुसन्धानकाले संगृहीतोऽयं ग्रन्थः मया साम्प्रतं सम्यक्तया सम्पाद्य मुद्रणार्थं दत्तः। अस्य ग्रन्थस्य यावद्वैशिष्ट्यं तत्रेदं विशेषेणावधातव्यं यत्, अन्येषु सिद्धान्तग्रन्थेषु यन्त्राणां वर्णनमात्रं विद्यते न

तु वेधं विधाय ग्रहस्थितेरानयनम् । अन्यग्रन्थापेक्षया भित्तियन्त्रं, वृत्तषष्ठांशं, यन्त्रसम्राट् , रामयन्त्रं, जयप्रकाशादयोऽत्राधिकाः । जीवानयनस्य बहवः प्रकारा अत्र वर्णिताः मध्यमाधिकारे मासादिभगणादयः सूर्यसिद्धान्तानुरूपा एव सन्ति तथा च कमलाकरस्य तत्त्वविवेकतोऽपि केचन श्लोका यथावदुद्धृता येषां निर्देशः टिप्पण्यां कृतः, मध्यमाधिकारः पूर्ण उपलभ्यते किन्तु स्पष्टाधिकारत्रिप्रश्नाधिकारौ नैव पूर्णौ । स्पष्टाधिकारस्थक्षेत्राणां यन्त्राध्यायोक्तयन्त्राणां च स्वरूपप्रदर्शनं पत्रिकाया आकारस्य लघुत्वात् दर्शितुमशक्यमितिकृत्वा परिहृतम् ।

एवं कृत्वाऽयं ग्रन्थो विदुषां पुरत उपस्थाप्यते । अनुसन्धानकालत एव येषामनुकम्पया साहाय्येन च कृतार्थोऽहं तेषां स्व० क्षेत्रेशचन्द्रचट्टोपाध्यायानां स्व० मीठालाल ओझा महोदयानां च स्मरणमत्रावश्यकम् अस्मत्परमगुरुवर्याणां वाराणसेयसंस्कृतविश्वविद्यालये ज्योतिषविभागाध्यक्षाणां श्रीमत्पण्डितअवधबिहारित्रिपाठिमहोदयानामुपकृतिर्मया न कदापि विस्मर्तव्याः, यत एतेषां निर्देशन एव सर्वं गोलज्ञानमधिगतम् । विविधशास्त्रेषु प्रस्फुरन्मतित्वेऽपि गणितशास्त्रे निष्णातप्रज्ञाणां श्रीमद्विभूतिभूषणभट्टाचार्याणामुपकृतिमहं यावज्जीवन्न विस्मरिष्ये एतेषां मार्गपरिदर्शनेनैव मया श्रीमज्जगन्नाथसम्राजकृतीनां दुरूहता सरलीकृता । सरस्वतीभवनस्थास्मत्सुहृदः श्रीजनार्दनशास्त्रिपाण्डेयस्य तथा सागरविश्वविद्यालये संस्कृतविभागाध्यक्षस्य श्रीरामजीउपाध्याय महोदयस्य च भूरिशः कृतज्ञोऽस्मि यत्कृपयेमं ग्रन्थं विदुषां पुरत उपस्थापने प्राभवम् ।

अन्ते च कृपाधनान् विपश्चितः सादरं प्रार्थये यदत्र ममानवधानतावशात् काश्चन त्रुटयः स्युश्चेत् सूचनीयोऽहमिति ।

विदुषामाश्रवः

सरस्वतीभवनम्
कार्तिक पूर्णिमा २०३३

मथुरावास्तव्य-श्रीमद्भागवत-नवशुक-
**श्रीमत्केशवदेवचतुर्वेदात्मजो-**
**मुरलीधरचतुर्वेदः**

# विषयानुक्रमणिका

॥ श्रीमहागणपतये नमः * श्रीसरस्वत्यै नमः ॥

# सिद्धान्तसम्राट्



गजाननं गणाधिपं सुरासुरार्चितं सदा,
समस्तभक्तकामदं शिवासुतं सुखप्रदम् ।
वितण्डचण्डयोगिनीसमाजमध्यवर्त्तिनं,
प्रशस्तभूतिभूषितं नमामि विघ्नवारणम् ॥ १ ॥

लक्ष्मीनृसिंहचरणाम्बुरुहं सुरेशैर्वन्द्यं समस्तजनसेवितरेणुगन्धम् ।
वाग्देवतां निखिलमोहतमोऽपहन्त्रीं, वन्दे गुरुं गणितशास्त्रविशारदं च ॥२॥

श्रीगोविन्दसमाह्वयादिविबुधान् वृन्दाटवीनिर्गतान्,
यस्तत्रैव निराकुलं शुचिमनोभावः स्वशक्त्यानयत् ।
म्लेच्छान् मानसमुन्नतान् स्वतरसा निर्जित्य भूमण्डले,
जीयात् श्रीजयसिंहदेवनृपतिः श्रीराजराजेश्वरः ॥ ३ ॥

करं जनार्दनं नाम दूरीकृत्य स्वतेजसा ।
भ्राजते दुःसहोऽरीणां यथा ग्रैष्मो दिवाकरः ॥ ४ ॥

राजाधिराजो जयसिंहदेवो यो मत्स्यदेशाधिपतिश्च सम्राट् ।
श्रीरामपादाम्बुजसक्तचित्तो यज्वा सदा दानरतः सुशीलः ॥ ५ ॥
गोलादियन्त्रेषु नवीनयुक्तिप्रचारदक्षो गणितागमज्ञः ।
सत्यप्रियः सत्यरतः कृपालुस्तिग्मप्रतापो जयति क्षमायाम् ॥ ६ ॥

येनेष्टं वाजपेयाद्यैः महादानानि षोडश ।
दत्तानि द्विजवर्येभ्यो गोग्रामद्विपवाजिनः ॥ ७ ॥

स धर्मपालो गणितप्रवीणान् ज्योतिर्विदो गोलविचारदक्षान् ।
कारूंस्तथाहूय चकार वेधं गोलादियन्त्रैर्द्युसदां च भानाम् ॥ ८ ॥

तेन श्रीजयसिंहेन प्रार्थितः शास्त्रसंविदा ।
करोति श्रीजगन्नाथः सम्राट् सिद्धान्तमुत्तमम् ॥ ९ ॥
ग्रन्थं सिद्धान्तसम्राजं सम्राट् रचयति स्फुटम् ।
तुष्ट्यै श्रीजयसिंहस्य जगन्नाथाह्वयः कृती ॥ १० ॥

## अथ वेधोपयोगीनि यन्त्राणि प्रोच्यन्ते

नाडीयन्त्रं गोलयन्त्रं दिगंशाख्यं तथैव च ।
दक्षिणोदक्भित्तिसंज्ञं वृत्तषष्ठांशकं तथा ॥ १० ॥
यन्त्रसम्राडिति ख्यातं यन्त्राणामुत्तमोत्तमम् ।
जयप्रकाशं तद्वच्च सर्वयन्त्रशिखामणिः ॥ ११ ॥

## यन्त्राध्यायः

## अथ नाडीवलयस्वरूपमुच्यते

अभीष्टदेशे काष्ठमयं पलभाक्षेत्रद्वयं विधाय अभीष्टसमानान्तरेण पूर्वापररेखायां कर्मकारहस्तमितां पीठिकां कृत्वा तदुपरि उभयतः पलभाक्षेत्रद्वयं स्थापयेत् । तत्कर्णसमानभूमिकायां यथा तत्पालिगतदृष्ट्या वेधसौकर्यं स्यात् तथा वृत्तं कार्यं तन्नाडीवलयं भवति । तत्केन्द्रमवश्यं ध्रुवाभिमुखं भवति ।

पुनः पलभाद्वयं दूरीकृत्य सुधया श्लक्ष्णं विधाय भांशाङ्कितं षष्टिघट्याङ्कितं च कार्यम् । यथा भागचतुष्टयं समं भवति तथा पूर्वापरसूत्राङ्कितमधराधरसूत्राङ्कितं च कार्यम् । तत्केन्द्रे सूत्रं निधाय केनचिदाधारेण ध्रुवाभिमुखं स्थिरं कृत्वा ततः तत्पालिगतपट्टिकया सूत्रगतदृष्ट्या ग्रहर्क्षादिकं वेध्यम् । ऊर्ध्वस्थानाद् वेधस्थानान्तं नतकालो ज्ञेयः ।[1] अस्मिन्नुत्तरगोलस्थानां ग्रहर्क्षाणां वेधो भवति, दक्षिणगोलस्थानां न भवति, तेनेदं नादृतम् ।

इति नाडीवलययन्त्रम्

## अथ गोलयन्त्रमुच्यते

धातुमयं चतुरङ्गुलपिण्डयुतं कर्मकारहस्तचतुष्टयमितव्यासं वृत्तद्वयं भांशाङ्कितं कृत्वा भार्द्धांशान्तरे योजनीयं यथा समकोणचतुष्टयं भवति । तयोर्मध्ये एकं क्रान्तिवृत्तमपरमायनवृत्तं कल्पनीयम् । आयनवृत्ते कदम्ब-

---

१. इतोऽनन्तरं इति नाडीवलययन्त्रम्, इति विद्यते क पुस्तके, अस्माभिः प्रकरणसमाप्तिद्योतकं वाक्यमिदं प्रकरणसमाप्तावेव स्थापितम् ।

स्थानद्वये वृत्तोभयतः अन्तर्बहिश्च निःसृतं कीलद्वयं मूषायां तदुत्पत्तौ तत्संलग्नमेव कार्यम्। पुनस्तस्मिन्नेव अयनवृत्ते ध्रुवस्थाने कीलद्वयं तथा संयोज्यं यथा वृत्तात्किञ्चिद् बहिर्गतं भवति। पुनः कदम्बद्वयकीले बहिर्निःसृते एकं वृत्तं कदम्बसंज्ञम् आयनवृत्तान्तर्गतं, द्वितीयम् आयनवृत्ताद् बहिर्गतं प्रोतं कार्यम्। यथा तत्कदम्बवृत्तद्वयं आयनवृत्तेन क्रान्तिवृत्तेन च लग्नं सद् अकुण्ठितं भ्रमति तथा कार्यम्।

यद्यप्युपरितनकदम्बवृत्तं ध्रुवकीलकुण्ठितं[1] भवेत्तथापि कार्यसिद्धिर्भवेत् न कोऽपि दोषः। यतस्तत्स्थन्तु भ्रमिष्यत्येव।

पुनः एकं वृत्तं याम्योत्तरसंज्ञं आयनवृत्तात्किञ्चिदधिकं ध्रुवकीलयोः प्रोतं स्थिरं याम्योत्तरदिक्स्थं षड्भान्तरितकीलद्वययुतं स्तम्भद्वयाधारेण दृढं कार्यं यथा तदन्तर्गतानि वृत्तानि भ्रममाणानि भवन्ति तथा कार्यम्। पुनरन्तर्गतकदम्बवृत्तोदरगतं अन्यद्वृत्तं कीलरहितं तदुदरगतमेव भ्रममाणं कार्यम्। एतद्वृत्तं शरार्थमुपयुक्तमस्ति। अथलघुवृत्तैकपार्श्वे षड्राश्यन्तरितं भुजद्वयमेकव्यासगतं निखात्त्वा दृढं स्थापयेत्। यतस्तच्छिद्रद्वयगतदृष्ट्या ग्रहर्क्षादिवेधो भवति। एवं षड्भिर्वृत्तैरिदं गोलयन्त्रं सिद्ध्यति। इदमेव यवनभाषायां जा-तु-ल् ह-ल-क-मित्युच्यते। सर्वेषु वृत्तेषु यथा सम्भवसंशाः कलाश्चाङ्क्याः। अथवा कदम्बवृत्तद्वयमायनवृत्तान्तर्गतमेव कार्यम्। यथैतद्वृत्तद्वयभ्रमणे ध्रुवकीलकजन्यान्तरायो न स्यात्। अयं प्रकारः साधीयान्।

## अथ वेधप्रकारः

यदा रविचन्द्रौ, दृश्यौ भवतस्तदा क्रान्तिवृत्तं कदम्बवृत्तं च तथा भ्रामणीयं यथा तच्छाया तदन्तर्गता स्यात्। यत्र वृत्तद्वयं संसक्तं रविसम्मुखं तत्र स्पष्टो रविर्ज्ञेयः।

अथ तस्मिन्नेव काले अन्तर्गतकदम्बवृत्तं तदन्तर्गतवेधवलयं च तथा भ्रामणीयं यथा तद्भुजद्वयरन्ध्रेण चन्द्रदर्शनं स्यात्। एवम् अन्तर्गतकदम्बवृत्तस्य क्रान्तिवृत्तस्य च चन्द्रसम्मुखदिशि यत्र सम्पातस्तत्र स्पष्टश्चन्द्रो ज्ञेयः।

---

१. कीलं इति क पुस्तके पाठः।

क्रान्तिवृत्ताद् यावद्भिरंशैः वेधस्थानं तावान् शरो ज्ञेयः। एवं चन्द्रं स्थिरं कृत्वा रात्रौ नक्षत्रादिकं वेध्यम्।[1] एतस्मिन्यन्त्रेऽतिभारेण नामनोन्नामनं भवति तेन वेधेऽन्तरं पतति। तेनेदमप्यनादृतम्।

इति गोलयन्त्रम्

## अथ दिगंशज्ञानार्थं दिगंशयन्त्रमुच्यते

तन्निर्माणप्रकारो यथा—जलवत्समीकृतायां भूमौ दिक्साधनं कृत्वा वृत्तमिष्टव्यासार्द्धेन कार्यम्। तस्य क्षितिजमिति संज्ञा। एवमत्र क्षितिजत्रयं कार्यम। तत्र प्रथमवृत्तं इष्टोच्चप्रमाणं पूर्णगर्भं कार्यम्। द्वितीयवृत्तोपरि वर्तुला चक्राकारा प्रथमोच्छ्रायप्रमाणा भित्तिः कार्या। तृतीयवृत्तोपरि द्विगुणोच्छ्रायतुल्या वर्त्तुला पालिः कार्या। क्षितिजत्रयेऽपि पूर्वापरा याम्योत्तरा च रेखा कार्या। तदुपरि भांशाश्चक्रकलाश्चाङ्क्याः। तृतीयवृत्ते चतुःसूत्री पूर्वोक्तवत् दृढा कार्या। प्रथमवृत्ते केन्द्रस्थाने एकसूत्राग्रं दृढसंलग्नं कार्यम्। द्वितीयसूत्राग्रं पाषाणेन बध्वा तृतीयपालौ स्थाप्यम्। तस्य दृङ्मण्डलमिति संज्ञाऽस्ति।

## अथ वेधप्रकारः

इष्टग्रहस्य नक्षत्रस्य वा बिम्बकेन्द्रं द्वितीयमण्डलगतदृष्ट्या चतुःसूत्रीकेन्द्रमार्गेण दृङ्मण्डलसूत्रे यथा भवति तथा दृङ्मण्डलसूत्रं तृतीयपालौ प्रचालनीयम्। एवं कृते सति पूर्वापररेखासूत्रचिह्नाद् दृङ्मण्डलसूत्रपर्यन्तं क्षितिजे दिगंशाः भवन्ति।

## अत्रोपपत्तिः

इदं दृङ्मण्डलसूत्रं दिग्वृत्तचतुर्थांशस्य पूर्णज्यारूपं भवति। पुनस्तस्मिन् ग्रहबिम्बचतुःसूत्रसंपातौ एककाल एव भवतः। तदा तत्सूत्रमवश्यं दिगंशेषु लगतीत्युपपन्नम्।[2] अनेन यन्त्रेण यन्त्रसम्राजा च चन्द्रध्रुवकज्ञानं च भवति। तद्यथा यदा चन्द्रः याम्योत्तरवृत्तासन्नो भवति स कालोऽनु-

---

१. नाडीवलयवदत्रापि टिप्पणी ज्ञेया।

२. अत्रापि नाडीवलयवत् टिप्पणी ध्येया।

मानेन ज्ञेयः। तस्मिन् काले गणितागतश्चन्द्रः स्पष्टः कार्यः। तं वित्रिभलग्नं कल्पयित्वा तस्माल्लग्नं साध्यम्। लग्नादनुमानकालीनस्पष्टसूर्याच्चेष्टकालः साध्यः। तस्मिन् काले चन्द्रसूर्यौ स्पष्टौ कार्यौ। पुनश्चन्द्रं वित्रिभलग्नं कल्पयित्वा तस्माल्लग्नमिष्टकालश्च साध्यः। एवमसकृदिष्टकालः साध्यः। तस्मिन्काले यश्चन्द्रो गणितागत आयाति स वित्रिभलग्नतुल्यश्चन्द्रो भवति। तस्मिन्समये लग्नाग्रांशतुल्याश्चन्द्रस्य दिगंशकोट्यंशाः भवन्ति। आयनदृक्कर्मसंस्कृतचन्द्रस्य विषुवांशानां तत्कालीनदशमस्य चान्तरं नतकालो भवति। दिगंशकोटिज्यातस्त्रिप्रश्नोक्तरीत्या वित्रिभस्य नतांशाः साध्याः। ते याम्योत्तरत्वेन याम्योदक्संज्ञा भवन्ति। ते शरसंस्कृताश्चन्द्रबिम्बनतांशाः भवन्ति। पुनः स्थिरीकृतेष्टकाले नाडीवलये चन्द्रस्य वेधं कृत्वा नतकालो ज्ञेयः। स नतकालो गणितागतनतकालेन तुल्यश्चेत्तदा चन्द्रः शुद्धो ज्ञेयः। पूर्वकपाले वेधितनतकालः अधिकश्चेत्तदा चन्द्रध्रुवकः अधिकः अपेक्षितः। न्यूनश्चेन्न्यूनः अपेक्षितः। पश्चिमकपाले एतद्विपरीतं ज्ञेयम्। तत्र नतकाले पलमितान्तरेण चन्द्रे षट्कलाप्रमितमन्तरं पतति इति सुमतिना ज्ञेयम्।

एवं वित्रिभकालीनं चन्द्रं कृत्वा तस्य दिगंशाः साध्याः। यदा वेधेन तावन्तो दिगंशा आयान्ति तदा चन्द्रो वित्रिभे आगत इति ज्ञेयम्। तस्मिन्समये चन्द्रस्य यः नतकालो भवति स तत्कालदशमघटीषु योज्यः यदि वित्रिभं दशमाधिकं भवति। यदि न्यूनं तदा शोध्यः। शेषाल्लङ्कोदयैर्लग्नं साध्यम्। स आयनदृक्कर्मसंस्कृतश्चन्द्रो भवति। पुनस्तत्समये गणितेन यः शर आयाति सः दृग्लम्बनसंस्कृतः कार्यः। तत्तुल्य—अक्षांशपत्रादायनदृक्कर्मसंस्कृतचन्द्रो क्रान्तिवृत्तस्थो ध्रुवकः साध्यः।

स यथा[1] तेषु आयनदृक्कर्मसंस्कृतग्रहस्य विषुवांशाः साध्याः। शर [2]उत्तरश्चेन्नवतिः शोध्यः[3] [4]दक्षिणश्चेद्योज्यः[5]। शेषांशेभ्यः शरतुल्या-

१. यथास्तेषु इति क पुस्तके पाठः।

२. उत्तरा इति क पुस्तके पाठः।

३. शोध्या इति क पुस्तके पाठः।

४. दक्षिणा इति क पुस्तके पाठः।

५. योज्या इति क पुस्तके पाठः।

क्षांशपत्राद्युदयाः साध्याः। शर उत्तरश्चेदेषु नवतिर्योज्यः दक्षिणश्चे-च्छोध्यः। शेषं क्रान्तिवृत्तस्थो ध्रुवो भवति।

इति दिगंशयन्त्रम्

## अथ दक्षिणोदक्भित्तिसंज्ञं यन्त्रमुच्यते

समकोणसमचतुर्भुजां भित्तिं दक्षिणोदक्स्थां विधाय दक्षिणदिक्-स्थोर्ध्वकोणे केन्द्रं कृत्वा भित्तिप्रमाणव्यासार्द्धेन वृत्ततुर्यांशप्रमाणं क्षेत्रं कार्यम्। तत्र नवत्यंशाः कार्याः यथासम्भवं कलाश्चाङ्क्याः। केन्द्रे अभीष्टं[1] लोहशङ्कुं निधाय मध्याह्ने रवेश्छाया वेध्या। अधः सूत्रसम्पात-चिह्नाच्छायाग्रपर्यन्तं नतांशाः वेद्याः[2]। एवं प्रत्यहं वेधेन परमाधिकता परमाल्पता च नतांशानां ज्ञेया।

दक्षिणस्थपरमाधिकपरमाल्पनतांशान्तरार्द्धं परमक्रान्तिर्भवति। इयं[3] परमक्रान्तिरधिकाक्षदेशे[4] भवति। यत्र चोत्तरा नतांशाः परमाल्पा भवन्ति तत्र वृत्तं किञ्चिद्दक्षिणतोऽधिकं कार्यम्। तत्र परमाधिकपर-माल्पनतांशयोगार्द्धं परमक्रान्तिर्भवति।

अक्षांशाधिकक्रान्तिदेशे परमक्रान्तिः परमाल्पनतांशैर्हीना अक्षांशा भवन्ति। क्रान्त्यधिकाक्षदेशे तु परक्रान्तिः परमनतांशैर्युता अक्षांशाः भवन्ति।

अनेन यन्त्रेण इन्द्रप्रस्थे अक्षांशाः २८।३९ ज्ञाताः। परक्रान्तिश्च २३।३९।

यवनदेशे अ-ब-र-ख-सादिभिर्यवनाचार्यैः वेधेन उपलब्धा क्रान्तिः २३।५१।१९।

पुनः जूनानदेशे षट्त्रिंशदक्षांशयुते ब-त-ल-म-जूषेन वेधेन प्राप्ता क्रान्तिः २३।५१।१५।

---

१. अभिष्टं इति क पुस्तके पाठः।

२. वेध्या इति क पुस्तके पाठः।

३. इदं इति क पुस्तके पाठः।

४. क्रान्त्यधि······इति क पुस्तके पाठः।

पुनः समरकन्दनगरे अक्षांशैः ३९।३७। युतैः उ-लु- क-वे-गेन वेधेनोपलब्धा क्रान्तिः २३।३०।१७॥

अस्माभिः शालिवाहनशके १६५१ इन्द्रप्रस्थे अनेन यन्त्रेण वेधेन प्राप्ता क्रान्तिः २३।२८॥

एवं वेधेन क्रान्तिं ज्ञात्वा तयानुपातेन स्पष्टो रविः कार्यः। स यथा परमक्रान्तिज्यया २३।५३।३४।३२ त्रिज्ज्या ६० लभ्यते तदेष्टया क्रान्तिज्यया किमिति लब्धफलस्य चापं उत्तरक्रान्तावुपचीयमानायां रविर्भवति। अपचीयमानायां च भार्द्धांशशुद्धो[1] रविर्भवति। याम्यक्रान्तावुपचीयमानायां भार्द्धांशयुतो रविर्भवति। अपचीयमानायां भांशशुद्धो रविर्भवति। अयं रविः सायनो भवति।

ते चाऽयनांशा, एकपञ्चाशदधिकषोडशशते १६५१ शालिवाहनशके सप्तत्रिंशत्कलाधिकैकोनविंशदंशाः १९।३७। निश्चिताः। पुनरयनांशानां गतिः सप्तति ७० वर्षैरेकोंऽशो निश्चितोऽस्ति। प्रतिवार्षिकी गतिश्च विकलादिः ५१। प्रतिविकला २७। त्रिकला ५० इत्ययनांशगतिः।

## अथेष्टकालेऽयनांशानयनम्

गजाश्वनेत्रे २७८ रहिता शकाब्दाः, खसप्तभक्ता अयनांशकाः स्युः।
प्रत्यब्दजातायनजागतिस्तु, रूपाक्षतुल्या विकलाः प्रदिष्टाः॥ १॥

इति दक्षिणोदक्भित्तिसंज्ञं यन्त्रम्

## अथ वृत्तषष्ठांशसंज्ञं यन्त्रमुच्यते

अथ जलसमीकृतायां भूमौ दिक्साधनं कृत्वा याम्योत्तरा भित्तिः पूर्ववत् समकोणसमचतुर्भुजा कार्या। तस्यां दक्षिणतः किञ्चित् प्रदेशं त्यक्त्वा ऊर्ध्वा रेखा कार्या। एवमूर्ध्वपालौ याम्योत्तरा तत्समा रेखा कार्या। तद्योगे केन्द्रं कृत्वा किञ्चिदधिकचतुर्थांशमितं वृत्तं कार्यम्। तद्वृत्त-संलग्नं चतुरङ्गुलपुष्टं वृत्तं चूर्णेष्टकादिना कार्यम्। तत् श्लक्ष्णं कृत्वा तत्रांशाः यथासम्भवं कलाश्चाङ्क्याः। पुनस्तद्भित्तिसमा समानान्तर-हस्तद्वयान्तरेण अन्या भित्तिः पूर्वतः कार्या। तत्रापि वृत्तं तथैव विधेयम्।

---

१. शुद्धं इति क पुस्तके पाठः।

उत्तरतः द्वारं स्थापयित्वा सर्वं भित्त्यन्तरं मुद्रितं कार्यम्। एवं दक्षिणतोऽपि भित्त्यन्तरं मुद्रितं कार्यम। एवमुपरितनप्रदेशोऽपि पट्टिकादिना मुद्रितः कार्यः। भित्तिद्वयस्य दक्षिणकोणद्वयं ऊर्ध्वाधररेखातः कर्णाकारं छित्त्वा पट्टिकया पिहितं कार्यम्। छिन्नोभयकोणगतयाम्योत्तररेखायां ऊर्ध्वाधररेखासमीपे सूक्ष्मं सुषिरं कार्यम्। यथा तद्गता रविप्रभा मध्याह्ने वृत्ते पतति तथा कार्यम्। अनेन प्रकारेण यन्त्रं कृत्वा तदन्तर्गत्वा कपाटं दत्त्वा मध्याह्ने सुषिरगतां रविप्रभां वृत्ते प्रत्यहं विलोक्य क्रान्त्यक्षयोर्निश्चयः कार्यः। शेषं भित्तियन्त्रवद् ज्ञेयम्। इदं यन्त्रं यथा यथा महद्भवति तथा तथा वेधः सूक्ष्मतरो भवति। इदमेव यवनैः सुद्सफकरीत्युच्यते।

इति वृत्तषष्ठांशयन्त्रम्

## अथ यन्त्रसम्राडाख्यं यन्त्रमुच्यते

जलसमीकृतायां भूमौ दिक्साधनं कृत्वा याम्योत्तरा रेखा कार्या। तस्यां भित्तिः जात्यक्षेत्रसदृशी उदक्ध्रुवाभिमुखी यथा ध्रुवसूत्रं[1] तद्भित्तौ पतति तथा कार्या। कर्णाकारभित्त्यर्द्धे पूर्वपश्चिमान्यतरपालौ केन्द्रं कृत्वा पूर्वापरार्द्धे चन्द्रलेखासदृशान्तरावरणरहितो वृत्तचतुर्थांशः चूर्णेष्टकादिभिः कार्यः। एवमपरपालितोऽपि तादृश एव वृत्तचतुर्थांशः कार्यः। इदमर्द्धवृत्तं चतुरङ्गुलपिण्डयुतं हस्तमितपरिणाहं कृत्वा तत्पालिः पाषाणचूर्णादिना श्लक्ष्णा दृढा कार्या। अस्यां पञ्चदशघटिका यथा सम्भवं पलानि चाङ्क्यानि, भित्तौ ध्रुवाभिमुखः सोपानमार्गः कार्यः। इदमपि नाडीवलयमित्युच्यते। अत्र भित्त्युभयपालौ केन्द्राद् याम्योत्तराः त्रिज्याविभागतुल्याः षष्टिभागा अङ्क्याः। पुनर्वेधार्थं वृत्तपालिशकलसदृशी पट्टिका वृत्तपालिसंलग्ना यथा भवति तथा कार्या। तस्यां निखात्वा मध्यदीर्घसुषिरयुता द्व्यङ्गुला लोहपट्टी दृढा कार्या। इयं वेधपट्टी भवति।

## अथ वेधप्रकारः

पट्टिकां वृत्तपालौ निधाय लोहपट्टीसुषिरगतदृष्ट्या भित्तिपालि-

१. द्रवसूत्रं इति क पुस्तके पाठः।

संलग्नया च ग्रहर्क्षादिकं वेधयेत्। तदा अन्येन[1] सोपानमार्गेणारुह्य भित्तौ पट्टिकादि निधाय चिह्नं कार्यम्। तच्चिह्नकेन्द्रचिह्नान्तरे अंशादिकं ग्राह्यम्। तस्य छाया सारण्यां चापमंशादिकं ग्राह्यम्। सा वेधितग्रहर्क्षाणां क्रान्तिर्भवति। भित्तिनक्षत्रबिम्बदर्शनं भवति तावत् पर्यन्तं मूलाद् वेधस्थानपर्यन्तं नतकालो ज्ञेयः।

## अथ वेधेन नक्षत्रध्रुवकज्ञानम्

यथा रवेरस्तासन्नकाले रविं वेध्य नतकालो ज्ञेयः। स निरवयवो ग्राह्यः। तस्मिन्नेव समये घटीयन्त्रं स्थापयित्वा यावत्पर्यन्तं निरवयवा घटिका ग्राह्याः। ताः रविनतकाले योज्याः। तत्कालीनरविनतकालो भवति। तस्य रविविषुवघटीनां च योगे दशमकालो भवति।

अथ तस्मिन् समये अभीष्टनक्षत्रस्य वेधेन नतकालो ज्ञेयः। क्रान्तिश्च ज्ञेया। नक्षत्रं पूर्वकपाले चेन्नतकालो दशमघटीषु योज्यः।[2] पश्चिमकपाले चेच्छोध्यः। शेषः षड्गुणसायनदृक्कर्मसंस्कृतनक्षत्रध्रुवकस्य अंशात्मकः कालो भवति। तत्र क्रान्तिरुत्तराचेत्तदा तस्मिन् काले नवतिं संयोज्य क्रान्तितुल्याक्षांशपत्राल्लग्नं साध्यम्। तन्नवत्यंशैरूनं ध्रुवको भवति। क्रान्तिर्दक्षिणाचेन्नवतिं संशोध्य क्रान्तितुल्याक्षांशपत्राल्लग्नं साध्यम्। तन्नवत्यंशैर्युतं ध्रुवको भवति।

## अत्रोपपत्तिः

यस्मिन् देशे ग्रहर्क्षबिम्बं मस्तकोपरि भवति तद्गतध्रुववृत्तं तत्र याम्योत्तरवृत्तं भवति। तत्र स्पष्टा क्रान्तिरक्षांशाः भवन्ति। आयनदृक्कर्मसंस्कृतग्रहः दशमलग्नं भवति। तत्रत्यं वित्रिभं ध्रुवो भवति। वेधेन ज्ञातकालः दशमलग्नस्य कालो भवति। उत्तरक्रान्तौ तत्र नवतिर्योजिता चेत्तद्देशीय लग्नोदयो भवति। अस्माल्लग्नं साधयित्वा वित्रिभं कार्यम्। स वेधितनक्षत्रस्य ध्रुवको भवति। क्रान्तिर्दक्षिणाचेन्नवतिः शोध्या तद्देशीय लग्नोदयो भवति। अस्माल्लग्नं साधयित्वा सत्रिभं कार्यम्। स

---

१. वेधसहकारिणा।

२. योज्या इति क पुस्तके पाठः।

वेधितनक्षत्रस्य ध्रुवको भवति। उत्तरक्रान्तौ नवतिर्योज्यते। दक्षिणक्रान्तौ शोध्यते।

### तत्रोपपत्तिः

निरक्षादुत्तराक्षदेशे क्षितिजमुत्तरगोले उन्मण्डलादधो भवति। दक्षिणगोले उपरि भवति। दक्षिणाक्षदेशे एतस्माद् विपरीतं भवति। उत्तराक्षदेशे ये मेषादिद्वादशराश्युदयास्ते दक्षिणाक्षदेशे तुलादिद्वादशराश्युदया भवन्ति।

### अथ विषुवांश–स्पष्टक्रान्त्योर्ज्ञाने[1] शरायनम्

विषुवांशान् त्रिंशद्भिर्विभज्य राश्यादिकं कार्यम्। तस्य कल्पित स्पष्टेति संज्ञा कल्प्या। पुनरस्यान्यक्रान्तिर्ग्राह्या। पुनरस्याः स्पष्टक्रान्तेश्चैकदिश्यन्तरं भिन्नदिशि योगम्। एवं स्पष्टक्रान्त्यन्यक्रान्तिसंस्कारो भवति। पुनः संस्कारज्या सत्रिभकल्पितस्पष्टद्युज्यागुणा त्रिज्या भक्ता शरज्या भवति। अस्याश्चापं शरो भवति।

### अथ शरदिक् ज्ञानम्

यत्र संस्कारयोगस्तत्र स्पष्टक्रान्तिर्दिगेव शरदिग् भवति। यत्र चान्तरं तत्र स्पष्टक्रान्तिः सौम्यान्यक्रान्तिश्चाधिका चेद् अथवा अन्यक्रान्तिर्दक्षिणा स्पष्टक्रान्त्यधिका चेत्तदा शर उत्तरः। यदि च दक्षिणस्पष्टक्रान्तिरन्यक्रान्तेरधिका अथवा अन्यक्रान्तिरुत्तरा स्पष्टक्रान्तेरधिका तदा शरो दक्षिणः। एवं शरदिक् ज्ञानं भवति।

### अस्योपपत्तिः

तत्र प्रागुक्तमेव क्षेत्रं कार्यम्। तत्र नाडीवलयं क्रान्तिवृत्तं, क्रान्तिवृत्तं नाडीवलयं, ध्रुववृत्तं शरवृत्तं, शरवृत्तं ध्रुववृत्तं, स्पष्टक्रान्तिः शरः, शरः क्रान्तिः, एतानि परिकल्प्य विषुवांशस्पष्टक्रान्तिभ्यां शरसाधने वक्ष्यमाणोपपत्तिरूहनीयेत्यलम्।

इति यन्त्रसम्राडाख्यं यन्त्रम्

---

१. स्पष्टक्रान्त्यो इति क पुस्तके पाठः।

## अथ जयप्रकाशयन्त्रम्

तत्रादौ जलसमीकृतायां भूमावभीष्टकर्कटेन वृत्तं कार्यम्; तत्र दिक्साधनं कृत्वा पूर्वापरा याम्योत्तरा च रेखा कार्या। तद्वृत्तं कपालोदरवद् वर्तुलं गोलार्द्धमितं खननीयम्। एकं वृत्तार्द्धप्रमाणं धातुमयं दारुमयं बलयार्द्धं कार्यम्। तत्खनितगर्ते भ्रामणीयम्। यदि सर्वत्र संलग्नं सद् भ्रमति तदा तद् यन्त्रं शुद्धं जातमिति ज्ञेयम्। अथवा धातुमयं दारुमयं वा कपालवद् वर्तुलं गोलार्द्धमितं यन्त्रं कार्यम्। तद्वृत्तं पूर्वापर-याम्योत्तर-रेखाभ्यामङ्कनीयम्। रेखाद्वयसंपाते खस्वस्तिकं भवति। तत्र यन्त्रपालिः क्षितिजं भवति। क्षितिजे भांशाश्चक्रकलाश्चांक्याः।

अथ याम्यदिशि क्षितिज–याम्योत्तररेखासंपातादधः अक्षांशान्तरे याम्योत्तरेखायां चिह्नं कार्यम्। तद् दक्षिणध्रुवचिह्नं भवति। एवं उत्तरदिशि[1] क्षितिज-याम्योदग्रेखासंपातादूर्ध्वं अक्षांशान्तरे ध्रुवचिह्नं भवति। ध्रुवद्वयचिह्नं केन्द्रं कृत्वा परमक्रान्तिमितव्यासार्द्धेन वृत्तं कार्यम्। तत्कदम्बभ्रमवृत्तं भवति। कदम्बभ्रमवृत्तद्वये याम्योत्तररेखासंपाताद् दक्षिणवृत्तेऽधः संपातात् सौम्यवृत्ते ऊर्ध्वसंपातात्सव्यक्रमेण भांशाश्चक्रकलाश्चांक्याः। राशीनामुदयप्रमाणानि चांक्यानि। तानि उत्तरकदम्बभ्रमवृत्ते याम्योत्तररेखासंपातात् पश्चिमतः दक्षिणकदम्बभ्रमवृत्ते पूर्वतश्चांक्यानि।

अथ कदम्बे केन्द्रं कृत्वा पूर्वापरचिह्नस्पष्टं[2] कार्यम्। तत्क्रान्तिवृत्तं भवति। पुनः कदम्बभ्रमवृत्ते प्रतिराश्युदयांशेषु केन्द्राणि कृत्वा द्वादशराशीनां क्रान्तिवृत्तार्द्धानि कार्याणि।

अथ ध्रुवचिह्ने केन्द्रं कृत्वा व्यासार्द्धमितकर्कटेन वृत्तं कार्यम्। तन्नाडीवृत्तं भवति। एवं द्युज्यया षडहोरात्रवृत्तानि कार्याणि। याम्योत्तररेखानाडीवृत्तसंपातात् पूर्वापरदिशि पञ्चदशघटिकास्तासु यथा सम्भवं पलानि चांक्यानि। नाडीवृत्ते केन्द्रं कृत्वा प्रतिघटी ध्रुववृत्तानि कार्याणि। नाडीवृत्तयाम्योत्तरवृत्तसंपातादुभयतः (सौम्य) याम्योत्तररेखायां क्रान्त्यंशाः ज्ञेयाः।

---

१. उक्तदिशि इति क पुस्तके पाठः।

२. चिह्नस्पष्टं इति क पुस्तके पाठः।

अथ खमध्ये केन्द्रं कृत्वा प्रत्यंशमुन्नतवलयानि कार्याणि। तथा क्षितिजे केन्द्राणि कृत्वा प्रत्यंशं दिगंशवृत्तानि कार्याणि। दिने चतुःसूत्रछाया यस्मिन् क्रान्तिवृत्ते पतति तस्मिन्काले तल्लग्नं भवति। चतुःसूत्रसंपातछाया यत्र यत्र पतति तत्र नतघटिकाः ज्ञेयाः। चतुःसूत्रसंपातछाया यत्रोन्नतवलये पतति तत्रोन्नतांशाः। यद्दिग्वलये पतति ते दिगंशाः। यदि संपातो वृत्तान्तरे भवति तदा अनुपातात्कालकल्पना। इदं यन्त्रं मकराहोरात्रवृत्तादशांशमितं यन्त्रं स्थापयित्वा शेषं छित्त्वा निष्कासनीयम्। पुनर्याम्योत्तररेखातः पूर्वतः घटीमितं यन्त्रं याम्योत्तरं सर्वत्र छित्त्वा निष्कासनीयम्।

प्रणालिका कार्या यथा मनुष्यसञ्चारो भवति। तत्पूर्वतो घटींचतुष्टयान्तरं घटीमितं यन्त्रं छित्त्वा प्रणालिका कार्या सा कटिप्रमाणा भवति। एवमेव पश्चिमतः प्रणालिकाद्वयं कार्यम्। एवं तद्यन्त्रप्रणालिकापञ्चकं भवति। प्रणालिकाप्रान्ते अङ्गुलचतुष्टयमितं स्थापयेत् न तु सर्वं छेदयेत्। क्षितिजमपि यथास्थितं स्थापयेत्। यत्रावकाशः तत्रारोहणार्थं सोपानमार्गः कर्तव्यः। एवं यन्त्रं निर्माय वेधं कारयेत्। तत्र तावद्वेधप्रकार उच्यते।

यन्त्रप्रान्ते अभीष्टनक्षत्रं विध्वा तन्नतकालं साधयित्वा पूर्वोक्तप्रकारेण दशमलग्नं साधयेत्। पुनर्ग्रहबिम्बं याम्योत्तरसंलग्नप्रणाल्यां छित्त्वा याम्योत्तररेखायां दृक्चिह्नं कृत्वा चतुःसूत्रसंपातगतदृष्ट्या ग्रहर्क्षादिकं वेधयेत्। अन्यप्रणाल्यां वा वेधपट्टिकया वेधयेत् तत्र चिह्नं कार्यम्। यन्त्रपालौ वेधपट्टीं निवेश्याभीष्टनक्षत्रं विध्वा तन्नतकालो ज्ञेयः। नक्षत्रं पूर्वकपाले चेन्नक्षत्रघटीषु नतकालः शोध्यः। पश्चिमकपाले चेद्योज्यः। स दशमलग्नस्य कालो भवति। तस्माद् विषुवांशसारणीतो गणितेन वा दशमलग्नं साध्यम्।

## अथ वेधपट्टीकरणम्

यथा तद् यन्त्रस्थक्रान्तिवृत्तैकराशिपरिमिता वृत्तखण्डरूपा पट्टी कार्या। तस्यां निखात्वा प्रणालिका कार्या। एवमेव तावती पूर्वपट्टीकृतप्रणाली न्यूनविस्तारा द्वितीया कार्या। कदम्बवृत्तखण्डं राशिद्वयपरिमितमंशकलाद्यङ्कितं द्वितीयवृत्तार्द्धे दृढं कार्यम्। तद् वृत्तद्वयं त्रिंशदंशैस्तत्कला-

भिश्च यथा सम्भवमङ्कनीयम् । द्वितीयवृत्तं प्रथमवृत्तस्य प्रणाल्यां स्थापनीयम् । एवं वेधपट्टीं कृत्वा दशमलग्नस्यांशान् तत्र दत्त्वा चिह्नं कार्यम् । तच्चिह्नं याम्योत्तरवृत्ते स्थापनीयम् । तदूर्ध्वाग्रं दशमलग्नस्य राश्यहोरात्रवृत्ते स्थापनीयम् द्वितीयाग्रं तदग्रिमलग्नस्याहोरात्रवृत्ते स्थापनीयम् । एवं कृते तद्वृत्तखण्डं क्रान्तिवृत्ताकारं भवति । तत्पूर्वापराग्रयोः संलग्नाहोरात्रवृत्तयोः चिह्ने कार्ये । यदि वेधचिह्नं दशमात्पृष्ठतो भवति तदा क्रान्तिवृत्तखण्डं दशमलग्नराश्यहोरात्रवृत्ते लापनीयम् । पुनस्तद्द्वितीयाग्रं तत्पृष्ठगतलग्नराश्यहोरात्रवृत्ते लापनीयम् । यथा वेधचिह्नं राशिमध्ये आयाति तथा चालनीयम् । पुनः प्रणालीस्थं वृत्तखण्डं तथा चालनीयं यथा शरवृत्तं वेधचिह्नोपरि आयाति । क्रान्तिवृत्ताद् वेधचिह्नपर्यन्तं शरवृत्तखण्डे येंऽशास्ते शरांशा ज्ञेयाः । पूर्वाहोरात्रवृत्ताच्छरमूलपर्यन्तं येंऽशास्ते तदग्रिमराश्यंशाः भवन्ति । यदि दृक्चिह्नं दशमादग्रतो भवति तदा तत्क्रान्तिवृत्तमग्रतश्चालनीयम् । तथैव तत्रापि पूर्वोक्तप्रकारेण राश्यंशो ध्रुवकः शरश्च ज्ञेयः । इति जयप्रकाशवेधप्रकाशः ।

इति जयप्रकाशयन्त्रम्

## अथ क्रान्तिवृत्तं नाम यन्त्रमुच्यते

परालपद्युज्याप्रमाणेन एकं लोहमयं वृत्तं कार्यम् । तत्पूर्वापरयाम्योत्तरचतुरङ्गुलायामयन्त्रयुतं कार्यम् । पुनः त्रिज्यापरिमितव्यासार्द्धेन पत्राकारवृत्तं पित्तलस्य कार्यम् । तद्वृत्तं पाषाणादिघर्षणेन समीकृतं श्लक्ष्णं कार्यम् । तच्चतुःसूत्राङ्कितं भांशाङ्कितं च कार्यम् । तदेकपालिर्लोहे द्युज्यावृत्तकीलितः कार्यः । ऊर्ध्वसूत्रं कीलस्थाने लगति तथा कीलितः कार्यः । अधः सूत्रं द्युज्यावृत्ता(द्) द्विगुण परक्रान्तिज्यान्तरं यथा भवति तथा कलाधारेण युतं कार्यम् । एवमुभयपार्श्वेऽपि कीलाभ्यां[1] दृढं धारितं कार्यम् । पुनरायनपट्टिकायां समानान्तरं पलभाक्षेत्रद्वयं लोहादिनिर्मितं[2] कृत्वा स्थाप्यम् । तत्कर्णपट्योस्तिर्यक् लोहपट्टिका दृढा स्थाप्या । तदुपरि

१. कीलीभ्यां इति क पुस्तके ।

२. लोहादिनिर्मितं इति क पुस्तके पाठः ।

मध्ये छिद्रं कृत्वा किञ्चित्परालपद्युज्याधिकं पत्राकारं वृत्तं कीलितं कार्यम्। तस्मिन् पत्रे परालपद्युज्यावृत्तं कार्यम्। तस्मिन् षष्टिघटिकाः भांशाश्चाङ्कनीयाः। तस्मिन्मध्ये चतुरङ्गुलाधिकं दृढं कीलं कृत्वा पूर्वकृतं क्रान्तिवृत्तं चतुःसूत्रसंपातकृतछिद्रे प्रोतं कार्यं यथा भ्रममाणं भवति तथा कार्यम्। ऊर्ध्वसूत्रे क्रान्तिवृत्ते मकरास्यचिह्नं कार्यम्। अधःसूत्रे कर्कचिह्नं कार्यम्। पार्श्वयोर्मेषतुलाचिह्ने कार्ये। क्रान्तिवृत्तकेन्द्रे सूक्ष्मं चिह्नं कृत्वा वृत्तव्यासात्किञ्चिदधिका लोहपट्टिका वेधार्थं कार्या। तदेकतरप्रान्तस्तु क्रान्तिवृत्तपालिकृतांशेषु यथा भ्रमति तथा विधेयः। द्वितीयप्रान्ते वृत्ततुरीयं पट्टीसंलग्नकेन्द्रं यथा भवति तथा स्थापनीयम्। तुरीयपालौ नवत्यंशाश्चाङ्कनीयाः। तत्केन्द्रे नलिकायुतपट्टिका कीलेन प्रोता कार्या। यथा तदग्रं तुरीयवृत्तपालिकास्थांशेषु भ्रमति तथा कार्यम्।

इति यन्त्रनिर्माणप्रकारः।

## अथ वेधप्रकारः प्रोच्यते

यन्त्रान्तरान्मकरस्य नतघटिका वेधसमये ज्ञेयाः। स्वनतघटीषु मकरास्यं स्थापयित्वा तुरीयकेन्द्रगतनलिकया ग्रहर्क्षादिकं वेधयेत्। तुरीये यावन्तोऽशा बृहत्पट्टिकातो भवन्ति ते शरांशा ज्ञेयाः। बृहत्पट्टिकायाः सूक्ष्माग्रं यत्र लगति तत्र यद्राश्यादिकं तत्षड्राशियुतं ध्रुवकं[1] भवति।

अथ दक्षिणगोलस्थग्रहर्क्षवेधार्थं तुरीयकेन्द्रं पट्टिकातस्तुरीयत्रिज्यान्तरे कार्यम्। तुरीयपालिस्तु पट्टिका संलग्ना कार्या। अस्माभिरिदं यन्त्रं कर्मकारहस्तव्यासमितं कृतमस्ति। इति क्रान्तिवृत्तयन्त्रम्॥

इति यन्त्राऽध्यायः

## अथ ज्योत्पत्तिः

ज्योत्पत्तिं ये विजानन्ति त एवाचार्यसंज्ञिताः।
अतस्तां वच्मि विविधां गणकानन्दकारिणीम्॥ १॥
व्यासार्द्धमानेन विधाय वृत्तं समावनौ चक्रकलाङ्कितं च।
दिगङ्कितं प्रागपराख्यसूत्रयुक्तं भुजांशानुभयत्र दत्त्वा॥ २॥

१. ध्रुवको इति क पुस्तके पाठः।

तदग्रयोर्यद्धि निबद्धसूत्रं पूर्णज्यकाद्विघ्नभुजांशकानाम् ।
ज्यां ज्यार्द्धमेव प्रवदन्ति विज्ञाः यतस्तदर्द्धाग्रगतो ग्रहेन्द्रः ॥ ३ ॥
अतोऽत्र वृत्ते परपूर्वचिह्नतः भुजांशकानेकत एव दत्त्वा ।
तिर्यग्गतामध्यमसूत्रतश्च रेखा भवेद्या भुजसिञ्जिनीह ॥ ४ ॥
एवं हि याम्योत्तरसूत्रतश्च कोट्यंशसक्ता खलु कोटिजीवा ।
तद्वर्गयोगस्य पदं त्रिभज्या कर्णो भवेत्क्षेत्रमिदं हि जात्यम् ॥ ५ ॥
त्रिज्याकृतिर्दोर्गुणवर्गहीना तस्याः पदं कोटिलवज्यका स्यात् ।
कोटिज्यकावर्गविहीनितायास्त्रिज्याकृतेः स्याच्च पदं भुजज्या ॥ ६ ॥
दोर्ज्या विशुद्धा त्रिभसिञ्जिनीतः कोट्युत्क्रमज्या विशिखाभिधाना ।
कोटिज्यकोना यदि भत्रयज्या भुजोत्क्रमज्या प्रभवेत्तदानीम् ॥७॥
क्रमोत्क्रमज्ये भुजकोटिरूपे तद्वर्गयोगाब्धिलवस्य मूलम् ।
भवेद्भुजार्द्धांशकसिञ्जिनी वा प्रकारतस्तां प्रवदामि सम्यक् ।
व्यासोत्क्रमज्याहतितुर्यभाग मूलं तदर्द्धांशकसिञ्जिनीवा ॥ ८ ॥
व्यासाच्छरघ्नाच्छरवर्गहीनान्मूलं भुजज्याथ तदीयवर्गे ।
शरोद्धृताढ्ये खलुविस्तृतिः स्यात्तदर्द्धकोट्यन्तरतः शरः स्यात् ॥९॥
व्यासार्द्धमानं त्रिभसिञ्जिनीह भवेत्तदर्द्धं खगुणांशजीवा ।
त्रिज्याकृतेरर्द्धपदं तु यत्स्यात्तद्बाणवेदप्रमितांशजीवा ॥ १० ॥
त्रिज्यार्द्धवर्गादिषु सङ्गुणाच्च मूलं खरामांशकजीवयोनम् ।
तदर्द्धकं स्याद्धृति भागजीवा तत्कोटिजीवा द्विनगांशकानाम् ॥११॥
तस्यास्तदर्द्धांशकसिञ्जिनीस्यात्तत्कोटि जीवाकृतमार्गणज्या ।
पुनस्ततस्तद्दलभागकानां जीवा प्रसाध्या नगदस्रकानाम् ॥ १२ ॥

## अथ द्विगुणांश[१] जीवा

अन्योन्यकोटिज्यकया विनिघ्ने भुजांशजीवे त्रिभजीवयाप्ते ।
तल्लब्धयोगान्तरके क्रमेण चापैक्य चापान्तरजीवकेस्तः ॥ १३ ॥

## अथ चापज्या ज्ञाने सति चापतृतीयांशज्यानयनम्

दोर्ज्या विधाय करसङ्गुणितां त्रिभक्तां
कुर्यात्पृथक् फललवान्, गुणकः प्रवीणः ।

---

१. चापद्वययोगस्य चापान्तरस्य जीवानयनमित्यर्थः ।

व्यासार्द्धवर्गे विहृते धनके तु तेषां
भागावशेषसहितं फलमग्निभक्तम् ॥ १४ ॥

लब्धं कलालवतले विनिवेश्य पङ्क्तेः
कार्यो घनः प्रथमकेन घनेन हीनः ।
व्यासार्द्धवर्गविहृतः फलयुक्तशेषं
रामैर्भजेद्विकलिकास्तदधोनिवेश्याः ॥ १५ ॥

पङ्क्तेर्घनात्पूर्वघने विशोधिते त्रिभज्यकावर्गहृते तु यत्फलम् ।
भाज्यावशेषे सहितं विधाय मुहुस्तदग्रेतु विधिः पुरोक्तः ॥ १६ ॥
पङ्क्त्यर्द्धकं स्याद्धि धनुस्त्रिभागजीवाऽथ तां वच्मि पुनः प्रकारात् ।
भेदैरनेकैर्गणकस्य बुद्धिः, प्रवीणतामेति यतः स्वशास्त्रे ॥ १७ ॥
स्वत्र्यंशहीना भुजसिञ्जिनी वा पृथग्घनोऽस्यास्त्रिगुणस्य कृत्वा ।
त्रिघ्न्या हृतो लब्धियुता मुहुर्वा तदर्द्धकं चापगुणांशजीवा ॥ १८ ॥
भुजांशजीवा त्रिलवः पृथक्स्थः स्वत्र्यंशयुक्तेन घनेन तस्य ।
त्रिभज्यकावर्गविभाजितेन युक्तो मुहुः स्यात्त्रिलवस्य जीवा ॥ १९ ॥

पुनः प्रकारैः वक्ष्यामि चापत्र्यंशस्य सिञ्जिनी ।
खमखंभ्रंनखाश्चापं ०।०।२० गुणोरूपघनस्य च ॥ २० ॥
भुजज्यका स्वत्रिलवेन हीना घनेन तस्या गुणकाहतेन ।
युतामुहुस्तद्दलकं ज्यकास्याद्धनुः त्रिभागस्य पुरोक्ततुल्या ॥ २१ ॥
प्रकारान्तरतो वक्ष्ये चापत्रिलवमौर्विकाम् ।
रूपाणां गुणकश्चापं खमाकाशं धरानखाः ०।०।१।२०। ॥ २२ ॥

भुजांशमौर्वी त्रिलवः पृथक्स्थो घनेन तस्य खगुणाहतेन ।
युतो सकृद् वा धनुषस्त्रिभागमौर्वी भवेत् प्राक्ज्यकया समाना ॥ २३ ॥

## अथ चापज्ञाने सति पञ्चमांशज्यानयनम्

भुजांशज्यका पञ्चमांशः पृथक्स्थो घनस्तस्य विष्कम्भवेदांशकृत्त्या ।
हृताल्लब्धमाद्यो भवेत्तद्द्विनिघ्नः प्रसिद्धज्यकापञ्चमांशस्य वर्गः ॥२४॥
त्रिराशिज्यकायास्तु वर्गेण भक्तः फलं स्वीय पञ्चांशहीनं परः स्यात् ।
परोनेन चाद्येन युक्तः पृथक्स्थः स्फुटःस्यान्मुहुः पञ्चमांशस्य जीवा ॥२५॥

अथैतेषां श्लोकानां व्याख्या सोपपत्तिका लिख्यते। ज्योत्पत्तिमिति-स्पष्टार्थं पद्यम् ॥ १ ॥ व्यासार्द्धमानेनेति—जलसमीकृतायां भूमौ, अभीष्ट-त्रिज्यामितकर्कटेन वृत्तं कार्यम्। अत्रास्माभिः षष्टिमितैव त्रिज्या कल्पि-तास्ति। पुनर्वृत्तं चक्रकलान्वितं दिगङ्कितं प्रागपरसूत्रयुतञ्च कार्यम्। येषां भुजांशानां जीवाऽभीष्टाऽस्ति, ते भुजांशा उभयत्र देयाः ॥ २ ॥ तदग्रयोरिति—तदग्रगतं सूत्रं द्विगुणभुजांशानां पूर्णज्या भवति। प्राची-नैस्तु पूर्णज्यया व्यवहृतमाधुनिकास्तु ज्यार्द्धेन व्यवहरन्ति, उभयोः फलं तुल्यमेव। तज्ज्ञाः एतत्सकारणं वदन्ति। यतो ग्रहः ज्यार्द्धाग्रगत एव दृश्यते ॥ ३ ॥ अतो वृत्तेरिति—स्पष्टार्थं पद्यम् ॥ ४ ॥ एवमिति—पूर्वचिह्नादभीष्टस्थानपर्यन्तं भुजांशा भवन्ति। तेषां जीवा भुजज्या भवति। तिर्यक् चिह्नादभीष्टस्थानपर्यन्तं कोट्यंशा भवन्ति। तेषा जीवा कोटिज्या भवति। केन्द्रादभीष्टचिह्नस्थानपर्यन्तं त्रिज्यामितः कर्णो भवति। अयं भुजज्या-कोटिज्यावर्गयोगमूलतुल्यो भवति, तेनेदं जात्यक्षेत्रं भवति ॥ ५ ॥ त्रिज्याकृतिरिति-त्रिज्यावर्गो दोर्ज्यावर्गहीनः तस्य मूलं कोट्यंशज्या भवति। त्रिज्यावर्गः कोटिज्यावर्गहीनोऽस्य पदं भुजज्या भवति ॥ ६ ॥ दोर्ज्येति–दोर्ज्या भुजज्या त्रिभज्यातः शुद्धा शराभिधा कोट्युत्क्रमज्या भवति। भत्रयज्या कोटिज्योना भुजोत्क्रमज्या भवति ॥ ७ ॥ क्रमोत्क्रमज्येति–क्रमज्या भुज उत्क्रमज्या कोटिः। भुजवर्गकोटि-वर्गयोगचतुर्थांशमूलं भुजार्द्धांशज्या भवति, अथवा त्रिज्योत्क्रमज्ययोर्घा-तार्द्धस्य मूलं भुजार्द्धांशज्या भवति।

अत्रोपपत्तिः। समावनौ त्रिज्यामितव्यासार्द्धेन वृत्तं कार्यम्। तत्र पूर्वापरा रेखा कार्या पूर्व-रेखातो ज्ञातभुजांशानां दोर्ज्या देया। भुजा-ग्रात्पूर्वचिह्नपर्यन्तं भुजांशानां पूर्णज्या देया। भुजाग्रात्पश्चिमचिह्नपर्यन्तं भुजांशोनभार्द्धांशानां पूर्णज्या च देया। भुजपूर्णज्या-कोटिपूर्णज्यायोगे समकोणो भवति। भुजपूर्णज्या भुजो भवति। भुजोनभार्द्धांशानां पूर्णज्या कोटिर्भवति व्यासः कर्णो भवति। इदं जात्यक्षेत्रं जातम्। पुनर्भुजज्याव्याससूत्रसंपाते समकोणो भवति। भुजज्या कोटिर्भवति भुजोत्क्रमज्या भुजो भवति। भुजपूर्णज्या कर्णो भवति। इदमपि जात्य-मस्ति। एतत्क्षेत्रद्वयं कोणत्रयस्यैकभुजस्य च साम्यात्सजातीयं भवति।

अत्र भुजांशपूर्णज्यार्द्धं भुजार्द्धांशानां जीवा भवति। अत्रानुपातः—यदि द्विगुणत्रिज्यया भुजपूर्णज्या लभ्यते तदा भुजपूर्णज्यया किमिति लब्धं भुजोत्क्रमज्या, तेनेदं ज्ञातं भुजोत्क्रमज्या द्विगुणत्रिज्याघातः भुजपूर्णज्या वर्गो भवति। कुतः व्यासपूर्णज्ययोर्निष्पत्तिः पूर्णज्योत्क्रमज्यानिष्पत्ति-तुल्याऽस्ति, इत्युपपन्नम्। तन्मूलार्द्धं भुजार्द्धांशानां जीवा भवति॥ ८॥

क्षेत्रं यथा—




व्यासाच्छरघ्नादिति—उत्क्रमज्या-गुणितव्यासाद्युत्क्रमज्यावर्गः शोध्यते तदा भुजज्यावर्गोऽवशिष्यते तन्मूलं भुजज्या भवति। जीवावर्ग उत्क्रमज्या-भक्तः फलस्योत्क्रमज्यायाश्च योगः व्यासो भवति। व्यासार्द्धस्य भुजकोटिज्यायाश्चा-न्तरादुत्क्रमज्या भवति।

अत्रोपपत्तिः—पूर्वक्षेत्रेणैव सा यथा—व्यासोत्क्रमज्याघातो भुजपूर्णज्या[1] वर्गो भवति। तस्मिन्नुत्क्रमज्यावर्गे शोधिते भुजज्यावर्गोऽवशिष्यते तन्मूलं भुजज्या भवति, इत्युपपन्नम्।

अथ उत्क्रमज्या भुजे भुजज्या कोटिः भुजज्या भुजे का कोटिरिति लब्धिरुत्क्रमज्योनव्यासो भवति तदुत्क्रमज्यायोगः व्यासो भवतीति स्पष्टमेव॥ ९॥ व्यासार्द्धमानमिति—व्यासार्द्धमानं राशित्रयस्य ज्या भवति। तदर्द्धं त्रिंशदंशानां जीवा भवति। तत्कोटिज्या षष्ट्यंशा (६०) नां जीवा भवति। त्रिज्यावर्गार्द्धमूलं पञ्चचत्वारिंशदंशानां जीवा भवति। अत्रोपपत्तिः—वृत्तषष्ठांशस्य पूर्णज्या त्रिज्या तुल्या भवति। इति रेखा-गणिते चतुर्थाध्याये पञ्चदशे शकले प्रतिपादितमस्ति, अतस्तदर्द्धं त्रिंश-दंशानां जीवा भवति। त्रिज्यावर्गो द्विगुणितो नवत्यंशानां पूर्णज्या

---

१. व्या × उत्क्रमज्या = पूर्णज्या$^2$ इति कथमुच्यते। यथा—व्यास = २ त्रि। उत्क्रमज्या = त्रि − कोज्या। उत्थापनेन = २ त्रि ( त्रि − कोज्या ) = २ त्रि$^2$—२ त्रि० कोज्या = त्रि$^2$ + भुजज्या$^2$ + कोज्या$^2$—२ त्रि × कोज्या = भुज्या$^2$ + ( त्रि—कोज्या )$^2$ = भुज्या$^2$ + उज्या$^2$ = पूर्णज्या$^2$, इत्युपपन्नम्। भुज्या$^2$ = पूर्णज्या$^2$—उज्या$^2$ अस्य मूलं = भुज्या = इत्यपि सिद्धम्।

भवति, तच्चतुर्थांशमूलं शरवेदभागज्या भवतीत्युपपन्नम् ॥ १० ॥ त्रिज्यार्द्ध-वर्गादिति—त्रिज्यार्द्धस्य वर्गः पञ्चगुणः, अस्य मूलं त्रिंशदंशानां जीवयोनं तस्यार्द्धं अष्टादशांशानां जीवा स्यात्। तत्कोटिज्या द्विसप्तत्यंशानां जीवा स्यात् ॥ ११ ॥ अत्रोपपत्तिः—समावनावभीष्टत्रिज्यामितकर्कटेन व केन्द्रकं वृत्तं कार्यम्। तत्पूर्वापररेखाङ्कितं कार्यम्। पूर्वचिह्ने क चिह्नं कार्यम् क चिह्नात्षट्त्रिंशदंशान् दत्वा ग चिह्नं कार्यम्। कग पूर्णज्यावर्ग-रेखा च कार्या कग रेखा द पर्यन्तं स्वमार्गेण वर्द्धनीया यथा कदं कवं समानं भवेत्। कद रेखा ह चिह्नेनाङ्किता कार्या। दव रेखा च कार्या अत्र लघुत्रिभुजस्य कवग कोणप्रमाणं षट्त्रिंशदस्ति (३६) वकगकोणस्य ग कोणस्य च प्रत्येकप्रमाणं द्विसप्ततिमि(७२) तमस्ति। यतस्त्रिभुजस्य कोणत्रय-योगः भार्द्धांशमितोऽस्ति कव-कदयोः साम्यात् कवदकोणः कदवकोणश्चैतौ समानौ जातौ तेन दकोणः षट्त्रिंश-न्मितो जातः। ग कोणस्तूभयोरेक एवास्ति। तेन वगदं बृहत्त्रिभुजं कवगं




लघुत्रिभुजं सजातीयं जातम्। कग भुजप्रमाणं यावत्तावत्कल्पितं दग प्रमाणं या १ रु० ६० यदि गद रेखया वग रेखा लभ्यते तदा वगेन किमिति लब्धं यावत्तावत्। यावत्तावता यदा गद रेखा गुण्यते तदा वग वर्गसमाना भवति। कुतः गद-वग-रेखयोर्निष्पत्तिः, वगकग रेखा निष्पत्तितुल्याऽस्ति। तदेवं जातं याव १ या ६० रेखागणितस्य द्वितीया-ध्याये [1]षष्टि(षष्ठ ?)मिते शकले इदं प्रतिपादितमस्ति किं तदाह, अभीष्ट-रेखायां अन्यदभीष्टरेखाखण्डं योज्यं, संपूर्ण रेखाखण्डेन गुणनीयम्[2] तत्र बृहद्रेखार्द्धवर्गः योजितश्चेद्बृहद्रेखार्द्ध-योज्यखण्डयोर्योगस्य वर्गो भवति। स न्यायोऽत्र प्राप्तः। अत्र बृहद्रेखा त्रिज्यामितास्ति योज्यखण्डं यावत्ता-

---

१. द्वितीयाध्याये षष्टिमिताः प्रतिज्ञाः न सन्ति किन्तु मनुमिताः सन्ति। लेखकप्रमादेनाऽनुमीयते यत्षष्ठस्थाने षष्टि इति लिखितमस्ति मातृकासु। एतत्सर्वं षष्ठ्य प्रतिज्ञया सिद्धयति कद निर्दिष्टरेखाकल्पनेनेति।

२. गुणनीया, इति मातृकायां पाठः।

वन्मितमस्ति अनयोर्योगो यावत्तावत्तावता गुणितो जातः याव १ या ६०।
अत्र यदि त्रिज्यार्द्धवर्गो योज्यते तदा हग रेखा वर्गो भवति। त्रिज्या
वर्गेऽपि त्रिज्यार्द्ध-वर्गो योज्यते तदेवं जातौ पक्षौ अनयोः, याव १ या,
याव० या०, ६० रू ९००, रू ४५००, मूलं या १ रू ३०, रू ६७।४।५५।२०
हगरेखा प्रमाणं उभयमपि भवति। रूपेषु यदि कह रेखा त्रिज्यार्द्धमिता
शोध्यते तदा यावत्तावत्प्रमाणं भवति तदेवं जातं ३७।४।५५।२० इदं
षट्त्रिंशदंशानां पूर्णज्या प्रमाणं भवति। तत्कोटिजीवा द्विसप्तत्यंशानां
जीवा भवति इत्युपपन्नम् ॥ ११ ॥ तस्या इति—तस्याः द्विसप्तत्यंश-
जीवातः तदर्द्धांशकसिञ्जिनी षट्त्रिंशदंशजीवा साध्या तत्कोटिज्या
कृतमार्गणज्या चतुःपञ्चाशदंशानां जीवा भवति। पुनस्ततः चतुः-
पञ्चाशदंशानां जीवातः तद्दलभागकानां सप्तविंशतिभागानां जीवा
साध्या ॥ १२ ॥

## अथ चापद्वयजीवाज्ञाने सति, चापद्वययोगस्य चापान्तरस्य च जीवाज्ञानमाह।

अन्योन्येति—ज्ञातचापज्यके परस्परकोटिज्यागुणे त्रिज्यया भाज्ये फलं
द्वययोगः, चापद्वययोगस्य, जीवा भवति। फलद्वयान्तरं चापद्वयान्तरस्य
जीवा भवति। अत्रोपपत्तिः—मिजस्ति[1] ग्रन्थे प्रथमाध्यायस्य द्वितीय[2]क्षेत्रे
इदमुपपादितमस्ति। यद् वृत्तान्तश्चतुर्भुजं पतति तस्य मुखभूमिघातो
भुजघातयुतः कर्णघातसमो भवति, अत्रार्थे पद्यमपि—

वृत्तपाति चतुर्बाहुक्षेत्रे भूमिमुखाहतिः।
भुजद्वयाहतियुता कर्णघातसमा भवेत्।

तद्यथा कव जदं त्रिज्यया वृत्तं कार्यम्। कव रेखा वज रेखा जद रेखा
कज रेखा वद रेखा च कार्या कवह कोणः जवद कोणतुल्यः कार्यः हवद
कोण उभयत्र योज्यः, तदा जवहत्रिभुजं कवद त्रिभुजं सजातीयं भवति।

---

१. सिद्धान्तसारकौस्तुभे, इत्यर्थः।

२. अस्मत्सम्पादितसिद्धान्तसारकौस्तुभे विलोकनीया अस्योपपत्तिः।

कुतः जवह कोण-कवदकोणौ समानौ भविष्यतः। एवं कजव कोण-वदक कोणौ समानौ स्तः। तस्मात् जवह त्रिभुज-कवद त्रिभुजे सजातीये जाते। ततो वज रेखा जह रेखयोर्निष्पत्तिः वदरेखा कदरेखयोर्निष्पत्ति-तुल्या भविष्यति। तदा वज कद रेखयोर्घातः वद रेखा जह रेखयोर्घात-तुल्यो भविष्यति। पुनः कवहत्रिभुज-वजदत्रिभुजयोः कवहकोण-जवद कोणौ समानौ स्तः। एवं वकह कोण वदज कोणौ वज चापगतौ समानौ स्तः। तस्मात् कवहत्रिभुजं वजदत्रिभुजं सजातीयं जातम्। तदा कव कहयोर्निष्पत्तिः वद जद निष्पत्तितुल्या भविष्यति। तेन कव जद घातः वद कह घातसमो भविष्यति। तदा वज कदयोर्घातः कव जदघातयुतो वदजहघात-वदकहघातयोर्योगेन समानो भविष्यति। तदा वद रेखा जक रेखाघातेनाऽपि समानो भविष्यति। इदमेवास्माकमिष्टं सिद्धम्।



अथ क्षेत्रं यथा—

अथ प्रकृतमनुसरामः। तत्र क्षेत्रं यथा—त्रिज्यार्द्धमितकर्कटेन कव जदं वृत्तं कार्यं कव रेखा कार्या, सा त्रिज्यास्ति। कज वज रेखा वद रेखा दक रेखा जद रेखाश्च कार्याः। कद चापं कज चापं ज्ञातचापद्वयमस्ति। जवं वदं




ज्ञातचापयोः कोटी स्तः। एतेषां चापानां जीवाः, अस्मिनवृत्ते पूर्णज्या भवन्ति। कज रेखा कद रेखे ज्ञातचापद्वयज्ये स्तः। जव वद रेखे ज्ञातचापद्वयोः कोटिज्ये स्तः। जद रेखा चापयोगज्यास्ति। अयमस्मिन् क्षेत्रे कर्णो भवति। द्वितीयकर्णस्तु त्रिज्या तुल्या कव रेखाऽस्ति अत्र मुखं कज रेखा। भूमिस्तु दव रेखास्ति कद रेखा जव रेखे भुजौ स्तः। मुख-भूमिघातः प्रथमभुजज्या द्वितीयकोटिज्या घातो भवति। बाहुघातस्तु प्रथमकोटिज्या द्वितीयभुजज्या घातोऽस्ति। अनयोर्घातयोर्योगः कर्णघातो भवति। अन्यतरकर्णेनायं घातो भक्तश्चेत् द्वितीयकर्णो लभ्यते। अत्र कव कर्णः ज्ञातोऽस्ति। तेन घातयोगो भक्तश्चेल्लब्धं द्वितीयकर्णश्चाप-योगज्या भवतीत्युपपन्नं तृतीयं क्षेत्रम्।

अथ चापान्तरज्याज्ञानार्थं चतुर्थं क्षेत्रं यथा—अत्र कजं प्रथमचापज्यास्ति। कदं द्वितीया चापज्याऽस्ति। जवं प्रथमकोटिज्यास्ति। दवं द्वितीयकोटिज्यास्ति। कवं त्रिज्यामितं भूरस्ति। अत्र द्वितीयचापज्या प्रथमकोटिज्याघातः कर्णघातसमो भवति। अस्मिन् प्रथमचापज्या द्वितीयचापकोटिज्याघातो भुजघातसमश्चेच्छोध्यते तदा मुखभूमिघातस्त्रिज्याचापान्तरजीवाघातसम अवशिष्यते। अयं त्रिज्याभक्तः फलं चापान्तरजीवा भवतीत्युपपन्नम्।




*अथांशत्रयस्य जीवाज्ञाने सत्येकांशजीवाज्ञानं* दोर्ज्यामिति श्लोकचतुष्टयेनाह—करसंगुणितां द्विगुणां भुजज्यां त्रिभक्तां विधाय गणकप्रवीणः फलं अंशास्तान् पृथक् स्थापयेत् (तु) परं तेषां फलरूपांशानां घने व्यासार्द्धवर्गभक्ते सति यत्फलं तद्भागावशेषसहितं कृत्वा त्रिभक्तं कार्यम्। त्रिभक्ते यत्फलं कलात्मकं तत्पूर्वलब्धांशरूपफलाधः स्थाप्यं, सांशकलात्मिका पङ्क्तिर्जाता। पङ्क्तेर्घनः प्रथमघनेन हीनः व्यासार्द्धवर्गभक्तः फलं शेषे योज्यं त्रिभिर्भजेत् लब्धं फलं विकलाः कलाधः स्थाप्याः। सा अंश-कला-विकलात्मिका-पङ्क्तिर्जाता। पंक्तेर्घनः कार्यः, अस्मिन्पूर्वघनः शोध्यः, शेषे त्रिभज्या वर्गभक्ते यत्फलं तद्भाज्यावशेषसहितं कृत्वा मुहुर्वारं तदग्रे तु परं पुरोक्तो विधिः कार्यः। एवं कृते फलपङ्क्तिः स्यात्। पङ्क्त्यर्द्धं चापस्य तृतीयांशज्या स्यात्।

अथ इत्यनन्तरं तां त्रिभागजीवां पुनः प्रकाराद्वच्मि। यतः कारणादनेकैर्भेदैर्गणकस्य बुद्धिः स्वशास्त्रे प्रवीणतामेति ॥ १६ ॥

*पुनः प्रकारान्तरेण त्रिभागजीवामाह*—स्वत्र्यंशहीनेति–भुजज्या स्वतृतीयांशेन हीना पृथक् स्थाप्या। अस्याः घनस्त्रिघ्नस्य कृत्या त्रिघ्न्या भक्तः लब्धफलेन पृथक्स्था भुजज्या युता कार्या। मुहुरनया क्रियया पङ्क्तिः साध्या पङ्क्त्यर्द्धं चापगुणांशजीवा धनुस्त्र्यंशज्या स्यात् ॥ १७ ॥
पुनः प्रकारान्तरेणाह भुजांशजीवेति—भुजांशज्यायास्तृतीयांशः पृथक्

स्थाप्यः। तस्य घने स्वत्र्यंशयुते त्रिज्यावर्गभक्ते लब्धं यत्फलं तेन पृथक्-स्थो युतः कार्यः। एवं मुहुर्वारं वारं अनया क्रियया धनुस्त्रिभागजीवा स्यात् ॥ १८ ॥

*अस्योपपत्तिः*—सा यथा कवजदं षडंशचापं कल्पितं, पुनरस्य समानं भागत्रयं कल्पितं व चिह्न ज चिह्नयोः। तत्र कवं कजं कदं वजं वदं जदं चैताः पूर्णज्या रेखा योज्याः। अथात्र पूर्वोक्तप्रकारेणांशत्रयस्य जीवा ज्ञातास्ति। सा चेयं ३।८।२४।३३।५६।३४।२८।१४।५०। इयं द्विगुणा ६।१६। ४६।७।५६। ८।५६।२६।४०। जाता कद पूर्णज्या। अत्रांशद्वयस्य कवपूर्णज्या ज्ञानमिष्टमस्ति। अस्योपपत्त्यर्थं किंचिदुच्यते। तत्र [1]*सिद्धांतसंम्राजि प्रथमाध्यायस्य द्वितीयक्षेत्रे* इदमुपपादितं यच्चतुर्भुजं वृत्तान्तः पतति तत्सन्मुखस्थभुजानां घातयोगः तच्चतुर्भुजान्तःपातिकर्णद्वयघातसमो भवति, इत्यस्य, उपपत्तिस्तु पूर्वं कथितैवास्ति। पुनस्तत्रैव [2]प्रथमाध्यायस्य चतुर्थक्षेत्रे इदमुपपादितं इष्टचापार्द्धपूर्णज्यावर्गस्तच्चापोनभार्द्धांशपूर्णज्या व्यासान्तरगुणितं व्यासार्द्धतुल्यो भवति।

*अस्योपपत्तिः*। कज व्यासे कवदज वृत्तार्द्धं कार्यं तत्र वदं सममस्ति। कव रेखा कद रेखा वद रेखा दज रेखाः संयोज्याः। द चिह्नात् दझ रेखा कजव्यासे लम्बरूपा कार्या। अत्र जझ रेखा कजव्यासस्य ज्ञातचापोनभार्द्धांशपूर्णज्यायाश्चान्तरार्द्धमितास्ति। कुतः कवं कहं तुल्यं कार्यं दह रेखा योज्या। हकदत्रिभुज-दकवत्रिभुजयोः कहभुज-कदभुजौ वकभुज-कदभुजयोः क्रमेण समानौ स्तः। पुनः हकदकोणः वकद कोणेन समोऽस्ति। तस्मात् दहरेखा वदरेखा समाना जाता दजरेखाऽपि समाना जाता। तदा दज वर्गः दझ वर्ग जझ वर्गयोर्योगेन तुल्यो भविष्यति। एवं दह वर्गः, दझ वर्ग-झह वर्गयोगेन तुल्यो भविष्यति। तस्मात् झह जझं च समानं जातम् अनयोर्योगः कजकवयोरन्तरमस्ति। पुनः कदजत्रिभुजे द समकोणात् दझ लम्बः कर्णोपर्यागतोस्ति। तस्मात्कजस्य निष्पत्तिर्जदेन तथास्ति यथा जदनिष्पत्तिर्जझेन। तस्मात्कज जझ घातः दजवर्गेण समानो जातः। तदेतदुपपन्नमिष्टचापा-

---

१. अर्थात्सिद्धान्तसारकौस्तुभे, इत्यर्थः।

२. सिद्धान्तसारकौस्तुभे।

द्धपूर्णज्यावर्गः चापोनभार्द्धांशपूर्णज्या व्यासान्तरगुणितव्यासार्द्धतुल्यो भवतीति । शकलं[1] यथा—

अथ प्रकृतमनुसरामः एवमत्र कथितक्षेत्रे कव चाप जदचापे मिथः समाने स्तः ( [2]एवं कज वद चापे च समाने स्तः ) तस्मात्कवजदरेखा घातो वर्गो भविष्यति । अत्र वजमज्ञातं तद्यावत् तावन्मितं कल्पितम् । इदं कदेन गुणितं जातं या० ६।१६।४६।७।५६।८।५६।२६।४०। अस्य कव जद घातरूपयावद्वर्गस्य च योगः कजवर्गतुल्यकजवदघातेन समानोऽस्ति । अतोऽयं कजवर्ग तुल्यो जातस्तस्मात्कजवर्गराशौ एको वर्गराशिरेभिर्यावत्तावद्भिरधिको जातः । या० व० १ या ६।१६।४६।७।५६।८।५६। २६।४० ।

अस्य निदर्शनार्थं शकलं[3] यथा—

प्रकारान्तरेण कज वर्गः साध्यते । तत्र कज चापं भार्द्धांशेभ्यः शोध्यं शेषस्य पूर्णज्याया व्यासस्य चान्तरं कार्यम् । तेन गुणितं षष्टितुल्यव्यासार्द्धं कववर्गतुल्यं भविष्यति । यतः कज चापं कव चापाद्द्विगुणमस्ति । तस्माद्यदि कव वर्गः याव १ षष्टि ६० तुल्यव्यासार्द्धेन यदा भाज्यते तदा यावद् वर्गस्य षष्ट्यंशो लभ्यते तच्च कज चापोनभार्द्धांशपूर्णज्या व्यासान्तरस्य प्रमाणमस्ति । पुनरिदमन्तरं संपूर्णव्यासे १२० शोधितं याव $\frac{१}{६०}$ रु १२० इदं कज चापोनभार्द्धांशानां पूर्णज्या भवति। अस्याः वर्गः याव $\frac{१}{३६००}$ याव $\frac{२४०}{६०}$ रु १४४०० ।

अथ च यदीष्टचापपूर्णज्यावर्गः व्यासवर्गाच्छोध्यते तत्र यच्छेषं तच्चापोनभार्द्धांशानां पूर्णज्या वर्गो भवति । यतो व्यासेन इष्टचापपूर्णज्यया इष्टचापोनभार्द्धांशानां पूर्णज्यया चैकं समकोणत्रिभुजं भवति। यतो वृत्तार्द्धे व्यासप्रान्तादुत्पन्नत्रिभुजस्य पालिकोणः समकोणो भवति, इति *रेखागणितस्य तृतीयाध्याये उपपन्नमस्ति* । तत्त्रिभुजे समकोणसन्मुखभुजो व्यासोस्ति, स च कर्णरूपः पुनः कर्णवर्गः भुजकोट्योर्वर्गयोगेन समो भवतीति रेखागणितस्य प्रथमाऽध्याये उपपन्नम् । अतोऽत्र

१. अस्मत्सम्पादित सि० सा० कौ० द्रष्टव्यम् ।

२. कोष्ठान्तर्गतो निरर्थक इव भाति ।

३. अस्मत्सम्पादित सि० सा० कौ० विलोकनीयम् ।

व्यासवर्गः १४४०० कर्णवर्गरूपः । अस्मिन्निष्टचापोनभार्द्धांशानां पूर्णज्या-वर्गः याव व १/३६०० याव २४०/६० रू १४४०० शोधितः, शेषं कज पूर्णज्या-( वर्गोऽ ?)वशिष्टः याव व १/३६०० याव २४०/६० अयं द्वितीयप्रकारेण कज वर्गः सिद्धः ।

अथ प्रथमप्रकारागत–कजवर्ग याव १ या० ६।१६।४६।७।५६।८।५७। ४६।४०। एतौ समाविति समशोधनार्थं न्यासः याव व १/३६०० याव २४०/६० या० ।

अथ वीजगणिते समीकरण संप्रदायस्त्वनयारीत्यास्ति । याव व ० याव १, या ६।१६।४६।७।५६।८।५७।४६।४० । सा यथा यदि समयोः पक्षयोर्मध्ये एको राशिः ऋणश्चेत्तद्राशितुल्यं पक्षद्वये योज्यं तदापि पक्षद्वयं सममेव भवति । तस्मादत्र प्रथमपक्षे याव व १/३६०० इदं पक्षद्वये योज्यं, तत्र प्रथमपक्षे धनर्णयोस्तुल्यत्वाद्यावद्वर्गस्य नाशः, अवशिष्टं याव० २४०/६० अयं छेदभक्तः याव ४ अयं प्रथमपक्षः । पुनर्द्वितीयपक्षे याव व १/३६०० योजितः याव व १/३६०० याव १ या ६।१६।४६।७।५६।८ ५७।४६।४०। एतौ पक्षौ पुनरपि समानौ जातौ ( याव ४ या० याव १। याव व १/३६०० ६।१६।४६।७।५६।८।५७ ४६।४० ) ।

समपक्षयोर्मध्ये यौ राशी एकजाती भवतः । तत्र लघुराशिर्महद्राशौ शोध्यते तदापि पक्षौ समावेवावशिष्टौ भवतः । तस्मादत्र यो वर्गराशिः एकजातीयोऽस्त्यतो लघुराशिः याव १ महद्राशौ याव ४ शोधितः शेषं प्रथमपक्षः याव ३ द्वितीयपक्षे च ( याव व १/३६०० या ६।१६।४६।७।५६।८। ५७।४६।४० ) एतावपि समौ । पुनः पक्षद्वयमध्ये यद्येकः खण्डितोऽस्ति, द्वितीयपक्षः संपूर्णश्चेत्तदा खण्डितराशिं प्रपूर्य तावद्गुणं द्वितीयपक्षमपि कुर्वन्ति । अत्र सच्छेदराशिः खण्डित उच्यते । छेदरहितः संपूर्ण उच्यते । एवं कृते सति पक्षयोः समच्छेदत्वं विधाय छेदापगम एवोपपद्यते । तस्मादत्र द्वितीयपक्षे खण्डितराशिः याव व १/३६०० अयमर्थः । अत्र यावद्वर्गवर्गराशेः षट्शताधिकसहस्रत्रयमितोंऽशः यावद्वर्गवर्गराशि-रस्ति । तस्मादयं हरगुणितः क्रियते तावद्यावद्वर्गराशिरेको भवतीति द्वितीयपक्षोऽप्येतावता गुणनीयः । एवं कृते प्रथमपक्षे याव १०८०० द्वितीयपक्षे याव व १ ।

अथ प्रथमपक्षः वारद्वयं षष्ट्योर्ध्वीकृतः याव ३।

अथ द्वितीयपक्षस्य यावद्राशिस्तेनैव छेदेन ३६०० संगुण्य वारद्वयं षष्ट्योर्ध्वीकृतः या ६।१६ ४६।७।५६।८।५६।२६।४०। एवं जातौ पक्षौ समौ याव ३ द्विपरिवर्त्तो:—याव व १ या ६।१६।४६।७।५६।८।५६।२६।४०, एतौ यावत्तावतापवर्त्तितौ, या ३ द्विपरिवर्त्तो:—याव १। रू ६ १६।४६।७।५६। ८।५७।२६।४०, अत्र यावद् घनः सरूपराशिश्चेद्यावत्तावत्त्रयेण या ३ भाज्यते तदा यावत्तावत्प्रमाणं लभ्यते। अस्य भागग्रहणरीतिः पूर्वाचार्यैः एतावत्कालपर्यन्तं न लब्धा। अत्र यमशैदेन रीतिः प्रदर्शिता। सा यथा—रूपस्य प्रथमाङ्को यावत्तावता भाज्यः, लब्धिरेकान्ते स्थाप्या। पुनर्लब्धिघनं शेषांके योज्यं, पुनरत्र द्वितीयाङ्को यावत्तावता भाज्यः लब्धिः पूर्वलब्धेरधः स्थाप्या। पुनर्लब्धिद्वययोगस्य घनः कार्यः एवं तत्र प्रथमलब्धिघनः शोध्यः, शेषं द्वितीयलब्धिशेषे योज्यम् पुनस्तृतीयाऽङ्को यावत्तावता भाज्यः, इयं लब्धिः पूर्वलब्धिद्वयाधः स्थाप्या। पुनरस्य लब्धित्रययोगस्य घनः कार्यः, तत्र लब्धिद्वययोगस्य घनः शोध्यः, शेषं तृतीयलब्धिशेषे योज्यम् पुनस्तत्र चतुर्थाङ्को यावत्तावता भाज्यः एवमेवेष्टभागपर्यन्तं विधिः कार्यः। एवं यमशैदेन यावत्तावत्प्रमाणं निष्कासितं २।५।३६।२६।२२।२६।२८।३२।५२।३३। इयं अंशद्वयस्य पूर्णज्यास्ति। अस्यार्द्धं एकांशज्या जाता १।२।४६।४३।११। १४।४४।१६।२६।१७।

अस्य भागहरणोपपत्तिः—तत्र पक्षद्वयमध्ये एकपक्षे यावत्तावदस्ति। द्वितीयपक्षे यावत्तावद्घनः रूपराशिश्च। एवं तत्र यावत्तावद् ज्ञानं चेत्तदा यावत्तावद्घनं कृत्वा रूपराशौ प्रक्षिप्य यावत्तावता भाज्यते, तत्र लब्धिर्यावत्तावन्मानं स्यात्। अत्र तु यावत्तावद् ज्ञानं नास्त्यतो रूपराशिरेव यावत्तावता भाज्यः। यल्लब्धं तत्सरूपयावद्घनस्य कोप्यंशो लब्धिः। स चैकान्ते धृतः। पुनरस्य घनं कृत्वा शेषे योज्यम्। पुनरत्र यावत्तावता द्वितीयाङ्को भाजितः। एवं यल्लब्धं तत्पूर्वलब्धेरधः स्थापितम्। एवं लब्धं यावत्तावद्घनस्यासन्नो भागो लब्धः। अत्रासन्नताशेषावयवसत्वान्निरवयवत्वे एव सूक्ष्मा लब्धिः।

अथ लब्धिघने पूर्वघनं संशोध्यं, यतस्तदधिकं जातं एवमिष्टभाग-पर्यन्तं मुहुर्वारंवारं कार्यम्।

अथास्योदाहरणं—तत्र द्वितीयपक्षे रूपाणि ६।१६।४९।७।५९।८।५६। २९।४०। अत्र षट् द्विपरिवर्त्ताः षष्टेरूर्ध्वमस्ति। अत एकजातौ भागे गृहीते लब्धमंशाः २ पुनरस्य घनेंशाः ८ वारद्वयं षष्ट्या भक्ताः ०।०।८। विकलात्मकं विकलासु योजितं १६।५७। पुनः पूर्वलब्धिशेषं १६ तेनैव या ३ भक्तं लब्धाः कला ५ लब्धिः पूर्वलब्धेः २ अधः स्थापिता अंक २।५ पुनरवशिष्टं १।५७। पुनर्लब्धिद्वयस्य घनः अंक ९।२।३२।५। अत्र प्रथम लब्धिघनः ८ अं० शोधितः शेषं १।२।३२।५ इदं शेषे १।५७।७।५९।८।५६। २९।४०। अंशस्थाने योजितं १।५८।१०।३१।१३। पुनर्हरेण यत्र अंशे ५८ भागो गृहीतः। लब्धिविकलात्मिका ३९ शेषं अं० १।१०।३१।१३। पुनरियं लब्धिः पूर्वलब्धेरधः स्थाप्या २।५।३९ अस्य घनोंशादिः ९।११।२।३२।२७। ४३।३९। अत्र द्वितीयघनः ९।२।३२।५ शोधितः शेषं कलादिः ८।३०।२७। २७।४३।३९। इदं शेषाङ्केषु १।१०।३१।१३ योजितं। १।१९।१।४१।२४।१३।१९। पुनरत्र कलास्थाने भक्तं ल० २६। पूर्वलब्धेरधः स्थापिता २।५।३९।२६ शेषं कलादि १।१।४१।२४।१३।१९। पुनर्लब्धेः २।५।३९।२६ घनः ९।११।८। १४।३३।१२।२३।२१।४।५६ तृतीयघनोऽत्र शोधितः, विकलास्ववशिष्टं ५।४२।५।२८।४४।२१।४।५६ पुनरिदं शेषाङ्के योजितं क० १।७।२३ २९।४२। ३ २१।४।५६। पुनस्तेनैव भक्ते लब्धं २२। शेषं १।२३।२९ ४२।३।२१।४।५६ पूर्वलब्धौ योजितं २।५।३९।२६।२२ अस्य घनः ९।११।८।१९।२२।४१।६। ५२।१५।१।५६। चतुर्थघनोऽत्र शोधितः शेषं ४।४९।२८।४३।३१।१०।५।५६। इदं शेषे योजितं १।२९।१९ १०।४६।५२।१५।१।५६ पुनर्हरभक्तः लब्धं २९। शेषं १।१९।१०।४६।५२।१५।१।५६। पुनर्लब्धिरधः स्थिता २।५।३९।२६।२२। २९। अस्य घनः ९।११।८।१९।२९।२।४२।१।३९।५०।५२ अत्र पञ्चमघनः शोधितः शेषं ६।२१।३५।९।२४।४८।५६। इदं शेषे योजितं १।२५।३२। २२।१।३९।५०।५२। पुनरयं हर या ३ भक्तः लब्धं २८ शेषं १।३२।२२।१। ३९।५०।५२ लब्धिः पूर्वलब्धेरधः स्थापिता २।५।३९।२६।२२।२९।२८ अस्य घनः ९।११।८।१९।२९।८।५०।२७।१९।५९।४३। अत्र षष्ठघनः शोधितः शेषं ६।८।२५ ४०।८।५१। शेषे योजितं १।३८।३०।२७।१९।५९।४३ पुनर्हर-

भक्तं लब्धं ३२। शेषं २।३०।२७।१६।५६।४३ लब्धिः पूर्वलब्धेरधः स्थापिता २।५।३६।२६।२२।२६।२८।३२ अस्य घनः ६।११।८।१६।२६।८।५७।२८।२३।३७।१। अत्र सप्तमघनः शोधितः शेषं ७।१।३।३७।१८ इदं शेषे योजितं २।३७।२८।२३।३७।१ हरभक्ते लब्धं ५२ शेषं १।२८।२३।३७।१ लब्धिः पूर्वलब्धेरधः स्थापिता २।५।३६।२६।२२।२६।२८।३२।५२ अस्य घनः ६।११।८ १६।२८।८।५७।३६।४७।५०।१६ पुनरत्राष्टमघनः शोधितः शेषं ११।२४।१३।१८ शेषे योजितं १।३६।४७।५०।१६ हरभक्तः लब्धं ३३ शेषं ०।४७।५० १६ ल० पूर्ववत् २।५।३६।२६।२२।२६।२८।३२ ५२।३३ एतत्पर्यन्तं गृहीतम् ।

अथात्र यावत्तावन्मानानयनार्थमुपायान्तरमाविदेननिष्कासितम् । तद्यथा रूपाणि यावत्तावता भाज्यानि लब्धेर्घनः कार्यः । पुनर्घनोपि यावत्तावता भाज्यः । यल्लब्धं तत्प्रथमलब्धौ योज्यं, पुनस्तस्य घनः कार्यः एवमसकृत् ।

*अत्रोपपत्तिः*—इह पूर्ववद्यावत्तावता भक्ते रूपराशौ कश्चिद्यावत्तावतो भागो लब्धः । पुनस्तस्य घनं कृत्वा तद्योजनेन वास्तवघनस्यासन्नता जाता । एवं मुहुः स्थिरीभूतं तदेव घनस्वरूपराशेर्यावत्तावतो भाग उपलब्धः । स एव यावत्तावन्मानमुपपन्नम् । *अत्रोदाहरणम्*—रू ६।१६। ४६।७।५६।८।५६।३०। इयं यावत्तावत् षष्टेर्द्विरूर्ध्वपरिवर्त्तेन या ३ भक्ते यल्लब्धं फलं २।५।३६।२२।३६।४२।५८।५०। अस्य घनः ६।१०।२८।३।८। ५२ ५।३६। पुनरयं तेनैव या ३ भक्तः फलं ०।०।३।३।२६।२१।२।५७ इदं प्रथमलब्धौ योजितं २।५।३६।२६ ६।४।१।४७ अस्य घनः वारद्वयं षष्ट्या भक्तः जातो विकलात्मकः ०।०।६।११।८ १६।३२।३०।४८।६। पुनरयं तेनैव भक्तः लब्धं ०।०।३।३।४२।४५।३० ५० इदं—प्रथमलब्धौ योजितं जातं ५।३६।२६ २२।२८।२६।४० अस्य घनः ६।११।८।१६।२८।३६।२३।५०। पुनस्तेनैव भक्तः लब्धं ०।०।३।३ ५२।४६।२६।३६। प्रथमलब्धौ योजितं २।५।३६।२६।२२।२६।२८।२६। अस्य घनः ६।११।८।१६।२६।८।५६।५१। पुनस्तेनैव या ३ भक्तः लब्धं ०।०।३।३।४२।४६।२६।४२ इदं प्रथमलब्धौ योजितं २।५।३६ २६।२२।२६।२८।३२। अस्य घनः ६।११।८।१६।२६।८।५७ २८। पुनस्तेनैव भक्तः लब्धं ०।०।३।३।४२।४६।२६।४२। प्रथमलब्धौ

योजितं २।५।३६।२६।२२ २६।२८।३२। अयं स्थिरीभूतः। इयं अंशद्वयस्य पूर्णज्या जाता।

अथ मिर्ज़ोलुग्बेगोक्तप्रकारेणांशद्वयस्य पूर्णज्या निष्काश्यते। तत्र पूर्वोक्तमेव क्षेत्रं कार्यम्। तत्र व चिह्नात् वह लम्बः कज रेखायां निष्काश्यः। तत्र कवह त्रिभुजे जवहत्रिभुजे ह कोणः समकोणोऽस्ति। कव वर्गः कह हवयोर्वर्गयोगतुल्योऽस्ति। पुनर्वजवर्गः जह हवयोर्वर्गयोग-तुल्योऽस्ति। वहमुभयोस्त्रिभुजयोरेकमेवास्ति। तस्मात्कह हजौ मिथः समानौ भविष्यतः। कव वर्गः वहस्य व्यासस्य च घातेन समानोऽस्ति। तस्माद्यदि कव वर्गो व्यासेन भाज्यते तदा लब्धं वह प्रमाणं भवति। पुनर्यदि वह वर्गः कव वर्गाच्छोध्यते तदा शेषं कहवर्गोऽवशिष्यते। अत्रांशद्वयस्य पूर्णज्या रूपा कव रेखा यावत्तावन्मिता कल्पिता। या १ अस्य वर्गः याव १ व्यासः १२० षष्ट्योर्ध्वीकृतः २ एकपरिवर्त्तः। अनेन कव वर्गो याव १ षष्टेरेकपरिवर्त्तेन २ भक्ते लब्धं यावद्वर्गादर्द्धकला सा च यावद्वर्गस्य त्रिंशत्विकलात्मिका ३०। यावत्तावतः अंशात्मकत्वादिदं वह-प्रमाणं जातम्। अस्य वर्गः यावद्वर्ग वर्गस्य पञ्चदश प्रति विकलाः जाताः १५। इदं कव वर्गाच्छोधितं शेषं कह वर्गः याव १ याव व० १५ प्रति विकला कह वर्गः कज वर्गस्य चतुर्थांशतुल्योस्ति। तस्मात्कज वर्गः याव ४ याव व १ विकला।

अथ [1]मिजस्तीग्रन्थस्य प्रथमाध्यायस्य द्वितीयक्षेत्रे इदमुपपन्नम्। कज वद घातः कज वर्ग रूपः कव जद घातस्य वज कद घातस्य च योगेन तुल्योस्ति। तत्र कद प्रमाणं ६।१६।४९।७ ५९।८।५६।३० वजं अव तुल्यं यावन्मितमस्ति। तस्माद् वजं कदेन गुणितं सदेतावन्ति यावत्ता-वतानि जातानि या० ६।१६।४९।७।५९।८।५६।३०। कव वर्गरूप कव जद घात याव १ तस्मादिदं याव ४ याव व १ विक० अं० अस्य याव १ या ६।१६ ४९।७।५९ ८।५६।३०। समानं जातम्। पुनरेतौ समशोधितौ तत्रैक-पक्षे याव ३ याव व १ वि क० या० ६।१६।४९।७।५९।८।५६।३०। एतौ समानौ स्तः। अत्र समयोस्त्र्यंशौ चेद् गृह्येते तदा तावपि समानौ

1. सिद्धान्तसारकौस्तुभग्रन्थस्येत्यर्थः।

भविष्यतः। अत्र पक्षौ त्रिभक्तौ याव १ याव व २० या रू २।५।३६।२२।३६।४२।५८।५०। प्रतिविकला पुनरेतौ यावत्तावतापवर्त्तितौ यथा—या १ याव २० रू २।५ ३६।२२।३६।४२ ५८।५० त्र तादृशस्येष्टाङ्कस्य चिकीर्षास्ति। यस्याङ्कस्य रूपराशिस्थिताङ्कस्य चान्तरं तदङ्कघनस्य विंशतिप्रतिविकलात्मकं भवति। स एवाङ्क इष्टो भवति। तस्योत्पादनेऽयमुपाय उपलब्धः। रूपाणां घनः कृतः ८।१०।२८।३।८।५२ ५।३६ इदं विंशति प्रतिविकलाभिर्गुणितं ०।०।३।३।२६।२१।२।५७। रूपेषु योजितं २।५।३६।२६।६।४।१।४७। अस्यघनः ६।११।८।१६।३२।३०।४८।६। पुनस्तेनैव प्र० वि० २०, गुणितः-०।०।३।४२।४६।२६, रूपेषु योजितः, २।५।३६।२२।२६।२८।२६ पुनरस्यघनः ६।११।८।१६।२८।५६। २३।५० पुनस्तेनैव प्र० वि० २० गुणितः ०।०।३।३।४२।४६।२६।३६ रूपेषु योजितं २।५।३६।२६।२२।२६।२८।३२ इदमंशब्दयस्य पूर्णज्यारूप इष्टाङ्को जातः। यदास्य घनः क्रियते विंशतिप्रतिकलाभिर्गुण्यते रूपे योज्यते तदा स एवाङ्को भवति।

अथ मिर्जोलुग्वेगस्य द्वितीयः प्रकारः—

तत्र कवजदं चापं षडंशानां कल्प्यम्। यस्य वृत्तस्येदं चापं तद्वृत्तकेन्द्रं तं कल्पनीयम्। पुनः प्रत्येकं कवचापं वज चापं जदचापमंशद्वय (स्य ?)कल्पितम्। कब–कज–कद–वज–वह–जद पूर्णज्याः संयोज्याः। पुनः कव पूर्णज्या कज पूर्णज्या कदपूर्णज्यानां ह झ व चिह्नेष्वर्द्धं कार्यम्। पुनस्तह रेखा तझ–तव–रेखाः संयोज्याः। एता रेखाः प्रत्येकं तासु पूर्णज्यासु लम्बरूपा भविष्यन्ति। पुनः कत रेखा व्यासार्द्धं संयोज्य(ज्या ?)म्। पुनस्तत अचिह्नेऽङ्कितं कार्यम्। पुनः अचिह्ने केन्द्रं कृत्वा अक व्यासार्द्धेन वृत्तं कार्यम्। तत्र कहत कोण कझत कोण कवतकोणाः समकोणाः सन्ति। तदा वृत्तार्द्धमेतत् हझ पूर्णज्यासु निष्काश्यः। तत् हललम्बः कझ पूर्णज्यासु निष्काश्यः। तदा कझपूर्णज्या लचिह्नेष्वर्द्धिता भविष्यति। तत्र झव रेखया कजभुज–कदभुजयोरर्द्धस्थाने कर्त्तितम्। तदा झव रेखा जद रेखायाः समानान्तरा भविष्यति। तस्मात्कजद त्रिभुज–कझवत्रिभुजे मिथः सजातीये भविष्यतः। कवं कदस्यार्द्धमस्ति। झवं जदस्यार्द्धं भविष्यति। पुनरनेनैव प्रकारेण हझरेखा वजस्यार्द्धं भविष्यति। कहं कव–स्यार्द्धमस्त्येव। तस्मात् कह–

हझ-झवपूर्णज्याः मिथः समाना भविष्यन्ति। पुन अचिह्नात्, अल लम्बः कझ पूर्णज्यायां निष्काश्यः। अयं लम्बः कझरेखां ल चिह्ने ऽद्धितं करिष्यति। पुनरयं वद्धितः सन् ह चिह्ने लगिष्यति। तस्मात्कहमेकांशज्या यावत्तावन्मिता कल्प्या। पुनः कवं अंशत्रितयस्य ज्या एतावत्यस्ति ३।८।२४।३३।५६।३४।२८।१५। यदि कह वर्गः याव १ कतरेखया ६० भाज्यते तदा लब्धिरेका कला यावद्वर्गस्य भविष्यति। इदं हलप्रमाणमस्ति यथा पूर्वमुपपन्नम्। अस्य वर्गः यावद्वर्गवर्गस्य विकला भविष्यति। अयं कह वर्गे शोधितः शेषं कलवर्गो भविष्यति। स च याव १ यावव १ विकला कझवर्गस्य चतुर्थांशः ४ कल वर्गोऽस्ति। तस्मात्कझवर्गः याव ४ यावव ४ विकला। पुनः कझ हवघातरूपः कझवर्गः कझहव घातरूपवतवर्गस्य हझ कव घातस्य च योगेन तुल्योऽस्ति। कहवर्गश्चैतावान्--याव १ हझ कवघातश्च ३।८।२४।३३।५६।३४।२८।१५। अयं द्वितीयप्रकारेण कझवर्गः सिद्धः।

एतौ समाविति समशोधनार्थं न्यासः यथा--याव ४ यावव ४ विकला याव १ या ३।८।२४।३३।५६।३४।२८।१५। अत्र संप्रदायेन शोधने कृते सति प्रथमपक्षे याव ३ यावव ४ विकला द्विपक्षे या ३।८।२४।३३ ५६।३४।२८।१५ अनयोस्त्र्यंशावपि समानौ तस्मात् त्रिभिरपवर्त्तितौ याव १ यावव १ वि० रू० १।२।४८।११।१६।५१।२६।२५। अवशिष्टावेतावपि समौ पुनरेतौ यावत्तावतापवर्त्तितौ जातौ पक्षौ या० १ याव ३० वि० रू १।२।४८।११।१६।५१।२६।२५ प्र० वि०। यद्यत्र तादृशाङ्को लभ्यते, यस्याङ्कस्य पुनः रूपस्य चान्तरं अङ्कघनस्यैककला विंशतिप्रतिविकलातुल्यं भवेत्। स चानेन प्रकारेण निष्कासितः। तत्र रूपानां घनः अंशादि १।८।४८।३०।२३।२६।३० अयमेकया कलया विंशतिप्रतिकलाभिश्च ४२।१८ गुणितः ०।०।१।३१।४४। ४०।३।२८।४१ अंशकलास्थानयोरभावात् स्थानद्वये शून्यं निवेशितं रूपेषु संयोज्य जातं १।२।४६।४३।४। ३२।०।५३।४१ अस्य घनः १।८।५३।३२।४।३।५०।५६।१४।५७ पुनरयमेतेन १।२० गुणितः ०।०।१।३१।५१।२२।४५।२५।८ रूपेषु संयोज्यं १।२।४६।४३। ११।१४।५०।८ अस्य घनः १।८।५३।३६।२६ ७।१८।०।२२।१० पुनरयं तेनैव १।२० गुणितः ०।०।१।३१।५१।२३।१४।४६।२० रूपेषु संयोज्यं १।२।४६।४।

११।१।४४।१६।३० अस्य घनः १।८।५३।३२।२६।३७।५:३४ पुनस्तेनैव १।२० गुणितः ०।०।१।३१।५१।२३।१४।५१।२६ रूपेषु संयोज्यं १।२।४६। ४३।११।१४।४४।१६।२६ अयमिष्टाङ्को जातः। अत इयमेकांशज्या सिद्धा। कुतः। यतोऽस्य घने अनेन १।२० वि० गुण्यते रूपेषु योज्यते तदायमेव भवति। तस्मादयमेव एकांशज्या जाता, इदमेवेष्टम्।

अथात्र मिर्जोलुग्वेगेन यद् द्वितीयप्रकारेण क्षेत्रं प्रदर्शितं तत्र बहुरेखा प्र० संयोगः कृतः।

अथात्र यथाल्परेखाभिरेव सिध्यति तथा यतितमाविदसंज्ञैः। तत्र तावदेव कव-ज-द चापं पूर्वोक्ता एव पूर्णज्याः संयोज्याः। कवपूर्णज्यार्द्धरूपं कह एकांशज्यास्ति। सा यावत्तावन्मिता कल्पिता या १ कव रेखा, या २ एवं वज या २ जद या २ यत एता मिथः समानाः सन्ति। पुनः कदरेखा ६।१६।४६।७।५६।८।१६ अनया वज या २ गुणितं कवजद घातयुतं जातं, याव ४ या १२।२३।३८।१५।५८।१६।३३।० अयं जातः कज वर्गः। पुनः प्रकारान्तरेण कजवर्गः साध्यते। कववर्गः याव ४ अयं व्यासेन २ षष्टेरेकोर्द्धपरिवर्त्तेन भक्तो लब्धं यावद्वर्गस्य कलाद्वयं २ इयमंशद्वयस्य उत्क्रमज्या जाता। अस्याः वर्गः यावव ४ विकला कववर्गे शोधितः शेषं यावव ४ विकला। अयमंशद्वयज्यावर्गो जातः। अयं चतुर्गुणितः याव १६ यावव १६ विक० अयं सिद्धः कजवर्गः। एतौ पक्षौ समौ समशोधनार्थं न्यासः—याव ४ या १२।२३ ३८।१५।५८। १६।३३। याव १६ तावव १६ विकला शोधिते शेषं याव १२ यावव १६ या १२।२३।३८।१५।५८।१६।३३ पुनर्द्वादश यावत्तावतापवर्त्यो याव १ याव १।२० वि. रू १।२।४८।११।१६।५१।२६।२५ इदं मिर्जोलुग्वेगेन निष्कासितं बहुप्रयासेन।

अथ प्रकारान्तरेण अंशजीवानयनम्--

हरादनुमानेन फलं ग्राह्यं पूर्वपङ्क्तौ शून्यद्वयं स्थाप्यम्। तदधः फलं स्थाप्यम्। पुनः पुनः पङ्क्तिफलगुणिता हरे विकलास्थाने विशोध्यं शेषं स्पष्टहरो भवति। उपरि शून्यद्वयस्य विद्यमानत्वाद् विकलास्थानमागतमेव। पुनर्लब्धिगुणं हरे विशोध्यं पङ्क्तिस्थफले फलं योजयित्वा फलेन पङ्क्तिर्गुणनीया। इयं यथास्थाने विशोध्यम्। ततः पङ्क्तिस्थफले फलं

पुनर्योज्यम् । पङ्क्तिमस्तके एकं शून्यं निवेश्यम् । ततो हरमुत्सार्य अनुमानेन फलं ग्राह्यम् । फलं पङ्क्तौ निवेश्यम् । ततः पङ्क्तिः फलगुणिता हरे विशोध्यं शेषं स्पष्टहरो भवति । पुनर्लब्धिगुणं हरं भाज्ये विशोध्य पङ्क्तिस्थफले फलं योजयित्वा फलेन पङ्क्तिर्गुणनीया ।

इयं हरे यथास्थाने विशोध्य ततो पङ्क्तिस्थफले फलं पुनर्योज्यम् । पङ्क्त्यूर्ध्वं एकं शून्यं स्थापनीयम् । ततो हरमुत्सार्य अनुमानफलं ग्राह्यम् । एवं मुहुः ।

अथोदाहरणम् । भाज्यः ६।१६।४६।७।५६।८।५३।२६।४० हरः ३ हरेण ३ अनुमानात्फलं गृहीतम् २ । पूर्वं पङ्क्तौ शून्यद्वयं स्थाप्यं, ततः फलं स्थाप्यं ०।०।२। पुनः पङ्क्तिः फलगुणिता हरे विकलास्थाने शोध्यं शेषं स्पष्टहरो भवति २।५६।५६ अनेन भक्ते लब्धं २, फलगुणितं हरं भाज्ये विशोध्य शेषं ०।१६।५७।७।५६।८।५६।२६।४० पुनः पङ्क्तिस्थफले फलं योजयित्वा फलेन पङ्क्तिर्गुणनीया ८ इदं हरे यथास्थाने विशोध्य शेषं २।५६ ४८ पङ्क्तिस्थफले फलं पुनर्योज्यम् । पङ्क्तिमस्तके एकं शून्यं निवेश्यं ०।०।०।६ ततो हरमुत्सार्य पुनरनुमानेन फलं ग्राह्यं, ५ फलं पङ्क्तौ निवेश्यं ६।५। ततः पङ्क्तिफलगुणिता ३०।२५ हरे विशोध्य शेषं स्पष्टहरो भवति २।५६।४७।२६।३५ । पुनर्लब्धिगुणं हरं भाज्ये विशोध्य शेषं १।५८।१० ३१।१३ पङ्क्तिस्थफले $\frac{६}{५}$ फलं ५ योजयित्वा $\frac{६}{१०}$ फलेन पङ्क्तिर्गुणनीया $\frac{३}{५}$ इदं हरे यथास्थाने विशोध्य शेषं २।५६।४६।५८।४५ पुनः पङ्क्तिस्थफले फलं योज्यं $\frac{६}{१५}$ पङ्क्तिमस्तके एकं शून्यं स्थापनीयम् । ततो हरमुत्सार्य अनुमानफलं ग्राह्यं, शेषं पूर्ववत् । एवं मुहुः । अत्रोपपत्तिः—श्रीमहाराजाधिराजजयसिंहदेवैर्निष्कासितास्ति । सा यथा—अत्र सिद्धान्ते त्र्यंशज्यासाधनम् ।

दोर्ज्या त्रिभागस्य घनं तु तावत्कृत्वा हृतोऽयं त्रिगुणस्य वृत्तम् ।
स्वत्र्यंशयुक्तेन फलेन युक्तो दोर्ज्या त्रिभागः.............. ॥

अनेन प्रकारेणासकृत् त्र्यंशज्या साधनं कृतमस्ति । अत्र स्वत्र्यंशयुक्तफलेन दोर्ज्या त्रिभागः युक्तो विधीयते । अथवा स्वत्र्यंशयुक्तफलं त्रिगुणं विधाय दोर्ज्यायां संयोज्य पश्चात्त्रिभिर्विभजनेनापि तुल्यमेव फल-

मायाति। अत्र तु ज्ञातदोर्ज्या पूर्णज्यात्वेन ज्ञातास्ति। तस्मात्स्वत्र्यंश-युक्तफलं षड्गुणं विधाय पूर्णज्यायां संयोज्य त्रिभिर्विभाज्यं फलं त्र्यंशज्या भवति। षड्गुणस्य त्र्यंशफलं तु पूर्णज्यात्र्यंशस्य घनः वारद्वयं षष्टिभक्त इति सिद्धम्।

अथ विस्तरेण विषुवांशक्षेत्रमुच्यते। तत्र श्लोकाः—

अर्द्धसंपूर्णगोलस्यायनवृत्ते विधाय च।
मेषसंपातगोलाख्यसन्धिमूर्ध्वस्थितं तथा॥ १॥
समायां भुवि संस्थाप्यं भूसंलग्नं भवेद्यथा।
वृत्तमायनसंज्ञञ्च वृत्तस्यास्य तु केन्द्रकम्॥ २॥
पृष्ठसंज्ञं गोलसन्धिगर्भचिह्नं भवेद् भुवि।
केन्द्रनिष्कासनं ज्ञेयं रेखागणिततो बुधैः॥ ३॥
संपातयोर्ध्रुवावंक्यावुद्वृत्तायनवृत्तयोः।
क्रान्तिवृत्ते गोलसन्धे भुजांशा ध्रुवकावधि॥ ४॥
भवन्ति भूमेः कोट्यंशा अथ गोलस्य सन्धितः।
भूपर्यन्तञ्च वृत्तानां सर्वेषां खण्डकं तु यत्॥ ५॥
तन्नवत्यंशकमितं प्रसिद्धमिव सर्वतः।
रविबिम्बोपरिगतं ध्रुववृत्तं तु यद् भवेत्॥ ६॥
तदिष्टवृत्तसंज्ञं स्यादिति ज्ञेयं विशारदैः।
ध्रुवाद् भानोश्च बिम्बान्तं द्युज्याचापं भवेत्किल॥ ७॥
कृतं तेन तु यद्वृत्तं द्युज्यावृत्तं भवेदिह।
गोलमध्यादथ पुनर्भुजांशैः कृतवृत्तकम्॥ ८॥
भुजांशवृत्तसंज्ञं स्यादिष्टवृत्तध्रुवाख्ययोः।
द्वौ संपातौ भवेतां हि नाडीवृत्तात्समान्तरौ॥ ९॥
संपातद्वयसंबद्धं सूत्रं पूर्णज्यका भवेत्।
भुजांशवृत्तगर्भाख्यकेन्द्रमूर्ध्वाधराह्वये॥ १०॥
कोटिसूत्रान्तरे सूत्रे तत्केन्द्रात्क्रान्तिवृत्तके।
भुजज्याग्रहपर्यन्तं तत्केन्द्राद्विषुवद्वृत्तौ॥ ११॥
अपि बाह्वंशवृत्तान्तं तावती भवति ध्रुवम्।
नाडीवृत्ते यत्र लग्नमिष्टाख्यं ध्रुववृत्तकम्॥ १२॥

तच्चिह्नं विषुवांशानां भवतीति विनिश्चयः ।
अथ स्वाभीष्टवृत्तस्थमध्यसूत्रस्य वै तथा ॥ १३ ॥
नाडीवृत्तगबाह्वंशसूत्रस्य च युतिर्भवेत् ।
अवश्यं पूर्णजीवार्द्धे तेन जात्यं भवेत्किल ॥ १४ ॥
तत्र कोटिगर्भकेन्द्राद्युतिपर्यन्तमस्ति हि ।
क्रान्तिजीवा भुजोऽप्यत्र दोर्ज्याकर्णो भवेत् ध्रुवम् ॥ १५ ॥
कोटिर्यदा द्युजीवाग्रे त्रिज्याग्रे किं भवेत्तदा ।
विलब्धफलचापं यद् विषुवांशा घटीवृत्तौ ॥ १६ ॥
पूर्णज्यार्द्धं चेष्टवृत्ते भुजोच्छायां वृत्तावपि ।
क्रान्त्यंशानां भवेज्जीवा एकैवेयं विनिश्चयः ॥ १७ ॥
गोलगर्भाख्यकेन्द्रात्तु योगान्तं यच्च सूत्रकम् ।
तद्युज्यासंज्ञकं ज्ञेयं ग्रहान्तं त्रिज्यका भवेत् ॥ १८ ॥
द्युज्यात्रिज्ये कोटिकर्णौ भुजः स्यात्क्रान्तिसिञ्जिनी ।
जात्यक्षेत्रं भवेदेतद् द्वितीयं गोलगर्भगम् ॥ १९ ॥
नाडीवृत्तावधि पुनर्गोलगर्भाख्यसूत्रतः ।
सूत्रं धरायां नेयञ्च क्रान्तिवृत्तान्तमच्युत ॥ २० ॥
नाडीसूत्राद्भूसूत्रान्तपर्यन्तं चापि सिञ्जिनी ।
देया परापमांशानां त्र्यस्रं भूमिगतं भवेत् ॥ २१ ॥
भुजज्यया गर्भकेन्द्रात्कार्यं वृत्तं मनीषिणा ।
तत्रापि भुजसूत्राग्रपर्यन्तं नाडिका गुणात् ॥ २२ ॥
रेखा देया ज्यावदस्याः ज्ञानं स्यादनुपाततः ।
तद्यथा त्रिज्यया लभ्या परक्रान्तिज्यका तदा ॥ २३ ॥
इष्टया दोर्ज्यया किं स्याल्लभ्यं··········।
सायनग्रहदोर्ज्यातो परक्रान्तिज्यका गुणा ॥ २४ ॥
त्रिज्ययाप्ता लब्धधनुरिष्टक्रान्तिज्यका भवेत् ।
इष्टापमोस्याश्चापं स्यादसौ सायनगोलदिक् ॥ २५ ॥
अस्माद्विलोमानुपातात्परक्रान्तिर्भवेदपि ॥

अथोत्क्रमज्या प्रकारः—

ज्यावर्गं व्यासार्द्धवर्गे शोध्यं शेषस्य मूलं नवत्यूने चापे अर्द्धव्यासे

हीनं, नवत्यूर्ध्वे चापे अर्द्धव्यासयुतं उत्क्रमज्या भवति। कवचापज्या वह संज्ञा वहवर्गं त्रदवर्गे शोध्यशेषं मूलं दहसंज्ञं इयमुत्क्रमज्या। यदि हदं जदे योज्यते तदा जहसंज्ञं उत्क्रमज्या वजचापस्य भवति। उदाहरणम्। द्विसप्तत्यंशानां, उत्क्रमज्या आनीयते। तद्यथा। द्विसप्तत्यंशज्या ५७।३। ४८।१२।२।७।३।११ अस्य वर्गः ५४।१६।१३।५५।७।२५।४५।५८ त्रिज्या-वर्गात् ३६०० शोध्यशेषं ३५।४५।४३।४६।४५।२।३४।१४।२ अस्य मूलं १८।३२।२७।४०।१४।४६।३३ त्रिज्यायां ६० हीनं ४१।२७।३२।१६।४५।१२। २७ इयं द्विसप्तत्यंशोत्क्रमज्या, इयमेव व्यासार्द्धयुता अष्टोत्तरशतांशाना-मुत्क्रमज्या जाता। योगान्तरज्या

अथ प्रकारान्तरेण ज्यासाधनम्—

पूर्वं तु पूर्णज्याभिर्ज्ञातचापयोर्योगान्तरज्यानयनमुक्तम्। अधुना, अर्द्धज्याभिरेव ज्ञातचापयोर्योगान्तरज्यानयनमुच्यते। कवजदं वृत्तार्द्धं कार्यं कवं प्रथमचापं, वजं द्वितीयचापं, कजं योगचापं तस्य ज्या ज्ञेयास्ति। कहं व्यासार्द्धं हं केन्द्रं प्रथमचापज्या वधं, द्वितीय चापज्या जतं, योगज्याजसं, ज्ञेयम्। जतहत्रिभुजे तं समकोणोऽस्ति। तहं कोटिज्यास्ति। वहधत्रिभुजे धं समकोणोस्ति। धहं कोटिज्यास्ति। पुनः, तयलम्बः कह रेखायां कार्यः। तहय त्रिभुजं वधह त्रिभुजस्य सजातीयं, जतअत्रिभुजं, तलअ त्रिभुजस्य सजातीयम्। तलअत्रिभुजं लहस त्रिभुजस्य सजातीयम्। लहस त्रिभुजं तहय त्रिभुजस्य सजातीयं, तस्मात् जतक त्रिभुजं वहध त्रिभुजस्य सजातीयं जातम्।

अथानुपातः—हवकर्णे वधंभुजस्तदा हतकर्णे किमिति लब्धं तयं। इदं अस समम्। पुनरनुपातः—वहकर्णे हधं कोटिस्तदा जत कर्णे का कोटिः लब्धं जअं। जअ-असयोर्योगः कजचापस्य जीवा जसं सिद्धम्।

उदाहरणम्—अष्टादशांशानां जीवा ज्ञातास्ति। सा चेयं १८।३२।२७ ४०।१४।४६।३३ कोटिज्या ५७।३।४८।१२।२।७।३'१५। त्रिंशदंशानां जीवा ३० कोटिज्या ५१।५७।४१।२६।१३।५८।५८ इयमष्टादशांशजीवा त्रिंशदंश-जीवागुणिता त्रिज्याभक्ता फलं २८।३१।५४।६।१७।७ जातेयमष्टाचत्वा-रिंशदंशज्या।

अथ चापयोर्ज्ञाने चापान्तरज्यानयनमुच्यते—

ज्ञातचापज्ये परस्परकोटिज्यागुणे त्रिज्याभक्ते फलान्तरं चापान्तरज्या भवति। अस्योपपत्तिः—पूर्ववत् कद व्यासे ह केन्द्रकं कवजदं वृत्तार्द्धं कार्यम्। कवचापज्या वधं, कजचापज्या जभं, अन्तरचापस्य जवस्य जीवा तवं इयं ज्ञातास्ति। अत्र शकले हज रेखायां धय लम्बः योगज्या कार्यः। धय रेखायां वअ लम्बः कार्यः। हधय त्रिभुजं हजभ त्रिभुजस्य सजातीयम्। हजकर्णे जभ कोटिः, तदा हध कर्णे का कोटिरिति लब्धं धयं प्रथमफलं, पुनः वअध त्रिभुजं हधय त्रिभुजस्य सजातीयं, धयकर्णे धहं लभ्यते तदा वधकर्णेन किमिति लब्धं धअं द्वितीयफलं, अनयोरन्तरं, अयं वत तुल्यं भवति। इयमेव चापान्तरज्या।

अत्रोदाहरणम्—अष्टादशांशज्या त्रिंशदंशकोटिज्यागुणा त्रिज्याभक्ता फलं १६।३।२५।१०।४२।४५।३० त्रिंशदंशज्या अष्टादशांशकोटिज्यागुणा त्रिज्याभक्ता फलं २८।३१।५४।६।१३।३१।३७ अनयोरन्तरं १२।२८।२८।५५।३०।४६।७ जातेयं द्वादशांशज्या।

अथ क्षेत्रं चापान्तरज्याज्ञानाय—

अथ चापज्याज्ञाने सति चापपञ्चमांशज्यानयनं-भुजांशज्यकेति। ज्ञातभुजांशानां जीवायाः पञ्चमांशः द्विधा स्थाप्यः। एकत्र घनः कार्यः। स त्रिज्यार्द्धकृत्या भाज्यः लब्धमाद्यो भवति। तेनाद्येन ज्या पञ्चमांशस्य वर्गः गुणनीयः, त्रिज्या वर्गेण भाज्यः लब्धं परो भवति। पर आद्ये शोध्यः शेषं पृथक्स्थज्या पञ्चमांशे योज्यं, पुनस्तस्य घनः कर्त्तव्यः। त्रिज्यार्द्धकृत्या भाज्य आद्यो भवति। आद्य गुणितः पञ्चमांशवर्गः, त्रिज्या-वर्गभक्तः फलं स्वपञ्चमांशोनं परो भवति।

परोनआद्यज्या पञ्चमांशे योज्यः। पुनस्तस्मात्पूर्ववत्क्रियां कृत्वा मुहुः पञ्चमांशः साध्यः, यावदविशेषः, असौ चापपञ्चमांशज्या भवति। अत्रोपपत्तिः—अत्र ज्ञातभुजकोटिज्याभ्यां समा सभावनया द्विगुणित-भुजांशानां भुजज्या कोटिज्ये भु. को. २, त्रि. १। भु. व. १ को. व. १, त्रि. १। अत्र पूर्वभुजकोटिज्याभ्यां समासभावनया जाते त्रिगुणितभुजां-शानां भुजज्या कोटिज्ये भु. व. ४ त्रि. व. भु. ३, त्रि. व. १। को. भु. व. ४ त्रि. व. को. ३, त्रि. व. १ एवं द्विगुणभुजांशानां दोर्ज्याकोटिज्याभ्यां

तुल्यसमा सभावनया जाते चतुर्गुणितभुजांशानां दोर्ज्यो कोटिज्ये भु. व. को. ४ को., घ. भु. ४ त्रि. घ. १। भु. व. व. १ भु. व. को ६ को., व. व. त्रि. घ. १। अत्रापि पूर्वदोः कोटिज्याभ्यां समासभावनया पञ्च-गुणितभुजांशानां भुजज्या कोटिज्ये भु. घ. को. व. १ को. व. व. भु. ५, भू. व. व. भू. १ त्रि. व. व. १। भु. व. व. को. ५ भु. व. को. व. १०, को. व. व. को ४ त्रि. व. व. १, अत्र पञ्चगुणितभुजांशज्याखण्डेषु भुजज्यावर्गोनत्रिज्यावर्गो भवतीति कोटिवर्गं उत्थाप्यैवं स्वरूपमुत्पन्नम्। भु. घ. त्रि. व. २० त्रि. व. व. भू. ५ भु. घ. भु. व. १६, त्रि. व. व.। अत्र भुजज्या ज्ञानात् भुजस्थाने यावत्तावदव्यक्तं निवेश्य ज्ञातज्या सममिति पक्षौ या. घ. त्रि. व. २० या. त्रि. व. व. ५ या. घ. या. व. १६, त्रि. व. व. ज्या। समत्वात्तयोः पक्षयोः—या. घ. त्रि. व. २० या. घ. या. व. १६, या. घ. त्रि. व. २० या. घ. या. व. १६ त्रि. व. व. ज्या, या. त्रि. व. व. ५। संयोज्य जातौ पक्षौ पञ्चगुणितेन त्रिज्यावर्गवर्गेण भजने ऊर्ध्व-पङ्क्त्यां पञ्चांशज्यैव। अधःस्थिते तत्तुल्यपक्षे अव्यक्तखण्डे ज्या पञ्चमांशः सिद्धः। तस्य घनं कृत्वा प्रथमाव्यक्तखण्डे आद्यसंज्ञ उपपन्नः। द्वितीया-व्यक्तखण्डे अन्यसंज्ञ उपपन्न इति तयोर्द्धनर्णयोरन्तरेण युक्तो ज्या पञ्चमांशः स्फुटो ज्या पञ्चमांशः स्यात्। पुनस्तस्मादाद्यान्यद्वारा स्फुटो ज्या पञ्चमांशः, इत्यसकृत् स्थिरो ज्या पञ्चमांशः। पञ्चमांशजीवेत्युप-पन्नम्। इति पञ्चमांशज्योपपत्तिः।

इति ज्यासाधनं सोपपत्तिकं संपूर्णम्।

## अथ यन्त्रनिर्माणकारकम्

पुष्पवतोर्ग्रहणे उदयास्तयोर्ग्रहस्पष्टीकरणे(यदा)चान्तरं दृष्टं तदा यन्त्र रचना कृता इन्द्रप्रस्थे अवन्त्यां तथा काश्यां मथुरायां सवाई जयपुरे च सर्वत्र यन्त्ररचना कृता। पूर्वं प्राचीनमिजस्तिकर्ता वतलमजूषेन यन्त्रै-र्ग्रहनक्षत्रवेधं कृत्वा निश्चयः कृतः। तदनन्तरं समरकन्दनगरे उल्कवेग-नाम्ना यन्त्रैर्ग्रहनक्षत्रवेधं कृत्वा निश्चयः कृतः। ततो वर्षत्रयानन्तरं श्रीमहाराजाधिराजजयसिंहप्रभुवर्याणामाज्ञया यन्त्ररचना जाता। पूर्वं यवनैर्जातुलहलकं नाम गोलापरपर्यायं धातुमयं यन्त्रं कृत्वा वेधः कृतः। तत्रायं दोषः यद्धातूनामतिभारतया क्रान्तिवृत्तं कदम्बस्थानान्नमति। तस्य नम्रतया वेधे त्रिंशत्कलात्मिका अशुद्धता भवति। एवं दृष्टं तदा

श्रीमहाराजाधिराजजयसिंहदेवैर्नवीनया युक्त्या जयप्रकाशयन्त्रं कृतम्। अस्य कर्तव्यता यन्त्राध्याये द्रष्टव्या। गोलयन्त्रेण यत्कार्यं सिद्ध्यति तदनेनापि सिद्ध्यति। इदं यन्त्रं स्थिरमस्ति।

अस्मिन्नशुद्धता ग्रहणं न भवति। यावन्मितः स्पष्टखेट आकाशे भवति स एव जयप्रकाशयन्त्रेण शुद्ध आयाति इति वेधेन ज्ञातम्। गणितं कृत्वा दृश्यते चेदन्तरं पतति अस्मिन् जयप्रकाशे यथास्थितः स्पष्ट आयाति।

अन्यच्च यन्त्रराजात्समयज्ञानं वायनदृक्कर्मग्रहज्ञानं भवति। स यन्त्रराजो महान् भवितुं नार्हति यतस्तत्र वृत्तनिष्पादनार्थं महती यष्टिः कृता चेत्सा नवति वृत्तं शुद्धं न भवति। तेन वेधेन ध्रुवकः शुद्धो नायाति।

अथ पुनर्यन्त्रसंम्राडाख्यं अर्द्धचन्द्रसदृशं अष्टादशकर्मकारहस्तव्यासार्द्धमितं कृतमस्ति। तत्करणप्रकारो वेधप्रकारश्च यन्त्ररचनाध्याये द्रष्टव्यः। अनेन क्रान्तिज्ञानं नतघटिकाज्ञानं च भवति। अथ क्रान्तिनतघटीभ्यां ध्रुवकज्ञानमुक्तमेवास्ति। अथ यवनैर्दिगंशोन्नतांशज्ञानार्थं जातुः शुकवतैनाख्यं यन्त्रमुक्तमस्ति। तस्य वेधपट्टी अतिमहती भवति तच्चालनार्थं मनुष्यबाहुल्यं चलति तदातिकष्टेन वेधो भवति सोपि यथा समये न भवति। वेधपट्टी च महत्वान्नमति तेन वेधः शुद्धो नायाति। नतांशेप्यन्तरं भवतीमं दोषं ज्ञात्वास्माभिर्दिगंशोन्नतांशज्ञानार्थं रामं यन्त्रं स्थिरं कल्पितमस्ति। अस्मिन्यन्त्रे यथास्थितं दिगंशोन्नतांशज्ञानं भवति रामयन्त्रद्वयं कार्यं तस्मिन्वेधार्थं यावदंशमिता वीथी स्थाप्या भवति तावती स्थापनीया। यावान्वीथीविस्तारतस्तत्तुल्या पट्टी चूर्णेन पाषाणेन वा कार्या एवमेव द्वितीयरामयन्त्रमपि कार्यम्। परन्तु प्रथमरामयन्त्रे यत्र पट्टीकृता द्वितीयरामयन्त्रे तत्र वीथी स्थाप्या यदा वेधकर्तुमपेक्षा भवति तदैव वेधः कार्यः। एकस्मिन् रामयन्त्रे वेधावरोधश्चेत् द्वितीययन्त्रवीथीषु ग्रहर्क्षादिकं वेध्यम्। ईदृशः प्रकारः कृतः येनाशुद्धता न भवति।

अनया रीत्या सर्वत्र यन्त्रैर्वेधः कारितः। सूर्यस्य निश्चयः कृतः इन्द्रप्रस्थे सवाई जयपुरे च नित्योद्भवा मध्यनतांश विद्धाः मेषासन्न-

राशी मीन-वृष-कन्या-तुलागतेषु भास्करेषु वेधत्रयं शुद्धं गृहीतम्। तस्माद्वेधत्रयात्पूर्वोक्तप्राचीनप्रकारेणापि फलं मन्दकेन्द्रं मध्यग्रहश्च निष्कासितः । समध्यमः वेधितयवनग्रहान्नव ९ कलामितोधिक आगतः ।

अथैतत्प्रतीत्यर्थं प्रातः सायंकालयोर्नक्षत्रैः कृत्वा सूर्यस्यान्तरं यन्त्र-संम्राजा निश्चितम् । तन्मेषादिराशिषु सर्वत्र सूर्यघटिका गणितेन यवनमतेन ताभ्यो घटीभ्यो वेधितनक्षत्रोपरि रविघटिका पलद्वयं २ कदाचित्पलं १ अनयोर्योगार्द्धं १॥ सार्द्धं पलं एतस्य कला ९ नव निश्चिताः । तद्यदेन्द्रप्रस्थे यस्मिन् दिनेऽभ्रं जातं तस्मिन् दिने सवाई जयपुरे वेधो दृष्टः । सवाई जयपुरे यदाभ्रादिकं जातं तस्मिन् दिने इन्द्रप्रस्थे वेधः कृतः दृष्टश्च । एवभवन्त्यां मथुरायां काश्यां च सर्वत्र-निश्चयः कृतः । अभ्रस्यायं नियमो नास्ति यत्सर्वत्रैवाभ्रं भवतीति कांचले वर्षाकालेऽभ्रं न भवति । पौषादिमासेषु अभ्रं भवति । तेनायं नियमो नास्ति ।

अथ यः कश्चिदिष्टग्रहान् साधयितुमिच्छति स जयप्रकाशाद्वेधं कृत्वा साधयेत् । अथान्तरनिष्कासनं ग्रहाणां बहुकालसाध्यं वर्त्तते । तेन वेधे आयाति स एव ग्रहः फलदाने अयनांशाः १९।४७ शके १६५२ वेधित-ग्रहेषु शोध्यास्तदा ते ग्रहा निरयनावशिष्यन्ते । अयनांशानां गतिस्तु सप्ततिभिर्वर्षैरेकोंशा निश्चितास्ति । निर(व)य(वा)(ना)नां जातकादिके फलं ग्राह्यम् । अथ यदि कश्चित्पूर्वपक्षं करोति यः ग्रहोस्तङ्गतस्तस्य वेधः कथं संभवति । य(त?)त्र मुख्यन्तु अस्तङ्गतो ग्रहः निर्वलो जातः। तेनास्य फलं न्यूनमेवास्ति ।

अन्यच्च यन्त्रादिकेषु बहुकालेनास्तङ्गतग्रहस्यापि ज्ञानं भवति। गणितेनास्तगतग्रहस्यापि ध्रुवकः साध्यो भवति । एवं प्रकारैर्ग्रहशोधने देशाधिपेन राज्ञा देशे देशे यन्त्ररचनां कृत्वा निश्चयः कार्यः । अत्र यन्त्रैः परमक्रान्तिनिश्चयः कृतः । क्रान्ति २३।२८ अन्योपि कश्चिदग्रे निश्चयं कर्तुमिच्छति चेत्तेनापि यन्त्रैः क्रान्त्यादीनां निश्चयः कार्यः । यतोस्य कालान्तरेण व्यवस्था भिन्ना भिन्नास्ति ।

अन्यच्च फिरङ्गदेशे श्रीमहाराजाधिराजैर्महंमदसरीफनामा यवनः प्रेषितः स्थितः। तेन महैलदेवद्वीपे गत्वाऽक्षांशाः ४।१२ निश्चितास्ते दक्षिणाः। दक्षिणदेशे यन्त्राग्रे दक्षिणध्रुव उन्नतो दृष्टः तत्रत्यानां तारकाणामाकृतीर्दृष्ट्वा शुद्धाः कृत्वा आनीताः तेषां ध्रुवकाः शराः क्रान्तिघस्त्रो वा देशदेशीया मध्यनतांशाश्च दृष्टाः। एवमेव सूरतदेशात् फिरङ्गदेशोद्भवा गोलाः समानीताः। तथा महम्मदमेहदीनामा यवन अग्रे द्वीपेषु प्रेषितः। एवं देशे देशे पूर्वदक्षिणपश्चिमोदक्दिशासु सर्वत्र निश्चयः कृतः। अग्रेपि यो राजा देशाधिपतिर्भविष्यति तेनाप्येवमेव देशे देशे यन्त्राणि कारयित्वा वेधेन निश्चयः कार्यः। तदा यो ग्रहः सनक्षत्रं च यादृशं वेधेनायाति स एव प्रमाणं कालभेदेन वाऽकाश-गोलस्य गतावनेकरूपयान्तरं पतति तस्य निश्चयः कर्तव्यः। यः कश्चित् ज्ञाता भवति तेन आकाशे ग्रहगतिरन्यथा सिद्धान्तेभ्योप्यन्यथा ज्ञातं भवति। यदार्षग्रन्थेष्वपि ब्रह्मसिद्धान्तजा ग्रहा अन्यथा सूर्यसिद्धान्तजाश्चान्यथाऽयान्ति तेनेदं ज्ञायते आकाशे एकरूपता नास्तीति। यथाकाशे एकरूपता स्यात्तदा सर्वकाले सर्वसिद्धान्तेभ्यश्च ग्रहा अपि एकरूपा एव स्युरिति। एवं सत्यपि लोकव्यवहारार्थं प्राचीनोक्ता मध्यमक्रिया प्रोच्यते। अथ च तेषु बीजं दत्वा फलसंस्कारेण यथा दृक् तुल्यतां यान्ति तथात्र ग्रहाः साधिताः।

[ इति यन्त्रनिर्माणकारणम् ]

## अथ मध्यमाधिकारः

[1]ब्राह्मं दिव्यं तथा पैत्र्यं प्राजापत्यं गुरोस्तथा।<br>
सौरञ्च सावनं चान्द्रमार्क्षं मानानि वै नव ॥ १ ॥<br>
भूतानामन्तकृत् कालः कालोऽन्यः कलनात्मकः।<br>
स द्विधा स्थूलसूक्ष्मत्वान्मूर्तश्चामूर्तसंज्ञकः ॥ २ ॥<br>
मूर्त्तः प्राणादिकस्त्रुट्यादिकश्चामूर्तसंज्ञकः।<br>
द्युरात्रवृत्ते तच्चक्रकला एवासवः स्मृताः ॥ ३ ॥<br>
खेन्दुगुर्वक्षरोच्चारश्वासकालो ह्यसुश्च तैः।<br>
पलं षड्भिः खषड्भिस्तैर्घटी तत्षष्टिसंख्यया ॥ ४ ॥

१. एतत्सर्वं सिद्धान्ततत्त्वविवेकोक्तपद्यानुरूपम्।

दिनं तत्त्रिंशता मासो वर्षं द्वादशभिश्च तैः ।
इत्थं नाक्षत्रमानं स्यात्प्रवहानिलजभ्रमात् ॥ ५ ॥

विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते ।
तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते ॥ ६ ॥

इत्थं भमण्डले क्षेत्रे विभागास्तद्विदोदिताः ।
पूर्वक्रमादजादीनां तथा भानां च दस्रभात् ॥ ७ ॥

पश्चिमभ्रमणाद्भानां ग्रहाणां प्राक्कुजे बुधैः ।
उदयादुदयं वारः सावनाहः प्रकीर्तितः ॥ ८ ॥

भानां भभ्र म)संज्ञः स्यात् ग्रहाणां सावनाह्वयः ।
तत्र सूर्यस्य भूसंज्ञो दिनसंज्ञोप्युदीरितः ॥ ९ ॥

सूर्याचन्द्रमसोर्योगो दर्शान्तः परिकीर्त्तितः ।
अमान्तादग्रिमामान्तं चान्द्रो मासः प्रकीर्त्तितः ॥ १० ॥

एतत्पैत्र्यं द्युरात्रं स्यात् सौरः सूर्यस्य संक्रमात् ।
त्रिंशता दिवसैः मासः सावनः परिकीर्त्तितः ॥ ११ ॥

खवह्निभिस्तथा भागैः सौरः तिथिभिरैन्दवः ।
चक्रैकभोगात्सूर्यस्य सौरं वर्षं प्रकीर्तितम् ॥ १२ ॥

देवानां दितिजानां च दिनरात्रिविपर्ययात् ।
खाङ्काग्निभिर्द्युरात्रैश्च दिव्यं वर्षं तथासुरम् ॥ १३ ॥

गुरोर्मध्यैकराशेश्च भोगे संवत्सरं विदुः ।
लङ्कानिशीथे[1] चलिता ग्रहोच्चपातादयः सर्वे ॥ १४ ॥

नाडी-भवृत्तयोगात्तदैव सृष्ट्यादिसमयोऽभूत् ।
कालेन येन योगः स एव यदि याति कल्पसृष्टिं ताम् ॥ १५ ॥

प्रवदन्ति पूर्वऋषयः सिद्धान्तार्थकनिष्णाताः ।
भगणाः सर्वमानानि सौरचान्द्रादिकानि च ॥ १६ ॥

येन संपूर्णतां यान्ति सकालः कल्पसंज्ञकः ।
सृष्टेः सकालः कमलोद्भवस्य निद्रात्ययाद्वेदनगाब्धितुल्यैः ।
शताहतैः वर्षगणैश्च दिव्यैः भवेत्ततोऽहर्गण खेट सिद्धिः ॥१८॥

१. निशोथ इति पुस्तक द्वये पाठः ।

महायुगसहस्रेण कल्पस्तत्तु महायुगम् ।
चतुर्युगमितं तानि चतुर्लघुयुगानि च ॥ १९ ॥
कृताह्वयं तथा त्रेताह्वयं द्वापरसंज्ञकम् ।
तथा कल्याह्वयं ज्ञेयं धर्माङ्घ्रिह्रासतः क्रमात् ॥ २० ॥
खाभ्राभ्ररदवेदैश्च कृताग्निद्विकभूगुणैः ।
[१]सूर्यवर्षैः, क्रमेणैते स्युः कृताद्या युगाङ्घ्रयः ॥ २१ ॥
कृतं १७२८००० त्रेता १२९६००० द्वापरं ८६४००० कलिः ४३२०००
एषां स्वार्कांशकैस्तुल्यो सन्ध्यासन्ध्यांशकौ सदा ।
आद्यन्तयोर्युतौ तेषामयुतघ्नरदाब्धयः ४३२०००० ॥ २२ ॥
महायुगं मनुस्तैश्च युगैः कद्रिमितैस्तथा ।
आदिमध्यावसानेषु कृताब्दैः १७२८००० सन्धयः स्मृताः ॥२३॥
मनूनां [२]तिथिसंख्याकास्तत्रावश्यं[३] जलप्लवः ।
अर्काद्रैरिन्द्रसंख्याकैर्मनुभिर्ब्राह्मि एव सः ॥ २४ ॥
कल्पः प्रोक्तः फलार्थन्तु कालविद्भिर्मुनीश्वरैः ।
ससन्धिमनुभिश्चैव कोटिघ्नास्ते रदाब्धयः ४३२००००००॥२५॥
प्रवदन्ति दिनं ब्राह्ममहोरात्रं च तद् द्वयम् ।
[४]वर्षाहोरात्रसंख्या तु खाङ्गाग्निप्रमिता विधेः ॥ २६ ॥
परमायुः शतं तस्य तयाहोत्रसंख्यया ।
दैनन्दिनं सुसृष्ट्यर्थमनिरुद्धार्कजो विधिः ॥ २७ ॥
भूस्थितानां च जीवानां न स्थिराम्बरवासिनाम् ।
अनीदृशं[५] जगदिदं न कदापीति बाग्बलात् ॥ २८ ॥
तल्लये संशयो नैव कार्यो निगमवेदिभिः ।
भूमेरेव विभागास्ते भूर्भुवः स्वः सदोदिताः ॥ २९ ॥
व्यक्षाद्याम्ये तथा सौम्ये तथा मेरुरिति क्रमात् ।
तद्गतब्रह्मसृष्टेः स्याद्विलयस्तद्दिनान्तजः ॥ ३० ॥

---

१. ख्यद्वैश्च पु० द्व० पा० । रव्यब्दैश्च इ० साधु पाठः ।
२. संख्याकमनु—इति पु० द्व० पाठः ।
३. स्तथाय—इति पु० द्व० पाठः ।
४. वर्षहोरा—इति पु० द्व० पाठः ।
५. इमानि उपरिलिखितानि पद्यानि सिद्धान्ततत्त्वविवेकानुरूपाणि ।

सर्वदैव महाकाले महर्लोकादि खेऽस्ति हि।
मार्कण्डेयपुराणादौ सच्छ्रीभागवतेऽपि च।
स्वीयप्रमाणवचनान्यपि स्पष्टानि सन्तिवै ॥ ३१ ॥
सौरे तु सृष्टिवर्षोक्तौ ग्रहर्क्षस्रजनं कजम्।
उक्तं तेन[1] स्थिरा सृष्टिः कथं युक्तेति तच्छृणु ॥ ३२ ॥
जपपूजनहेतोस्ते निर्मिता देवतांशकाः[2]।
विधिना बिम्बरूपा ये तद्भिन्नास्त्वव्ययाः सदा ॥ ३३ ॥
ब्राह्ममानमिदं प्रोक्तं तादृशाः कमलोद्भवाः।
कालेऽस्मिन् बहवो जाता भविष्यन्ति सनातने ॥ ३४ ॥
आयुषोऽर्घं गतं तस्य वर्तमानस्य चाग्रिमात्।
कल्पादितः प्रमाणार्कपूर्वशास्त्रानुसारतः ॥ ३५ ॥
स्वायम्भुवो मनुः स्वारोचिषश्चोत्तमजस्तथा।
तामसो रैवतस्तद्वच्चाक्षुषस्ते गतास्तु षट् ॥ ३६ ॥
वैवस्वतो मनुश्चायं सप्तमोऽस्त्यधुना किल।
इत्थं कादेश्च मनवः षड्व्यतीता युगानि वै ॥ ३७ ॥
भमितानि तथा चार्ङ्घ्रित्रयं तद्वत् कलेर्गताः।
नन्दाद्रीन्दुगुणाः ३१७९ सौराश्चाब्दास्त्विवत्थं शकानने ॥ ३८ ॥
ससन्धिसर्वयोगे स्युः सौराब्दा विधिवक्त्रतः।
गोऽद्रीन्द्वद्र्यब्धिनन्दाक्षिशैलनन्देन्दुसंमिताः १९७२९४७१७९ ॥३९॥
शकाब्दसहितास्ते तु वर्षारम्भे गताः समाः।
खत्रयाब्ध्यर्तु खात्यष्टि १७०६४००० हीनाः सृष्ट्यादितो गताः॥४०॥
यतः सर्वग्रहादीनां सृष्ट्यादौ संयुतिः किल।
मेषादौ मुनिभिः प्रोक्ता दिनादौ ब्रह्मणो नहि ॥ ४१ ॥
अनाद्यनन्तकालेऽस्मिन्भचक्रप्रवहभ्रमात्।
शश्वद्भ्रमणसंयुक्तं प्रत्यक् चलति वायुना ॥ ४२ ॥

---

१. तेम इति पु० द्व० पाठः।
२. देवतांशेका इति पु० द्व० पाठः।

तदल्पगत्येन्द्रदिशं प्रचलन्ति नभश्चराः[1] ।
महद्गतौ स्वल्पगतेर्भानं लोके न जायते ॥ ४३ ॥
तस्मात् पूर्वोदयश्चास्तः प्रतीच्यां दृश्यते जनैः ।
पूर्वक्रमाद् ग्रहर्क्षाणां भोगं कुर्वन्ति खेचराः ॥ ४४ ॥
चन्द्रादयस्ततः पूर्वैः प्राग्गतिः परिकल्पिता ।
पादोनगोक्षधृतिभूयोजनैः सा समा मता ॥ ४५ ॥
लङ्कानिशीथे दिननाथवारे चैत्रे सितादौ ग्रहयातपूर्वम् ।
ऋणायनादौ [2]समयानुरोधान्मेषाश्विवर्क्षे प्रथमं बभूव ॥ ४६ ॥
सृष्ट्यादेः सृष्टिकल्पान्तं भगणाः पूर्वयायिनाम् ।
रव्यादीनां निरग्रास्तान्प्रवदाम्यर्कशास्त्रतः ॥ ४७ ॥
कल्पेऽर्कशुक्रेन्दुजपर्ययामता कोटिघ्ननेत्राग्निकृतास्त एव ।
प्रोक्ता कुजार्कीज्यचलोच्चकानां भ्रमास्तु सूर्यादिमहर्षितन्त्रे ॥ ४८ ॥
षड्वह्निदेवेषुनगाद्रिपञ्चप्रोक्ता[3] सहस्रेण गुणा हिमांशोः ५७७५३३३६००० ।
दन्ताष्टषड्गोयमबाहवः[4]स्युः कल्पे सहस्रेण हताः कुजस्य२२९६८३२०००॥४९॥
रसाभ्रसप्ताग्निनवाद्रिभूमयोऽयुताहता
१७९३७०६०००० श्चान्द्रिचलोच्चपर्ययाः ।
द्विबाहुवेदर्त्तुगुणा ३६४२२०००० गुरोस्तथाऽ-
युताहताः कल्पभवाश्चपर्ययाः ॥ ५० ॥
खषट्कसप्ताग्नियमद्विखाश्वा शताहताः
७०२२३७६००० शुक्रचलोच्चजाताः ।
खखाष्ट[5]षट्पञ्चरसायुगेन्दवो[6] दशाहताः
१४६५६८००० सूर्यसुतस्य पर्ययाः ॥ ५१ ॥

---

१. नभश्चरा इति पु० द्व० पाठः ।

२. समानु—इति पु० द्व० पाठः ।

३. नगाद्रि इति पु० द्व० पाठः ।

४. दन्ताष्ट अङ्गो इति पु० द्व० पाठः ।

५. षट्वं च इति पु० द्व० पाठः ।

६. अत्र छन्दोभङ्गभिया दीर्घत्वं स्वीकृतम् । अतः 'रसाब्धिभूमयः' इति पाठान्तरम् ।

नगाष्टरामा ३८७ मृदुतुङ्गपर्यया
रवेश्च कल्पे शशिनोऽतुङ्गजाः।
खरामशून्याश्विगजाष्टवेदाः ४८८२०३०००
शताहता श्रीरविणा प्रयुक्ताः ॥ ५२ ॥
वेदाभ्रदस्राश्च २०४ गजर्तुरामा ३६८
खशून्य(र)न्ध्राणि ९०० शराग्निपञ्च ५३५।
नन्दाग्नयः ३९ कल्पमृदूच्चपर्यया
कौजादिकानां रविणा निरुक्ता ॥ ५३ ॥
चन्द्रस्य पातभगणाः खखखाष्टरामद्विद्व्यग्नि
लोचनमिताः २३२२३८००० तु कुजस्य कल्पे।
शक्राश्विनोऽथ २१४ शशिजस्य गजाष्टवेदा
४८८ जीवस्य वेदनगचन्द्र १७४ मिता विलोमा ॥५४॥
रामाभ्रनन्दा ९०३ भृगुजस्य सौरेस्तथा द्विषट् तर्क ६६२ मितास्तु कल्पे।
मानानि सौरेन्दवसावनानि ब्रुवे[1] तथार्क्षं रवितन्त्ररीत्या[2] ॥ ५५॥
सूर्योदयद्वितयमध्यगतो(ऽथ)कालस्तत्सूर्य
सावनदिनं कुदिनं च तत्स्यात्।
अष्टाश्विनागघनगोद्रिनगेषुचन्द्रैः १५७७९१७८२८
तुल्या भवन्ति धरणीदिवसास्तु कल्पे ॥ ५६ ॥
भानां गजाक्षिगजवाजिगुणाश्विदस्रनागेषु-
रूपकमिता दिवसा १५८२२३७८२८ विधोस्तु।
खाष्टौ खखाभ्रखगुणाभ्रनृपाः १६०३००००८० रवेश्च मासाः,
खखाभ्रखयुगाष्टकुपञ्चतुल्याः ५१८४०००० ॥ ५७॥
अथाधिमासा रसरामदेवगोपञ्चचन्द्र-
प्रमिता १५९३३३६ स्तु कल्पे।
तिथिक्षयाः बाहुशराश्विदस्रनागाभ्रतत्त्वैश्च
२५०८२२(५२) भवन्ति तुल्याः ॥ ५८ ॥

---

१. ब्रवे इति पु० द्व० पाठः।

२. ररितं—इति पु० द्व० पाठः।

भानां भ्रमा यद् भगणैर्विवर्जिताः प्रजायते तद् ग्रहसावनौघः ।
तथा रवीन्दोर्भङ्गणान्तरं यद् भवेद् विधोर्मासससमुच्चयो वा ॥ ५९ ॥
सूर्य(स्य)मास रहिताः शशिमासाः संभवेदधिकमाससमूहः ।
सावनानि रहितानि च चान्द्रैः जायतेऽवम[1]दिनसमुदायः ॥ ६० ॥

इति भगणाऽध्यायः ॥

## अथ अहर्गणानयनम्

सृष्टेर्गतो वर्षगणो रविघ्नश्चैत्रादिमासैः सहितो गतैश्च ।
रवरामनिघ्नस्तिथिभिर्विमिश्रः पृथक् ततश्चाधिकमासनिघ्नात् ॥ ६१ ॥
आदित्यमासैर्विहृतात्प्रलब्धगताधिकैः खाग्निहतैस्तु युक्तः ।
चान्द्रो गणोऽस्मात्पठितावमघ्नाच्चान्द्रैर्हृताल्लब्धगतावमैश्च ॥ ६२ ॥
विवर्जितः सावनवासरौघः सृष्ट्यादितः स्यात्पुरिरावणस्य ।
निशीथके सिद्धदिनार्द्धके वा नगावशेषो रवितो दिनेशाः ॥ ६३ ॥
अथाधिशेषावमशेषकाभ्यां ग्राह्यं फलं नैव यतस्त्वमान्तात् ।
संक्रान्तिकालावधिकाधिशेषं तिथ्यन्त रव्युदययोः परं च ॥ ६४ ॥

स्फुटोऽधिको न लभ्यतेऽनुपाततश्च लभ्यते ।
इतोऽन्यथाधिका यदा तदा गताधिमासकात् ॥ ६५ ॥
अरूपकात्सरूपकान् विधाय साधयेद् गणम्[2] ।
अथावमाधिशेषके त्यजेत निःप्रयोजने ॥ ६६ ॥

अहर्गणः स्वैर्भगणैर्विनिघ्नः कहैर्हृतः स्याद् भगणादिको ग्रहः ।
मध्याह्नको सिद्धिपुरस्य मध्यः सूर्योदये वा यमकोटिपुर्याम् ॥ ६७ ॥

सप्ततष्टे गणे चैव वारो यदि न लभ्यते ।
गणं सैकं निरेकं च कृत्वा संसाधयेत् ग्रहान् ॥ ६८ ॥

गोक्षास्तथाष्टौ ५९।८ तरणेर्गतिस्याच्छू-
न्याङ्कसप्तेषुगुणाः विधोश्च ७९०।३५ ।
चन्द्रोच्चभुक्तिः ऋतवः कुवेदा ६।४१।
रामाः शिवाः ३।११। राहुगतिर्विलोमा ॥ ६९ ॥

---

१, बभवदिव समु--इति० पु० द्व० पाठः ।

२. थ गुणं इति पु० द्व० पाठः ।

कुवह्नयः षड्यमलाः ३१।२६ कुजस्य
क्रौञ्चस्य वै पञ्चजिना रदाश्च २४५।३२ ।
गुरोः शराः ५ भार्गवतुङ्गभुक्तिः
षडङ्कलिप्ताश्च गजाः ६९।८ शनेर्द्वे २ ॥ ७० ॥

कल्पोक्तसौरेन्दवसावनानि ग्रहस्य चक्राणि तथेतराणि ।
भक्तानि कल्पोद्भवसौरवर्षैः सौरैकवर्षा प्रभवानि तानि ॥ ७१ ॥

गतेष्टवर्षैर्गुणितान्यभीष्टवर्षोद्भवानीह भवन्ति तानि ।
सप्तावशिष्टो द्युगणो दिनाद्यं तदग्रिमः स्याच्च समाधिनाथः ॥ ७२ ॥

वर्षादितो दिनगणं कृत्वा साध्या ग्रहास्ततः ।
वर्षारम्भध्रुवैर्युक्ता स्वाभीष्टास्ते भवन्ति वै ॥ ७३ ॥

रविघ्ना गुरोः पर्यया वर्तमानैर्युता राशिभिः षष्टितष्टावशिष्टाः ।
विपूर्वाजयाद्याश्च संवत्सराः स्यु रवेः संक्रमाच्चान्द्रमासाश्च शुद्धाः ॥ ७४ ॥

संक्रान्तिहीनोऽधिकमाससंज्ञश्चान्द्रो द्विसंक्रान्तियुतोऽवमाख्यः ।
यदा कदाचित्प्रभवेदवश्यं तद्वर्षमध्येऽधिकमासयुग्मम् ॥ ७५ ॥

वेदर्तुनागाभ्रगजाभ्रसूर्यनगाष्टचन्द्राः
१८७१२०८०८६४०००००० प्रयुता हताश्च ।
भवेत् खकक्षारविरश्मिचारस्ता-
वन्मितोऽन्तरतमसावृत्तोऽन्तः[1] ॥ ७६ ॥

भक्ता ग्रहाणां भगणैः खकक्षा भवेत्स्वकक्षामितिरस्फुटेयम् ।
ज्ञशुक्रयोस्तु न भवेत्[2] स्वकक्षा तत्रार्कगत्पा भ्रमणं तयोश्च ॥ ७७ ॥

अथ ग्रहाणां भगणाश्रितानि वृत्तानि मध्यानि च तच्छ्रुतीश्च ।
वक्ष्येऽर्कशास्त्राच्छशिनः क्रमेण भानां ग्रहोर्ध्वस्थितकक्षिकां च ॥ ७८ ॥

खखाभ्रवेदाश्विगुणा ३२४००० हिमद्युते-
र्विदोऽङ्कशून्यद्विगुणाब्धि पङ्क्तयः १०४३२०९ ।
भृगौर्नगाग्न्यङ्गयुगर्तुषड्यमा २६६४६३७।
रवेः खखप्राणशशी सु(रा)ब्धयः ४३३१५०० ॥ ७९ ॥

---

१. वृत्ते राडे इति पु० द्वं० पाठः ।

२. भवा इति पु० द्वं० पाठः ।

कुजस्य गोऽश्वाङ्करसेन्द्रसिन्धुराट् (८) १४६६८०९
युगाङ्कसप्तेषु[1] नगाग्निभूशरा ५१३७५७६४ ।
गुरोः शनेरक्षशराश्विसिन्धुरा( ट् )रसर्तु-
सप्तार्कमिता १२७६६८२५५ च कक्षिका ॥ ८० ॥
खखाभ्रशून्याङ्कगजाङ्कतत्त्वै २५९८९०००० मिता च पूर्वैः कथिता भकक्षा ।
अर्कस्य कक्षा खरसैर्विनिघ्नी यद्वा भकक्षा हि भवेत्समैव ॥ ८१ ॥
ऊर्ध्वस्थितस्य महती तदधः स्थितस्य
कक्षालिपका भवति भागमितिस्तु तद्वत् ।
तेनाल्पमण्डलगतौ भगणं हि शीघ्रं
भुङ्क्ते महद्वृत्तगतोतिचिरेण[2] खेटः ॥ ८२ ॥
विधोर्मध्यकर्णोऽङ्कदस्राकर्वाणा ५१२२९
बुधस्येषुवेदाङ्कवेदर्तुचन्द्राः १६४९४५ ।
कवेर्भूपरामेन्दुदस्राब्धयः स्या ४२१३१६
द्रवेः[3] खाद्रिसर्पाब्धिनागर्तवश्च ६८४८७० ॥ ८३ ॥
कुजस्याङ्करामेन्दुनागाष्टसूर्याः १२८८१३९
गुरोः स्वर्गदन्तार्कनागप्रमाणाः ८१२३२२१ ।
शने रामसूर्याङ्गधृत्यभ्रदस्रा २०१८६१२३
भकर्णः खखद्विद्विगोखेन्दुवेदाः ४१०९२२०० ॥ ८४ ॥
खखेष्वर्त्तवो ६५०० बिम्बविष्कम्भमानं खरांशोः,
शशाङ्कस्य खष्टाब्धयः ४८० स्यात् ।
कुजस्याब्धिपञ्चाद्रयस्त्र्यंशयुक्ता ७५४।२०
बुधस्येषुशक्रा दशांशेन हीनाः १४४।५० ॥ ८५ ॥
गुरोः पञ्चदन्तद्विपा अङ्घ्रिहीना ८३२४।४५।
भृगोस्त्र्यङ्कवेदा[4] भलिप्ता युताश्च ४९३।२७ ।
शनेरङ्गसप्ताद्रिवेदेन्दवश्च
भवेत्तत्त्वलिप्तायुता १४७७६।२५ व्यासमानम् ॥ ८६ ॥

---

१. युगाङ्क इति पु० द्व० पाठः ।

२. वृत्तिगतो—इति पु० द्व० पाठः ।

३. सर्पाद्रि इति पु० द्व० पाठः ।

४. रामभागा इ० पु० द्व० पाठः ।

भौमादिकानां किल बिम्बमानं हिमांशुमध्यश्रवणेन निघ्नम् ।
खमध्यकर्णेन हृतं यदाप्तं बिम्बप्रमाणं हिमरश्मिगोले ॥ ८७॥

खवह्नयः ३० पञ्चयुगाश्च ४५ सार्द्ध
दस्रेषवः ५२।३०। शून्यरसो निरुक्तः ६० ।
सार्द्धाद्रिरामाश्च ३७।३०। कुजादिकानां
तिथ्युद्धृता[1] बिम्बकला स्वगोले ॥ ८८ ॥

त्रिज्या चलश्रवणयोगदलं श्रुतिः स्यात्
स्पष्टा तया विनिहता[2] द्युचरस्य कक्षा ।
त्रिज्योद्धृता च भवति स्फुटबिम्बकक्षा
तेनैव गच्छति पथा ग्रहबिम्बगोलः ॥ ८९ ॥

त्रिज्या गुणा बिम्बकला स्फुटेन कर्णेन भक्ता स्फुटबिम्बमानम् ।
शाकल्यवाक्यादथ दृक्प्रतीतिर्ग्राह्यं त्विदं नान्यसमीरितं वै ॥ ९०॥

अथ ग्रहाणां शशिपूर्वकाणां नीचोच्चकर्णान्परमान्ब्रवीमि ।
श्रीसूर्यतन्त्रात् किल योजनाद्यास्तथैव शीघ्रान्त्यफलज्यकाश्च ॥ ९१॥

चन्द्रस्य नीचश्रवणः शराभ्रनगाङ्गवेदा
रसदस्रलिप्ताः ४६७०५।२६ ।
ज्ञस्येषुशून्याद्रियुगत्रिचन्द्रा रूपार्कभागेन
युता ( १३४७०५।५ ) श्रुतिः स्यात् ॥ ९२ ॥

युगघनाङ्करसाश्विमितो भृगोर्नगकला-
सहितः २६९१७४।७ श्रवणोऽल्पकः ।
युगशराष्टगजाक्षरसारवेर्भकलिकासहितः
६५८८५४।२७। परमाल्पकः ॥ ९३ ॥

द्व्यगाभ्ररामाद्रिगजाः ८७३०७२ कुजस्य
गुरोर्नवाङ्काष्टदिगग्निसप्त ७३१०८९८।५४ ।
दिगंशकोना रविजस्य सार्द्ध
[3]कद्व्यङ्गवेदाङ्गनभोऽर्कचन्द्राः ११०६४६७१।३०[4] ॥९४॥

---

१. तिथ्युद्धृत्या इति पु० द्व० पाठः ।

२. विनिहिता इति पु० द्व० पाठः ।

३. ववयं—इति पु० द्व० पाठः ।

४. ३१। इति पु० द्व० पाठः ।

[1]द्विपञ्चसप्तेषुशराः ५५७५२। शराष्ट[2]-
कुसायकाङ्केन्दुमितास्तथैव १६५१८५।
[3]गजाक्षवेदाग्निनगेषवः ५७३४५८ स्यात्
[4]षडष्टनागाभ्रकुपर्वताश्च ७१०८८६ ॥ ६५ ॥

अङ्गाभ्रदन्ताभ्रघनाः[5] १७०३२०६ स्त्रिवेद[6]-
पञ्चाक्षवह्न्यङ्कगजा ८६३५५४३ स्तथैव।
[7]वेदाद्रिपञ्चाद्रिनभोऽग्निचन्द्र
दस्रा २१३०७५७४ स्तु चन्द्रात्परमोच्चकर्णाः[8] ॥ ६६ ॥

भौमस्य शीघ्रान्त्यफलज्यका स्याद्-
वेदाग्निभूखाग्निगजा[9] ८३०१३४ बुधस्य।
शून्याष्टवेदाभ्ररसा ६०४८० गुरोस्तु वेदाब्धिषट्-
सिद्धनृपाः सपादाः १६२४६४४।१५ ॥ ६७ ॥

भृगोर्युगाष्टाश्वियुगाभ्रवह्नयः[10] ३०४२८४
[11]शनेस्त्रिखाङ्काश्वियुगद्विबाहवः २२४२६०३।
रवेर्नृपाभ्राङ्कयमाः प्रकीर्तिताः २६०१६
युगाब्धिबाणाब्धिमिता ४५४४ हिमद्युतेः ॥ ६८ ॥

रूपं भुवः कर्णमिति प्रकल्प्य तन्मानतो ये किल रोमकोक्ताः।
नीचोच्चकर्णा अथ तान् ब्रवीमि बिम्बार्द्धमानानि च तत्प्रमाणात् ॥ ६९ ॥

---

१. चन्द्रस्य।
२. बुधस्य।
३. शुक्रस्य।
४. सूर्यस्य।
५. भौमस्य।
६. गुरोः।
७. शनेः। वेदाश्वि—इति पु० द्व० पाठः।
८. कर्णैरिति पु० द्व० पाठः।
९. भूखानि इति पु० द्व० पाठः।
१०. नृपाष्टव—इति पु० द्व० पाठः।
११. त्रिखाङ्काश्वि इति पु० द्व० पाठः।

चन्द्रस्य नीचश्रवणस्त्रिरामा शक्राश्च
विश्वे ३३।१४।१३ पुनरुच्चकर्णः ।
त्रिषट् च वेदाग्नय अक्षचन्द्रा ६३।३४।१५
पातोच्चकर्णोऽश्वरसा नखाश्च ६७।२० ॥ १०० ॥

बुधस्य नीचश्रवणोऽश्वतर्का यमाश्विनः
सप्तकृताः ६७।२२।४७ प्रदिष्टाः ।
भूपाश्विनो गोशशिनोऽङ्गरामा २१६।१६।३६
स्तदुच्चकर्णः किल रोमकोक्तः ॥ १०१ ॥

शुक्रस्य नीचश्रवणः प्रदिष्टो भूपाश्विनो वेदकृता नभोऽक्षाः २१६।४४।५०।
दस्राक्षवेदेन्दव अङ्कचन्द्रा १४५२।१६[1] स्तदुच्चकर्णः कथितः पुराणैः ॥१०२॥

सूर्यस्य नीचश्रवणोऽङ्कपञ्चशाक्रस्तथा-
वेदगुणाः खरामाः १४५६।३४।३० ।
तदुच्चकर्णोऽङ्गगजाक्षचन्द्रा गोबाहवः
खाम्बुधयः प्रदिष्टाः १५८६।२६।४० ॥ १०३ ॥

भौमस्य नीचश्रवणोऽब्धिगोक्षचन्द्रास्तथा दस्रशरा गुणाश्च१५६४।५२।३।
तदुच्चकर्णो युगखाङ्गरुद्रा द्वयं खशीतद्युतयः प्रदिष्टाः ११६०४।२।१० ॥१०४॥

गुरोस्तु नीचश्रवणो भवाङ्गरुद्रा
[2]शराब्जाः खकृता ११६११।१५।४० स्तथैव ।
तदुच्चकर्णोऽब्धियुगाष्टनागचन्द्राः
खरामाः प्रकृतिः १८८४४।३०।२१ प्रदिष्टा ॥ १०५ ॥

शनेस्तु नीचश्रवणोऽक्षपञ्च
गजाष्टचन्द्राः शरवायवश्च १८८५५।५५ ।
तत्तुङ्गजो द्विद्विगुणाङ्गदस्रा नागेषवः
पञ्चगुणाः प्रदिष्टाः २६३२२।५८।३५ ॥ १०६ ॥

भनीचकर्णोऽष्टरदाङ्गदस्रा अष्टाग्नयो
गोनिगमाः २६३२८।३८।४६। प्रदिष्टाः ।
तत्तुङ्गजः खाब्धिगुणाङ्गदस्राः पञ्चाब्धयः
सप्तकृताः २६३४०।४५।४७ प्रदिष्टाः ॥ १०७ ॥

---

१. ।१८ इति पु० द्व० पाठः ।

२. शराजा इति पु० द्व० पाठः ।

एते ग्रहाणां [1]कथितोच्चकर्णास्तथैव [2]नीचाभिधकर्णकाश्च ।
बिम्बार्द्धमानेन युतोनितास्ते परोच्चनीचश्रवणाः भवन्ति ॥ १०८ ॥

खं सप्तचन्द्राः मनवो ०।१७।१४
हिमांशोर्व्यासार्द्धमानं किल रोमकोक्तम् ।
खं दस्रको वेदगुणा ०।२।३४ बुधस्य खमाकृति
सप्तगुणा ०।२२।३७।[3] सितस्य ॥ १०९ ॥

रवे रसा पक्षशराः शराक्षा ६।५२।५५।
भूर्गोऽश्विनः पिण्डमिताः कुजस्य ।१।२६।२८ ।
गुरोः शरा वेदकृता द्वयं च ५।४४।२।
शनेः शराः खाम्बुधयो युगाब्जाः ५।४०।१४ ॥ ११० ॥

खं शून्यखाङ्कप्रमितैश्च योजनैर्भूगोलमानं कथितं तु रोमके ।
खं भूमिगोचन्द्रमितं तु तस्य व्यासप्रमाणं गणितोपयुक्तम् ॥ १११ ॥

खखाङ्कचन्द्रप्रमितैश्च योजनैर्भूव्यासमानं गदितं पुराणैः ।
दशाहता तत्कृतितः पदं स्याद् भूवृत्तमानं किल सप्रमाणम् ॥ ११२ ॥

लम्बज्यकाघ्नं त्रिभजीवयाप्तं भवेत्स्वदेशे परिधिश्च[4] तेन ।
देशान्तरघ्नी खचरस्य भुक्तिः विभाजिता यत्कलिकादि लब्धम् ॥११३॥

देशान्तराख्यं स्वमृणं ग्रहे स्याद्रेखाप्रदेशात्परपूर्वभागे ।
रक्षो निवासात्किल मेरुलग्नं सूत्रं भवेन्मध्यमरेखिका सा ॥ ११४ ॥

उन्मीलनाच्च शशिनो गणिताद्यदि [5]प्राग्-
दृक्तुल्यता स्वनिलयं भवति प्रतीच्याम् ।
प्राच्यमतीत्य गणितागतमेव-
मत्र सम्मीलनादपि तदन्तरनाडिकाः स्युः ॥ ११५ ॥

---

१. कर्ण इति पु० द्व० पाठः ।
२. मिधाक—इति पु० द्व० पाठः ।
३. ३० इति पु० द्व० पाठः ।
४. परिधिश्च इति पु० द्व० पाठः ।
५. प्राग्दृतुल्य—इति पु० द्व० पाठः ।

ताभिर्हतः स्वपरिधिः खरसैर्विभक्तं
देशान्तरं भवति तत्किल योजनाद्यम् ।
वारप्रवृत्तिरधिके भवति क्षपार्द्धे
प्राक्न्यूनके त्वपरकेऽन्तरनाडिकाभिः ॥ ११६ ॥

मेषाग्निरक्षोदयजासवो ये स्फुटार्कतो मध्यरवेः कलाश्च ।
तदन्तरघ्नी द्युनिशासु भक्ता गतिर्यदाप्तं कलिकादिकञ्च ॥ ११७ ॥
कलागणात्प्राणगणोऽधिकोने[1] ऋणं धनं दोरुदयान्तराख्यम् ।
तत्संस्कृतो मध्यखगो निरक्षे स्याद् गर्भभूजे स्फुटभास्करे हि ॥११८॥

## अथ गोलबन्धप्रकारमाह ।

अथ गोलं प्रवक्ष्यामि दृष्टान्तार्हं सुवृत्तजम् ।
यस्य विज्ञानतो वेत्ति सम्यग्गणितवासनाम् ॥ ११९ ॥
ताम्रवंशादि वृत्तैश्च खगोलं स्वीयदेशजम् ।
बध्वा स्थिरं तदन्तस्तु भगोलं कारयेत् स्थिरम् ॥ १२० ॥
पूर्वापरं च याम्योदक् कोणकद्वितयं तथा ।
एतद्योगौ निजोर्ध्वाधः संस्थितौ स्वस्तिकाभिधौ ॥ १२१ ॥
स्वस्तिकाद्यन्नवत्यंशैः वृत्तं स्वक्षितिजं भवेत् ।
तद् याम्यसौम्ययोगौ हि गदितौ समसंज्ञकौ ॥ १२२ ॥
ध्रुवचिह्नं ततोऽक्षांशैरूर्ध्वं सौम्ये [2]यमादधः ।
तच्चिह्नकीलकप्रोतौ कार्यौ स्वाधारसंस्थितौ ॥ १२३ ॥
एवं दृढं खगोलन्तु कृत्वा याम्योत्तरे ध्रुवात् ।
[3]परापमांशैश्च भवेत्तथा चिह्नं कदम्बयोः ॥ १२४ ॥
[4]ध्रुवकीलावुभौ देयौ वृत्तान्तर्निःसृतौ दृढौ ।
तयोः प्रोतं भगोलस्य याम्योदगयनाभिधम् ॥ १२५ ॥

---

१. धिकोणे इति पु० द्व० पाठः ।
२. त्वयागधः इति पु० द्व० पाठः ।
३. परायमाशैस्व इति पु० द्व० पाठः ।
४. ध्रुव इति पु० द्व० पाठः ।

तत्कीलकेन्द्रात्खाङ्कैस्तु वृत्तं तद् विषुवाभिधम् ।
ततो द्युरात्रवृत्तानि कुर्यात् द्युज्यांशकैर्बुधः ॥ १२६ ॥
कदम्बकीलकप्रोतं[1] गोलेऽन्तः शरवृत्तकम् ।
क्रान्त्यर्थं ध्रुववृत्तं च ध्रुवकीलगतं बहिः ॥ १२७ ॥
अयनस्य कदम्बात्तु यद्वृत्तं खाङ्कभागकैः ।
क्रान्तिवृत्तं तदेव स्यादपमाभिधमण्डलम् ॥ १२८ ॥
गोलसन्धी तु संपातौ विषुवक्रान्तिवृत्तयोः ।
चलांशगत्या चलितौ प्राक्पश्चाद् भवतस्तदा ॥ १२९ ॥
कदम्बभ्रमवृत्तं च भगोलध्रुवचिह्नतः ।
कुर्यात्परापमांशैश्च गोलतत्त्वविशारदैः[2] ॥ १३० ॥
भवृत्तेऽर्कं विभागाश्च कृत्वा द्वादश राशयः ।
अङ्कनीयास्तथा भानि समभागानि च क्रमात् ॥ १३१ ॥

इति गोलबन्धः ॥

अयन-क्रान्तिवृत्तं कदम्बद्वयमेव च ।
याम्योत्तरं च विज्ञेयं वेधार्थं वृत्तपञ्चकम् ॥ १३२ ॥

अथ एषां क्रमेण टीका ।

अथ ब्राह्मं तथा दिव्यं पित्र्यमित्यादि आयुषोऽर्द्धं गतमित्यन्तं श्लोकाः सुगमाः ।

ततः षण्मनवः स्वारोचिषादयो गताः वर्त्तमानस्य वैवस्वतमनोः सप्तविंशतियुगानि यातानि । वर्त्तमानस्याष्टाविंशतितमयुगस्य कृत-त्रेता–द्वापर–युगात्मकमङ्घ्रित्रयं यातम् । शालिवाहनशकादौ कलेर्गत-वर्षाणि नन्दाद्रीन्दुगुण ३१७९ मितानि । एषां योगः षण्मनूनां सप्तसन्धि-वर्षैः सप्तगुणितकृतवर्षसमैर्युतः जातः शकादौ वर्षगणः १९७२९४७१७९[3] अयमेतैः सृष्टिवर्षैः १७०६४००० हीनः जातो युतिकालाच्छकादिपर्यन्तं

१. प्रातं इति पु० द्व० पाठः ।
२. विशारदः इति पु० द्व० पाठः ।
३. ७१८९ । इ० पु० द्व० पाठः । एते कां कथं भवन्तीति सिद्धान्ततत्त्व-विवेकटीकायां स्पष्टम् ।

वर्षगण: १६५५८८३१७६[1]। यतः ब्रह्मदिनादारभ्य एतैः सृष्टिवर्षैः सर्व ग्रहपात-मन्दोच्चादीना मेषादौ योगो जातः।

अथ च भचक्रं षष्टिघटीभिः प्रत्यग्गत्या एकं परिवर्त्तं करोति। ग्रहास्तु तदल्पगत्या स्व-स्वगत्या प्राक् चलन्ति। अतो भूपृष्ठस्थानां पूर्वोदयः पश्चिमास्तश्च प्रत्यहं भवति। ग्रहाणां कक्षाभेदेन कलागतिस्तु भिन्ना भिन्नाऽस्ति। योजनगतिस्तु सर्वेषां पादोनगोक्षधृतिभूमिता (११८५८।४५) सर्वेषां समास्ति।

कस्मिन्काले सर्वेषां युतिर्जाता। इत्यपेक्षायामाह। लङ्कानिशीथेति। लङ्कार्द्धरात्रे चैत्रसितप्रतिपदि ऋणायनादौ ग्रहमन्दोच्चपातादीनां मेषादौ योगो जातः। पुनस्तादृशो योगो येन कालेन भवति स कालः कल्पसंज्ञः। तद् वर्षाणि कोटिर्गुणता रदाब्धयः भवन्ति।

तस्मिन्काले ग्रहाणां मन्दोच्चादीनां च कियन्तो भगणाः भवन्तीत्यपेक्षायामाह। कल्पेऽर्कशुक्रेन्दुजेत्यादिभिरेकादशश्लोकैः। एते श्लोकाः सुगमार्थाः।

## अत्रोपपत्तिस्तु

एतावति काले एतावत्प्रमाणा भगणा भवन्तीत्यागमप्रामाण्येनैव। अत्र भास्कराचार्यैः [2]स्फुटग्रहं मध्यखगं प्रकल्प्येत्यादिनोपपत्तिरुक्तास्ति। तन्मन्दजनप्रतारणमात्रमेव। यतस्तेन मन्दोच्चं परमन्दफलं परमशीघ्रफलं चागमप्रामाण्येनैव गृहीतम्। अर्द्धतरतीयन्यायः समीचीनो न भवति। अत्र अस्माभिः परममन्दफलानि परमशीघ्रफलानि मन्दोच्चानि मध्यमाश्च वेधेनैव निष्कासिताः तदग्रे वक्ष्यामः।

अथ कल्पे सावनान् भभ्रमान् चान्द्रदिवसान् रविमासांश्च अधिमासान् अवमदिवसांश्च सूर्योदयद्वितयमध्येत्यादि श्लोकैराह। एते श्लोका सुगमार्थाः। भानां भ्रमाः यद् भगणैर्विवर्जितास्तस्य कुदिनानि भवन्ति। [3]रवीन्दुभगणान्तरं चान्द्रमासाः भवन्ति। सूर्यमास-शशि-

१. ८९ इति पु० द्व० पाठः।

२. सि. शि. स्पष्टा ४५ श्लो.।

३. रविन्दु इति पु० द्व० पाठः।

मासान्तरं अधिमासाः भवन्ति। सावन-चान्द्रदिनान्तरं अवमदिनानि भवन्ति।

इति भगणाध्यायः॥

## अथ अहर्गणानयनमाह।

सृष्टेर्गतो वर्षगणः द्वादशगुणितश्चैत्रादिगतमासैर्युतः कार्यः। पुनः त्रिंशद् निघ्नो गततिथियुक्तः कार्यः। पुनः द्विधा स्थाप्यः। ततोऽस्मादधिमासगुणिताद्रविमासभक्ताल्लब्धाधिमासैः त्रिंशद्गुणितैः पृथक्स्थो युक्तः कार्यः। अयं चान्द्रदिनगणो भवति। अयमपि पृथक् स्थाप्यः। अस्मात् कल्पावमगुणितात्कल्पचान्द्र[1]भक्ताल्लब्धावमैः पृथक्स्थो रहितः कार्यः। स लङ्कानिशीथेऽहर्गणो भवति। अयं सप्ततष्टः शेषं रवेर्वारः गतः स्यात्।

### अत्रोपपत्तिः

गतवर्षगणो रविर्गुणितो इष्टवर्षादौ गतरविमासगणो भवति। चैत्रादिचान्द्रगतमासतुल्यैः रविमासैरयं युक्तश्चेद् गतसङ्क्रान्तिपर्यन्तं रविमासगणो भवति। अयं त्रिंशद् गुणितः गतसङ्क्रान्तिकालीनः सौरदिनगणो भवति। तस्य चान्द्रदिनीकरणार्थमधिमासानयनं कार्यम्। तद्यथा कल्पसौरैः कल्पाधिमासाः लभ्यन्ते तदा इष्टसौरैः किमिति अनुपातेन लब्धकेवलाधिमासैः त्रिशद्गुणितैः युक्तः सौरगण अमान्ते [2]चान्द्रगणो भवति। कुतः अमान्तसङ्क्रान्तिकालपर्यन्तं अधिमासशेषं भवति। सावयवाधिमासाः त्रिंशद्गुणितास्तत्र सौराऽहर्गणे योज्यन्ते तदा सङ्क्रान्तिकालीनश्चान्द्राऽहर्गणो भवति। गणितसौकर्यार्थमपेक्षितोऽमान्तकालीनोऽतो लाघवार्थं निरवयवा एव अधिमासाः त्रिशद्गुणिताः सौरदिनेषु योजिताः। [3]पुनस्तत्र गततिथयो योज्याः। इदं युक्तमेव। अयं चान्द्रगण इष्टतिथ्यन्ते भवति।

ननु पूर्वमेव गततिथयो योजितास्तेन किञ्चिदधिमासशेषेऽन्तरं

---

१. चाब्द इति पु० द्व० पाठः।

२. चन्द्रगणो इति क पुस्तके पाठः।

३. पुस्तत्र इति क पुस्तके पाठः।

पतिष्यति । सत्यम् । अधिमासशेषस्य प्रयोजनाभावान्न किञ्चिदहर्गणे अन्तरं पतिष्यति ।

अथ चान्द्राहर्गणस्य सावनाहर्गणकरणार्थं अवमानयनम् । तद्यथा कल्पचान्द्रैः कल्पावमानि लभ्यन्ते तदा [1]इष्टचान्द्रैः किमिति लब्धावमदिनैः रहितश्चान्द्रोगणः लङ्कार्द्धरात्रे अर्हगणो भवति यमकोटिसूर्योदये च । अत्राप्यवमशेषं भवति । सावयवावमशोधनेन[2] तिथ्यन्ते अर्हगणो भवति । अपेक्षितस्तु रव्युदये अतोऽवमशेषं त्यक्तम् ।

अथ अधिमासावमशेषाभ्यां फलं कुतो न गृहीतं इत्याशङ्कायामाह । सङ्क्रान्तिकालेति सुगमं गतार्थं च । तदुक्तं भास्कराचार्यः—

[3]दर्शावधेः सङ्क्रमकालतः प्राक् सदैव तिष्ठत्यधिमासशेषम् ।
[4]तिथ्यन्तसूर्योदययोस्तु मध्ये सदैव तिष्ठत्यवमावशेषमिति ॥

अथ किञ्चिदुच्यते । स्फुटोऽधिक इति । यदा स्पष्टाधिमासो न लब्धः गणितेन लब्धः तदा निरेकानधिमासान् कृत्वाहर्गणं साधयेत् । ( यदा ) स्पष्टाधिमासो लब्धः गणितागतो न लब्धः तदा सैकानधिमासान् कृत्वा अहर्गणं साधयेत् । सप्ततष्टे गणे चेद् वारो नायाति तदा सैकं निरेकं वा गणं कृत्वा ग्रहान् साधयेत् ।

अथ मध्यमानयनमाह । अहर्गणः स्वैर्भगणैरिति । अहर्गणः स्वैः स्वैः कल्पभगणैर्गुणितः कल्पकुदिनैः भक्तः भगणादिको मध्यमग्रहः स्यात् । अयं लङ्कानिशीथे यमकोटिसूर्योदये सिद्धपुरमध्याह्ने [5]मध्यमो भवति ।

## अत्रोपपत्तिः

त्रैराशिकेन । कल्पकुदिनैः कल्पस्वस्वभगणाः लभ्यन्ते तदा इष्टकुदिनैः किमिति । अत्र सर्वत्र त्रैराशिकं नाम निष्पत्तिः कल्पकुदिनानां कल्पभगणानां च या निष्पत्तिरस्ति सा एव इष्टकुदिनानां चास्ति । अत्र इष्टभगणा अज्ञाताः सन्ति क. कु. दि. क. भग., इ. कु. दि. इ. भग.,

---

१. चन्द्रे इति पु० द्व० पाठः ।

२. शोधने इति ख पुस्तके पाठः ।

३. दर्षावधेः इति पु० द्व० पाठः । सि. शि. गो. म. ग. वा. १६ श्लो. ।

४. सि. शि. गो. म. ग. वा. १८ श्लो. ।

५. मध्यमा इति ख पुस्तके पाठः ।

अत्र द्वितीयतृतीययोः कल्पभगणेष्टकुदिनयोर्घातः[1] प्रथमेन कल्पकुदिनै-र्भक्तः चतुर्थसिष्टभगणाः भवन्ति । एवं सर्वत्र त्रैराशिकोपपत्तिरूहनीया ।

अथ रव्यादीनां कलाद्यां गतिमाह । गोऽक्षास्तथाष्टावित्यादिना सुगमार्थाः । अथ वर्षादौ ध्रुवकानाह । कल्पोक्तेत्यादिना । कल्पीयसौर-दिनचान्द्रदिनसावनदिनानि तथा अधिमास-अवमदिनानि तथा ग्रह-चक्राणि कल्पसौरवर्षैः भक्तानि एकवर्षीयाणि[2] भवन्ति । एतानि अभीष्ट-वर्षैः गुणितानि अभीष्टवर्षादौ भवन्ति । तत्र सावनदिनानि सप्ततष्टानि दिनादिको वाराद्योऽब्दपो भवति । यदि वर्षारम्भादहर्गणः कृतश्चेदब्दपा-ग्रिमवाराद् गणना कार्या ।

अथ वर्षादितो ग्रहानयनमाह । वर्षादित इति । वर्षादितोऽभीष्ट-तिथिपर्यन्ततिथयो विगणय्य ग्राह्याः । यदि अधिमासश्चेत्तस्यापि तिथयो ग्राह्याः । ताः स्वचतुःषष्ट्यंशहीनाहर्गणः स्यात् । अहर्गणः सप्ततष्टोऽब्द-पाग्रिमवाराद्वारः स्यात् । यदि वारो न मिलति तदा गणः सैको निरेको वा कार्यः । अथ अहर्गणेन स्वस्वगतिर्गुणनीया यद्राश्यादिकं[3] भवेत्तद्वर्षा-रम्भध्रुवकैः युक्तं मध्यमग्रहो भवति ।

इति मध्यमग्रहानयनम् ।

रविघ्नेति । गुरोर्यातभगणाः द्वादशगुणाः षष्टितष्टाः विजयाद्या संवत्सरा भवन्ति । यतः सृष्ट्यादौ विजयसंवत्सर आसीत् । चान्द्र-संवत्सरस्तु कल्पादौ प्रमाथी आसीत् । कलियुगादावपि गुरुमानेन विजयसंवत्सरः चान्द्रमानेन प्रमाथी संवत्सर आसीत् । तस्मात् कलि-गतवर्षाणि षष्टितष्टानि प्रमाथीतो चान्द्रसंवत्सरः [4]( स्यात् । सार्द्धाष्ट षष्टिवर्षैर्गुरु ) संवत्सरमानवमानसंवत्सरान्तं एकाधिकं भवति । यथा कलियुगादौ प्रमाथी संवत्सर-विजयसंवत्सरयोरन्तरं चतुर्दशमित-मासीत् । ततः सार्द्धाष्टषष्टिवर्षैः पञ्चदशमितान्तरं जातम् । एवं च षष्टि-मितमन्तरं भूत्वा पुनरेकाद्यमन्तरं भवति । अधुना वर्तमानशके १६५२

---

१. घातिः इति पु० द्व० पाठः ।

२. यानि इति पु० द्व० पाठः ।

१. श्यादिके इति पु० द्व० पाठः ।

२. कोष्ठान्तर्गतपाठो ख पुस्तके न दृश्यते ।

मनुमानेन साधारणसंवत्सरोऽस्ति । गुरुमानेन दुर्मतिसंवत्सरः । अनयोरन्तरं दशमितमस्ति । अग्रे एकादशमितं भविष्यति इति सुधीभिर्ज्ञेयम्[1] । यस्मिन् चान्द्रमासे रविसङ्क्रमो भवति स मासः शुद्धश्चैत्रादिसंज्ञो भवति ।

अथ अधिकमास—अवममासयोर्लक्षणमाह । सङ्क्रान्तिहीन इति । सङ्क्रान्तिहीनो मासः अधिकसंज्ञो भवति । सङ्क्रान्तिद्वयं यस्मिन् भवति स न्यूनमाससंज्ञो भवति । अयं न्यूनमासस्तु कदाचिद् भवति । तत्रापि कार्तिकादिमासचतुष्टय एव भवति नान्यत्र । तस्मिन् वर्षे अधिमासद्वयं भवति ।

अथ खकक्षामाह । वेदर्तुनागाश्वेत्यादिना । सुगमार्थः । इयं खकक्षा [2]ग्रहाणां भगणैर्भक्ता मध्यमा स्वस्वकक्षा भवति । ज्ञशुक्रयोस्तु शीघ्रोच्चकक्षैव कक्षा भवति । तत्र तयोर्भ्रमणं[3] रविगत्या भवति ।

अथ नक्षत्राणां ग्रहाणां च मध्यकक्षास्तु श्रुतिश्च[4] चन्द्रात्कक्षाक्रमेणाह। खखाभ्रवेदाश्विगणेति । सुगमार्थानि । पूर्वं चन्द्रस्य ततो बुधस्य ततः शुक्रस्य ततो रवेः ततः कुजस्य ततो गुरोः ततः शनेः ततः सर्वोपरिष्टाद्[5] भकक्षा । अथवा अर्ककक्षा षष्टिगुणिता भकक्षा भवति ।

ऊर्ध्वस्थितस्येति । ऊर्ध्वस्थितस्य महती भवति । तस्माद् महद् वृत्तस्थो ग्रहः भगणभोगं महता कालेन करोति । यथा शनिः त्रिशद्वर्षैः भगणभोगं करोति । स्वल्पवृत्तस्थो ग्रहः स्वल्पेन कालेन भगणभोगं करोति । यथा चन्द्रो मासैकेन भगणभोगं करोति ।

अथ मध्यकर्णानाह । रवेर्मध्यकर्णोऽर्कदस्रेत्यादिना । श्लोकाः सुगमार्थाः । अथ सूर्याद् योजनात्मकानि बिम्बानि, आह । [6]( खखेष्वर्त्तवः ) इति । सुगमार्थम् ।

---

१. सुद्धिभिः इति पुस्तके द्व० पाठः ।

२. ग्रहण इति ख पुस्तके पाठः ।

३. भंमणं इति पुस्तके द्व० पाठः ।

४. ध्रुतीश्च इति क पुस्तके पाठः ।

५. परिष्ठाद् इति पुस्तके द्व० पाठः ।

६. कोष्ठान्तर्गतपाठो क पुस्तके न लभ्यते ।

अथ चन्द्रगोले भौमादिकानां बिम्बानयनमाह। भौमादिकानां किलेति। चन्द्रगोले आनीतंभौमादिकानां बिम्बमानं पञ्चदशभक्तं कलामानं भवति। यतस्तत्र पञ्चदशयोजनैरेका कला भवति।

अथ स्पष्टकक्षानयनमाह। त्रिज्याचलश्रवणेति। त्रिज्याशीघ्रकर्णयोगार्द्धं स्पष्टकर्णो भवति। मध्यकक्षास्पष्टकर्णगुणा त्रिज्या भक्ता फलं स्पष्टकक्षा भवति। अन्यैराचार्यैः शीघ्रकर्णेनैव स्पष्टकक्षा आनीतास्ति। सा समीचीना भवति। यतस्तत्र कक्षानां साङ्कर्यं भवति।

अथ भौमादिकानां स्पष्टबिम्बानयनमाह। त्रिज्यागुणा बिम्बकलेति। बिम्बकलास्त्रिज्यागुणाः स्पष्टकर्णभक्ताः स्फुटबिम्बमानं भवति। तदुक्तं विष्णुधर्मोत्तरे शाकल्येन–त्रिःचतुःकर्णयोगार्द्धं स्फुटकर्णोऽस्य मस्तके। ग्रहः सञ्चरतीति।

अथ चन्द्रा (दि) ग्रहाणां परमनीचोच्चकर्णानाह। चान्द्रस्य नीचश्रवण इत्यादिना। सुगमार्थाः।

अथ भौमादिकानां योजनात्मिकाः शीघ्रान्त्यफलज्यका आह। भौमस्य शीघ्रान्त्यफलज्येत्यादिना। श्लोकाः सुगमार्थाः।

अथ सूर्यचन्द्रयोर्योजनात्मके मान्द्यान्त्यफलज्ये आह। रवेर्नृपाभ्राङ्गयमा इति। सुगमार्थम्।

अथ यवनाचार्यमतेन चन्द्रान्नीचोच्चकर्णानाह। रूपं भुव इति। भूकर्णस्य रूपमितं मानं प्रकल्प्य तन्मानेन ये नीचोच्चकर्णाः भवन्ति तान् तत्प्रमाणेन बिम्बमानं च वदामि। चन्द्रस्य नीचश्रवणेत्यादिभिः। श्लोकाः सुगमार्थाः।

## अत्रोपपत्तिः

सर्वकक्षाणां भूपरिध्युपयोगित्वादादौ भूपरिध्युपपत्तिरुच्यते।

[1]पुरीरक्षसां देवकन्याथ काञ्ची सितः पर्वतः पर्यली वत्सगुल्मम्।
पुरी चोज्जयिन्याह्वया गर्गराटं कुरुक्षेत्रमेरू भुवो मध्यरेखा॥

एतेषु अन्यतमे रेखानगरे याम्योत्तरभित्तियन्त्रेण वेधेन अक्षांशनिश्चयः कार्यः। पुनस्तत्र उत्तरतः पञ्चाशतक्रोशाधिकान्तरे रेखानगरे, एव तेनैव यन्त्रेण अक्षांशनिश्चयः कार्यः। अनयोरन्तरं कार्यम्। नगरा-

१. करणकुतूहले भास्कराचार्यैरुक्तमस्ति।

न्तरयोजनानि भांशैर्गुण्यानि अक्षांशान्तरेण भाज्यानि फलं भूपरिधिः भवति। पुनरस्मात् खबाणसूर्यैः १२५० हताद् भनन्दाग्नि ३९२७ भक्ताल्लब्धं भूव्यासो भवति। भूपरिधिस्तु यवनैः सहस्रमिता[1] ( निश्चिताऽस्ति। अथ यवनैर्भूकर्णे योजनबाहुल्याद्रूपमितमेव कल्पितम्। तेन[2] ) मानेन कक्षा कर्णाश्च आनेयाः। अत्र तु कक्षाणां प्रयोजनाभावात्कर्णा एव लिखिता। कक्षास्तु तैरुपर्य्युपरि संलग्ना एव कल्पिताः।

अथ पौर्णमास्यां याम्योत्तरभित्तियन्त्रेण याम्योत्तरवृत्तस्थस्य चन्द्रस्य वेधेन नतांशाः ग्राह्याः। पुनर्गणितेन च ग्राह्याः। अनयोरन्तरं दृग्लम्बनं भवति। अस्य ज्या कार्या। पुनर्वेधितनतांशज्या रूपगुणा दृग्लम्बनज्याभक्ता लब्धयोजनात्मकः कर्णो भवति। पुनरयं परममन्दकर्णेन भाज्यः फलं परमोच्चकर्णो भवति। स चायं ६।३४।१५। पुनः वेधसिद्धकर्णः परमनीचकर्णमानेन ३४।४ गुणितः वेधकालिकेष्टमन्दकर्णेन भक्तः फलं परमनीचकर्णो भवति। एतदन्तरमिता चन्द्रकक्षायाः पुष्टतास्ति। चन्द्रपातोच्चकर्णस्तु ६७।२०(१०)। एतावन्मितोऽस्ति। अयं बुधबिम्बार्द्धेन ०।२।३४। युतः ६७।२२।४४। अयं बुधस्य परमनीचकर्णो भवति। अयं परमोच्चकर्णगुणः परमनीचकर्णभक्तः योजनात्मकः परमोच्चकर्णो भवति २२६।१६।३६। अयं शुक्रबिम्बार्द्धमानेन २२।३७। युतः २२६।४२।१३। किञ्चिदन्तरं कक्षयोरपेक्षितम्। तेन किञ्चिदधिको लिखितः २२६।४४।५०। अयं शुक्रनीचकर्णः। पुनरस्मादनुपातेन शुक्रोच्चकर्णः साध्यः। पुनरयं शुक्रोच्चकर्णः सूर्यबिम्बार्द्धमानेन ६।५३ युतो जातः सूर्यनीचकर्णः। पुनरनुपातेन सूर्योच्चकर्णः साध्यः। अयं भौमबिम्बार्द्धेन युतो जातो भौमनीचकर्णः। पुनरस्माद् भौमोच्चकर्णः साध्यः। अयं गुरुबिम्बार्द्धयुतो जातो गुरुनीचकर्णः। पुनरस्माद् गुरूच्चकर्णः साध्यः। अयं शनिबिम्बार्द्धयुतो जातः शनिनीचकर्णः। पुनरस्माच्छनेरुच्चकर्णः[3] साध्यः। पुनरयं नक्षत्रप्रमाणबिम्बार्द्धयुतो जातो भकर्णः। तदेवमुपपन्नं यथोक्तम्।

---

१. मितो इति क पुस्तके पाठः ख पुस्तके च मिलेनेति।

२. कोष्ठान्तर्गतपाठः ख पुस्तके न दृश्यते।

३. च्छशे इति पुस्तके द्व० पाठः।

अथ बिम्बार्द्धमानान्याह। खं सप्तचन्द्रेत्यादिना। श्लोकाः सुगमार्थाः। अथ भूपरिधिमानमाह। खंशून्यखाङ्केति। सुगमार्थम्। अत्र रविणा षोडशशत १६०० परिमितः भूव्यास उक्तः। तत्परिधिस्तु [1]"व्यासवर्गाद्दशगुणान्मूलं भूपरिधिः स्फुट' इत्यनेन प्रकारेण स्थूलं परिधिमानं उक्तम्। इदं तत्त्वविवेककारेण कमलाकरज्योतिर्विदा सूक्ष्मत्वेनाङ्गीकृत्य सर्वत्र व्यासात्परिध्यानयने अयं प्रकारः स्वीकृतः। स्वग्रन्थे उक्तमपि [2]"रूपमिते व्यासे दशमूलमितः परिधिरिति'।

अन्यच्च [3]( व्यासे भनन्दाग्नि हते विभक्ते खबाणसूर्यः परिधिस्तु सूक्ष्म इत्यस्मिन् समीचीनसूक्ष्मप्रकारे भास्कराचार्योक्तौ[4] दूषणमपि दत्तम्। तदर्थं सम्राट्श्रीराजाधिराजजयसिंहदेवैः सवाईजयपुरे स्वकृतयन्त्रशालायां शिल्पिभिः क्षेत्रज्ञैः[5] ज्योतिर्विद्भिश्च समेत्य निश्चयः कृतः। तेन 'व्यासे भनन्दाग्निहते विभक्ते खबाणसूर्यः परिधिस्तुसूक्ष्म' इत्ययं भास्कराचार्योक्तः प्रकारः समीचीनः इति सिद्धम्।

अथ सौरोक्तं भूव्यासमाह। खखाङ्कचन्द्रेति। सुगमार्थम्।

अथ स्पष्टपरिध्यानयनं देशान्तरं चाह। लम्बज्यकान्निमिति। भूपरिधिमानं लम्बज्यया गुण्यं त्रिज्यया भाज्यं स्वदेशे स्पष्टपरिधिर्भवति।

ग्रहभुक्तिः देशान्तरेण गुण्या स्पष्टपरिधिना भाज्या फलं कलात्मकं देशान्तरं भवति। तद्ग्रहे स्वं कार्यं स्वदेशे रे[6] ( खा ) देशात्पश्चिमस्थे सति, पूर्वस्थे ऋणं कार्यम्।

अथ रेखामाह। रक्षोनिवासादिति। लङ्कातो मेरुगतं सूत्रं मध्यरेखा भवति। अथ स्वदेशः पूर्वतो पश्चिमतोऽस्तीति ज्ञानोपायमाह। उन्मीलनाच्च शशिन इति। यदा खग्रासो भवति तदा स्वदेशे देशान्तरफलदानं विना गणितं कृत्वा उन्मीलनकालः साध्यः। यदि उन्मीलनं गणितागत-

---

१. सू. सि. म. ६१ श्लो.।

२. सि. त. वि. म. भौ. १५९ श्लो.।

३. ली. क्षे. व्य. ४२ श्लो.।

४. र्योक्ते इति पु० ख० पाठः।

५. क्षेत्रज्ञो इति पुस्तके ख० पाठः।

६. रे प्रदेशा इति ख पुस्तके पाठः।

कालात्पूर्वं भवति तदा स्वदेशो रेखातः पश्चिमस्यामस्ति। यदि उन्मीलनं गणितागतकालान्तरं भवति तदा रेखादेशात्स्वदेशः पूर्वतोऽस्तीति ज्ञेयम्। गणितागतकाल-दृक्कालयोरन्तरं घट्याद्यं देशान्तरं भवति। इदं स्पष्ट-भूपरिधिना गुण्यं षष्ट्या भाज्यं देशान्तरयोजनानि भवन्ति।

अथ वारप्रवृत्तिमाह। वारप्रवृत्तिरिति। प्राक्देशे स्वनिशार्द्धे देशान्तरपलैर्न्यूने वारप्रवृत्तिर्भवति। पश्चाद्देशे स्वनिशार्द्धे देशान्तरपलैरधिके वारप्रवृत्तिर्भवति।

अथ उदयान्तर-भुजान्तरयोरानयनमाह। मेषाग्निरद्धे इति। स्पष्टार्कतो निरक्षासवो ग्राह्याः। मध्यार्कस्य कलाः ग्राह्याः। अनयोरन्तरं ग्रहगत्या गुणनीयं अहोरात्रासुभिर्भाज्य फलं कलाद्यं ग्रहे संस्कार्यम्। यदि मध्यार्ककला असुभ्योऽधिकाः भवन्ति तदा ऋणं कार्यम्। न्यूनस्तदा धनं कार्यम्। इत्युक्तप्रकारेण फलत्रयसंस्कृतो ग्रहः स्वक्षितिजे रविबिम्बे सति भवति।

इति मध्यमाधिकारस्य टीका।

अथ गोलबन्धमाह। गोलबन्धं प्रवक्ष्यामि, इत्यादिभिश्चतुर्दशश्लोकैः। श्लोकास्तु सुगमार्थाः।

इति मध्यमाधिकारः सटीकः सोपपत्तिकः सम्पूर्णः।

राजाधिराजप्रभुतोषणार्थे सम्राट् जगन्नाथकृते सुशिल्पे।
*सिद्धान्तसम्राजि* महागभीरे मध्यक्रियाध्याय अगात्समाप्तिः॥

## अथ स्पष्टाधिकार आरभ्यते।

तत्रादौ सर्वोपयोगित्वाद्राशित्रयस्य प्रत्यंशजीवाः कोष्ठकाः[1] लिख्यन्ते।

अथ ज्याकोष्ठकेभ्यो जीवानयनम्।

ज्यका भुजांशप्रमकोष्ठकाधो पृथक् तदैष्यान्तरकेण निघ्नम्।
कलादिकं षष्टिविभाजितं च फलेन युक् सा भुजशिञ्जिनी स्यात्॥ १॥
ज्ञातज्यकायाः प्रविशाेध्य जीवां शेषं विनिघ्नं खरसैर्हतं च।
यातैष्यजीवान्तरकेण लब्धं विशुद्धजीवाङ्कयुतं धनुः स्यात्॥ २॥

सुगमार्थे पद्ये।

---

१. सिद्धान्तसारे दशमप्रकरणे लिखिताः सन्ति। अत्र पुनरुक्तत्वान्नालेखि। किन्तु ख पुस्तके सारिणी नोपलभ्यते।

## अथ मन्दपरिधीनाह ।

रवेर्मन्दनीचोच्चवृत्तस्य भागाः
पयोधीन्दवो[1] १४ रात्रिनाथस्य दन्ताः[2] ३२ ।
शराश्वा ७५। खरामाः ३०। सुरा ३३
भास्कराश्च १२ नवाम्भोदयः ४६। युग्मकान्ते कुजादेः ॥ ३ ॥

सुगमार्थम् ।

अयुग्मान्तके खाश्विलिप्ताविहीना
रवेः शीतरश्मेश्च पूर्वैर्निरुक्तः ।
गुणाश्वा ७३। गजाक्षा ५८। रदाः ३२ भूभुव ११ श्च
गजाम्भोदयो ४८ [3]मन्दभागाः कुजादेः ॥ ४ ॥

सुगमार्थं पद्यम् ।

## अथ शीघ्रपरिधीनाह ।

युग्मान्तके शीघ्रपरिध्यकांशा अर्थाग्नि-
दस्राः २३५। गुणरामचन्द्राः १३३ ।
खाश्वा ७० द्विषड्लोचन २६२ सम्मिताश्च
नन्दाग्नयः ३९ स्युः क्षितिजादिकानाम् ॥ ५ ॥

सुगमार्थं पद्यम्

अयुग्मके ते लवृत्तभागाः
( य ) माग्निदस्रा २३२। यमरामचन्द्राः १३२ ।
खाश्वाः ७०। खषट्लोचनका[4] २६० स्तथैव
खाम्भोधयो ४०। भूमिजात्तत्प्रदिष्टाः[5] ॥ ६ ॥

[6]सुगमार्थं पद्यम् ।

---

१. धीदेवो इति पुस्तक द्व० पाठः ।

२. दता इति पुस्तक द्व० पाठः ।

३. सुदभागा इति पुस्तक द्व० पाठः ।

४. लोचका इति पुस्तक द्व० पाठः ।

५. भूमितात्प्रदि—इति पुस्तक द्व० पाठः ।

६. मन्द-शीघ्रपरिधिभागाः सूर्यसिद्धान्तानुरूपाः सन्ति ।

## अथ मन्दशीघ्रपरिधिभागकोष्ठकाः ।

( मन्द परिध्यंशाः )

| | सू० | चं० | मं० | बु० | बृ० | शु० | श० |
|---|---|---|---|---|---|---|---|
| युग्मप० | १४ | ३२ | ७५ | ३० | ३३ | १२ | ४६ |
| | ० | ० | ० | ० | ० | ० | ० |
| विषमप० | १३ | ३१ | ७३ | ५८ | ३२ | ११ | ४८ |
| | ४० | ४० | ० | ० | ० | ० | ० |

( शीघ्रपरिधिभागाः )

| | मं० | बु० | गु० | शु० | श० |
|---|---|---|---|---|---|
| युग्मप० | २३५ | १३३ | ७० | २६२ | ३६ |
| विषम प० | २३२ | १३२ | ७० | २६० | ४० |

## अथ रव्यादीनां मन्दोच्चान्याह ।

द्वयं २ सप्तचन्द्राः १७ नृपाः १६
चन्द्रबाणा ५१ भपूर्वं रवेर्मन्दतुङ्गं प्रदिष्टम् ।
कुजस्याब्धयो ४ दिग् १० द्वयं २
दस्रपक्षौ २२ तथाज्ञस्य सप्ताभ्रचन्द्राश्च पिण्डाः ॥ ७ ॥

गुरोः पञ्च चन्द्राश्विनः स्वश्च तर्का भृगोर्द्वौ नवाब्जाः कुपक्षत्रिदस्राः ।
शनेः सप्ततर्काश्विनः सप्तरामाः खरामाः अथोवच्मिपातान् कुजादेः ॥८॥

रूपं खचन्द्राश्च गुणा द्विदस्रा भौमस्य पातः किल साम्प्रतोयम् ।
शून्यं नखा भूमिकृता बुधस्य द्वौ गोभुवः खाम्बुधयो गुरोश्च ॥९॥
शुक्रस्य गोर्भूनयनाः कुवेदाः शनेस्त्रयं शून्यभुवोऽक्षिदस्राः ।
ज्ञशुक्रयोः पातभवौ ध्रुवौ च स्वशीघ्रकेन्द्रेण युतौ स्फुटौस्तः ॥१०॥

एते श्लोकाः प्रकटार्थाः ।

## अथ मन्दकेन्द्रचलकेन्द्रयोरानयनमाह ।

मन्दतुङ्गरहितः खचरः स्यान्मन्दकेन्द्रमथ चञ्चलतुङ्गम् ।
खेचरेण रहितं चलकेन्द्रं त्रित्रिभैः कृतपदानि च चक्रे ॥ ११ ॥
ओजयुग्ममिति तानि भवन्ति यातमोजचरणे च भुजः स्यात् ।
ऐष्यकं[1] समपदे किल बाहुर्भत्रयं तदयुक्किल[2] कोटिः ॥१२॥
जूकमेषवदने मृदुकेन्द्रे मन्ददोर्भवफलं[3] धनमस्वम् ।
शीघ्रजं फलमतो विपरीतं प्राक्तनैर्निगदितं निजतन्त्रे ॥ १३ ॥

एतेषां पद्यानामर्थः ।

मन्दोच्चरहितो ग्रहः मन्दकेन्द्रं भवति ।

अथ शीघ्रोच्चं ग्रहेण रहितं शीघ्रकेन्द्रं भवति । केन्द्रस्य राशित्रयेण एकैकं पदं भवति । एवं चक्रे चत्वारि पदानि भवन्ति । ओजयुग्ममिति[4] । प्रथमं पदं विषमं द्वितीयं समं तृतीयं विषमं चतुर्थं समं एवमोजे चरणे ( प्रथम ) तृतीयपदयोर्गतभुजः[5] स्यात् । द्वितीयचतुर्थपदयोः ऐष्यं भुजं स्यात् । भुजरहितं त्रिभं कोटिर्भवति ।

अथ केन्द्रवशात्फलस्य धनर्णतामाह । जूकमेषवदने इति । मन्दकेन्द्रे तुलादिके सति मन्दफलं धनं भवति । मेषादिके सति ऋणं भवति । शीघ्रकेन्द्रे मेषादिके (सति धनं) शीघ्रफलं भवति । तुलादिके सति ऋणं भवति ।

## अथ परिधिस्पष्टीकरणमाह ।

ओजान्तयुग्मान्तपरिध्यकांशविश्लेषनिघ्नी निजदोर्लवज्या ।
त्रिज्योद्धृता युग्मवृत्तावृणं स्वमोजाधिकोने परिधिः स्फुटः स्यात् ॥१४॥

अस्यार्थः । ओजयुग्मान्तपरिध्यन्तरेण[6] स्वभुजज्या गुण्या मन्दपरिध्यन्तरं चेन्मन्दकेन्द्रदोर्ज्या ग्राह्या । शीघ्रपरिध्यन्तरं चेच्छीघ्रकेन्द्रदोर्ज्या ग्राह्या त्रिज्याभक्ता फलं युग्मान्तपरिधौ ओजाधिके सति ऋणं कार्यं ओजोने धनं कार्यं परिधिः स्पष्टः स्यात् ।

---

१. एष्यकमिति पु० द्व० पाठः ।
२. दयुक्कि—इति पुस्त० द्व० पाठः ।
३. मान्दोर्भ—इति पुस्त० द्व० पाठः ।
४. अजो यु—इति पुस्त० द्व० पाठः ।
५. अतिभु—इति पुस्त० द्व० पाठः ।
६. युग्मवृणं इति ख पुस्त० द्व० पाठः ।

अथ स्पष्टपरिधेर्मान्दान्त्यफलज्यां शीघ्रान्त्यफलज्यानयनं ततो भुज-फल-कोटिफलानयनं चाह ।

स्पष्टीकृतस्य परिधेः खलुः षष्ठकांशः
षष्ट्या मिते त्रिभगुणेऽन्त्यफलस्य जीवा ।
स्पष्टा तया विनिहते भुजकोटिजीवे
त्रिज्योद्धृते च भुजकोटिफले भवेताम् ॥ १५ ॥

अस्यार्थः । षष्टिमितत्रिज्यायां स्पष्टपरिधेः षष्ठांश अन्त्यफलस्य जीवा स्पष्टा स्यात । तया गुणिते भुजकोटिजीवे त्रिज्याभक्ते भुजकोटिफले भवेताम ।

## अत्रोपपत्तिः

त्रैराशिकेन भांशपरिधौ षष्टिमिता त्रिज्या लभ्यते तदा मन्दपरिधिना वा शीघ्रपरिधिना किमिति अत्र षष्ट्या भांशानामपवर्त्तनं कृते सति हरस्थाने षड् भवन्ति तदेवमुपपन्नं परिधिषष्ठांशोऽन्त्यफलज्या भवतीति।

पुनरनुपातः त्रिज्यया यद्यन्त्यफलज्या लभ्यते तदा इष्टया दोर्ज्यया इष्टकोटिज्यया च किमिति लब्धं फलं इष्टभुजफलं इष्टकोटिफलं च भवति ।

## अथ शीघ्रकर्णानयनमाह ।

त्रिभज्यका कोटिफलज्ययोश्च यो (गो) न्तरं नक्रकुलीरकेन्द्रे ।
शीघ्रेऽथ तद्दोःफलवर्गयोगान्मूलं चलः स्याच्छ्रवणः फलार्थम् ॥ १६ ॥

अस्यार्थः । शीघ्रकेन्द्रे मकरादिगे सति त्रिज्या कोटिफलज्ययोर्योगः कार्यः । कर्कादिगे सति अन्तरं कार्यम् ।

अथ योगवर्गस्य वान्तरवर्गस्य भुजफलवर्गेण[1] योगः कार्यः । तस्मान्मूलं ग्राह्यम् । स फलार्थं शीघ्रकर्णः स्यात् ।

## अथ [2]शीघ्रफलानयनमाह ।

द्राग्दोः फलात्त्रिज्यकया विनिघ्नात्कर्णोद्धृताल्लब्धधनुर्लवाद्यम् ।
शीघ्रं फलं स्यान्मृदुदोः फलस्य चापं बुधैर्मन्दफलं निरुक्तम् ॥ १७ ॥

---

१. वर्गेन इति पु० द्व० पाठः ।

२. शीघ्रकर्णानय—इति पु० द्व० पाठः ।

## अथ शीघ्रकर्णं विनैव फलानयनमाह ।

तद्यथा स्पष्टकोट्या भुजफलं लभ्यते तदा त्रिज्यया किमिति फलस्य छायां[1] सुचापं शीघ्रफलं भवति ।

अस्यार्थः । शीघ्रभुजफलात्त्रिज्यागुणात्कर्णभक्ताल्लब्धफलस्य चापं शीघ्रफलं[2] स्यात् ।

## अत्रोपपत्तिः

शीघ्रकर्णाग्रे भुजफलं तदा त्रिज्याग्रे किमिति फलस्य धनुः शीघ्रफलं भवतीत्युपपन्नम् ।

अथ मन्दफलसाधनार्थं मन्दकर्णो रविणा स्वल्पान्तरत्वान्नोक्तः सोऽत्रावश्यमपेक्षितः । तं विना [3]मध्ये शीघ्रफलस्यार्द्धमित्यस्योपपत्तिर्न सिद्धयति ।

## अथ फलदानक्रममाह ।

मध्ये चलार्द्धं किल मान्दमर्द्धं दत्त्वा ततो मन्दफलं समस्तम् ।
मध्यग्रहे तत्र फलं चलं च सर्वं प्रदेयं द्युचरः स्फुटः स्यात् ॥ १८ ॥

अस्यार्थः । आदौ मध्यग्रहे शीघ्रफलार्द्धं देयं ततो मन्दफलार्द्धं शीघ्रफलार्द्धसंस्कृते देयम् । एवं फलद्वयसंस्कृते (मध्ये) मन्दफलं ( साध्यं तत् ) समस्तं मध्यग्रहे देयं तस्माच्छीघ्रफलं सम्पूर्णं मन्दस्पष्टे देयं ग्रहः स्पष्टः स्यात् ।

## अथ मन्दकर्णमङ्गीकृत्यार्द्धफलवासनोच्यते ।

अभीष्टत्रिज्यामितकर्कटेन कक्षावृत्तं कार्यं[4] तत्रोच्चनीचगा रेखा कार्या तिर्यग्रेखा च कार्या । ऊर्ध्वरेखावृत्तसंपाते उच्चं, अधः संपाते नीचं चाङ्कनीयम् । उच्चाद् वृत्ते मन्दकेन्द्रं दत्त्वा चिह्नं कार्यं चिह्नान्मान्दान्त्य-फलज्यया मन्दपरिधिः कार्यः । तत्केन्द्रभूकेन्द्रस्पष्टारेखा लघुवृत्तपालि-

---

१. अत्रानुपातलब्धफलं स्पर्शरेखारूपं भवति । अतः स्पर्शरेखाजनितचापं शीघ्रफलमिति युक्तमेव ।

२. मन्दफलं इ० पुं० द्व० पाठः ।

३. सू० सि० स्प० १४ श्लो० ।

४. कार्या इति पु० द्व० पाठः ।

पर्यन्तं कार्या। तत्राप्यूर्ध्वपालिरेखासंपाते उच्चं अधः पालिरेखासंपाते नीचं कल्पनीयम्। मन्दपरिधौ भांशाः कल्पनीयाः। तत्राप्युच्चान्मन्दकेन्द्रं विलोमदिशि दत्त्वा चिह्नं कार्यम्। अस्माच्छीघ्रान्त्यफलज्यार्द्धेन शीघ्रपरिधिः कार्यः। अत्र शीघ्रन्त्यफलज्या[1] मन्दपरिधित्रिज्यामानेन ग्राह्या न तु महत्त्रिज्यामानेन। मन्दपरिधिशीघ्रपरिधिकेन्द्रगता रेखा उपरि शीघ्रपरिधिपालौ यत्र लगति तत्र शीघ्रोच्चं कल्पनीयम्। उच्चाच्छीघ्रकेन्द्रं प्रथममन्दकेन्द्रविलोमदिशि दत्त्वा चिह्नं कार्यम्। तच्चिह्नान्मन्दपरिधिकेन्द्रपर्यन्तं रेखा कार्या। स शीघ्रकर्णो भवति। मन्दपरिधौ शीघ्रकर्णोच्चरेखयोरन्तरं शीघ्रार्द्धफलं भवति। इत्यनेन मन्दकेन्द्रमेकफलसंस्कृतं जातम्।

पुनः शीघ्रकर्णः मन्दपरिधौ यत्र लग्नस्तत्र तथैव मान्दान्त्यफलज्यार्द्धेन मन्दपरिधिः कार्यः। अत्रोच्चरेखा तु शीघ्रकर्ण एवास्ति। अत्रापि पूर्ववदुच्चं कल्पयित्वा मन्दकेन्द्रं प्रथममन्दकेन्द्रदिशि ( द ) त्वा चिह्नं कार्यम्। तच्चिह्नाद् बृहन्मन्दपरिधिकेन्द्रपर्यन्तं रेखा कार्या। स मन्दकर्णो भवति। स मन्दकर्णः बृहन्म( न्द ) परि ( धि ) पालौ यत्र लग्नस्तच्चिह्नशीघ्रकर्णान्तरे मान्दार्द्धफलं ज्ञेयम्। इत्यनेन बृहन्मन्दपरिधौ मन्दकेन्द्रं फलद्वयसंस्कृतं जातम्।

तस्य दोर्ज्यां कोटिज्यां ( च ) विधाय मन्दकर्णः साध्यः। तस्मान्मन्दफलमानेयं तन्मध्यग्रहे संस्कार्यम्। स मन्दस्पष्टो भवति। मन्दकर्णः कक्षावृत्ते यत्र लग्नस्तत्र मन्दस्पष्टचिह्नं ज्ञेयम्। तस्माच्चिह्नाच्छीघ्रान्त्यफलज्यया वृत्तं कार्यम्। तस्योर्ध्वाधररेखा तु मन्दकर्णज्यावृत्तं [2]कर्तृमन्दस्पष्टशीघ्रोच्चान्तररूपं शीघ्रपूर्वदिशि दत्त्वा दोर्ज्या कोटिज्या च कार्या। दोः फलं कोटिफलं चानेयम्। कोटिफलं कर्कादिकेन्द्रे त्रिज्यायां शोध्यम्। मकरादिकेन्द्रे योज्यम्। यतो मकरादिकेन्द्रे कोटिफलं त्रिज्याग्रादुपरि भवति। कर्कादिकेन्द्रे त्रिज्याग्रादधो भवति। एवं कृते स्पष्टा कोटिर्भवति। स्पष्टकोटिवर्ग भुज ( फलवर्ग ) योग ( वर्ग ? ) पदं कर्णो भवति। कुतः

१. फलज्यार्द्धे इति खपु० पाठः।

२. कर्ति इति पु० ह्व० पाठः।

जात्यक्षेत्रत्वात् । पुनरागतं भुजफलं कर्णाग्रे भवति । तस्य धनुः करणार्थमनुपातः क्रियते कर्णाग्रे इदं तदा त्रिज्याग्रे किमिति लब्धफलस्य चापं ( मन्दफलं शीघ्रफलं च ) कक्षावृत्ते ( भवति ) । मन्दकर्णः शीघ्रकर्णः कक्षावृत्ते ( यत्र ) लग्नस्तत्र स्पष्टो ज्ञेयः । तदेवमुपपन्नं मध्ये शीघ्रफलस्यार्द्धमिति ।

## अथ प्रकारान्तरेणोच्यते ।

शीघ्रफलार्द्धमन्दफलार्द्धसंस्कृतग्रहान्मन्दकेन्द्रमानीय पुनर्मन्दशीघ्रफलाभ्यामसंस्कृतमध्यग्रह एव संस्कारः कृतोऽस्ति । तेनेदं ज्ञायते ग्रहमन्दोच्चस्य शीघ्रफलार्द्धमन्दफलार्द्धाभ्यां मन्दशीघ्रफलसंस्कार उक्तो भवति । तत्र[1] मन्दोच्चस्य ग्रहशीघ्रफलार्द्धतुल्यमेव शीघ्रफलं भवति ।

एवं ग्रहशीघ्रपरिध्यर्द्धतुल्यो मन्दपरिधिः ग्रहमन्दपरिध्यर्द्धतुल्यः शीघ्रपरिधिश्च ग्रहमन्दोच्चस्य भवतः । तत्र ग्रहान्मन्दोच्चो मन्दगतित्वाद् ग्रहपृष्ठतो वस्तुतो गणनीयः । शीघ्रोच्चोऽपि ग्रहापेक्षया शीघ्रगतित्वात्पूर्वभाग एव नियमेन गणनीयः । तत्र शीघ्रोच्चस्य ग्रहाच्छीघ्रगतित्वाद्, शीघ्रोच्चाद् ग्रहं दूरीकृत्य[2] परमार्थतः शीघ्रकेन्द्रं विज्ञेयम् । एवं मन्दोच्चस्य मन्दगतिकत्वाद् ग्रहान्मन्दोच्चं निराकृत्य परमार्थतः मन्दकेन्द्रं विज्ञेयम् । तत्र ग्रहमन्दोच्च एव मन्दफलशीघ्रफलसंस्कारः कर्तव्यो भवति ग्रहकेन्द्रस्य स्पष्टस्य परिज्ञानाय । परन्तु ग्रहमन्दोच्चार्थमपि मन्दोच्चशीघ्रोच्चभगणतत्परिधिपरिमाणादिकथने ग्रन्थगौरवापत्तेः, ग्रहमन्दशीघ्रफलार्द्धत एव लाघवेन कार्यस्य अव्यभिचारेण सिद्धेर्मन्दपरिधिजशीघ्रपरिधिजफलयोरर्द्धीकृतयोरेकरूपतया वैषम्याभावात् तयोः मन्दोच्चे संस्कारे क्रियमाणे मन्दोच्चीयमन्दोच्चशीघ्रोच्चतत्परिध्यादि ( ग ) णनक्रियाभ्यावृत्त्या क्रिया गौरवापत्तेः लाघवान्मध्यग्रह एव शीघ्रमन्दार्द्धफलयोः यथा सर्यादं संस्कारे कृते सति मान्दकेन्द्रस्याव्यभिचारेण सिद्धेः मध्यग्रह एव संस्कारद्वयं यथायोग्यं धनर्णत्वेन समादृतम् ।

एवं च तत्र ग्रहे मान्दं शैघ्रं फलं धनं चेन्मन्दोच्चे ऋणमेव । ग्रहे ऋणं चेन्मन्दोच्चे धनमेवेति । मन्दोच्चविपरीतो ग्रहसंस्कारो ग्रहविप-

---

१. अत्र ग्रन्थकारेण युक्तिर्न दत्ता ।

२. ऊनीकृत्य इति पाठः साधु प्रतिभाति ।

रीतो मन्दोच्चे इति भवति । तथा सत्येव केन्द्रस्याव्यभिचारेण सिद्धेः। एवं ग्रहमन्दशीघ्रोच्चभगणाभ्यामूनाः ग्रह ( मंद + ) मन्दोच्चस्य प्रत्यग्गते-भंगणाः भवन्ति । एवं ग्रहभगणा एव ग्रहमन्दोच्चस्य शीघ्रोच्चभगणाः भवन्ति । एवं च ग्रहमन्दोच्चस्य मन्दशीघ्रपरिधी मन्दशीघ्रोच्चौ तद् भगणाश्चेह मध्येशीघ्रफलस्यार्द्धं मान्दमर्द्धफलं तथा इत्यनेन सूचिता भवतीति विवेचनीयम् ।

## अथ [२]धनर्णतोपपत्तिः

कक्षावृत्ते मन्दपरिधिकेन्द्रं ( केन्द्र × ) मन्दकेन्द्रगत्या पूर्वतो गच्छति । मन्दपरिधिगतकेन्द्रं स्वस्थान एव मन्दकेन्द्रगत्या पश्चि ( म ) तो भ्रमति । तेन मन्दकर्णो मेषादिकेन्द्रे मध्यमात्पश्चिमत एव भवति। तुलादिकेन्द्रे पूर्वत एव भवति । अतो मन्दफलं मेषादौ ऋणं तुलादौ धनं भवति ।

शीघ्रपरिधिकेन्द्रं मन्दस्पष्टगत्या पूर्वतो गच्छति । शीघ्रपरिधिपालौ ग्रहबिम्बं शीघ्रकेन्द्रगत्या पूर्वतो भ्रमति ।

शीघ्रकर्णरेखा मन्दकर्णरेखातो मेषादिकेन्द्रे अग्रत एव भवति तुलादिकेन्द्रे पृष्ठत एव भवति । तेन शीघ्रफलं मेषादौ धनं तुलादावृणं भवतीत्युपपन्नम् ।

अथ फलचतुष्टयं भौमादिपञ्चग्रहाणां देयं सूर्यचन्द्रयोस्तु मन्दफलमेव देयमित्याह ।

उक्तप्रकारेण खलु स्फुटत्वं भौमादिकानां गणकैर्विधेयम् ।
मान्दं फलं केवलमेव देयं तिग्मद्युतेश्चापि निशाकरस्य ॥ १६ ॥

अदः पद्यं स्पष्टार्थम् ।

## अथ गतिस्पष्टीकरणमाह ।

मन्दोच्चभुक्तिं विधुमध्यभुक्तेर्विशोध्य दोर्ज्या विवरादि कृत्वा ।
फलं पुरावत्स्वमृणं गतौ स्यान्मन्दस्फुटा कर्किमृगादिकेन्द्रे ॥ २० ॥

---

१. अत्रापि युक्तिरपेक्ष्यते ।

२. फलसंस्कारोपपत्तिः परम्परातो भिन्ना गूढा च ।

अस्यार्थः। चन्द्रमन्दोच्चगतिं मध्यचन्द्रभुक्तेर्विशोध्य शेषं चन्द्रस्य मन्दकेन्द्रगतिर्भवति। अन्येषां ग्रहाणां मध्यगतिरेव मन्दकेन्द्रगतिरस्ति। अस्याः दोर्ज्यान्तरं साध्यम्।

तद्यथा। अद्यतनमन्दकेन्द्रभुजस्तु ज्ञात एवास्ति। तस्य दोर्ज्यापि ज्ञातास्ति। श्वस्तनमन्दकेन्द्राद् भुजं विधाय दोर्ज्या कार्या। तदन्तरं मान्दान्त्यफलज्यागुणं त्रिज्याभक्तं गतिमन्दफलं[1] भवति। तत्फलं मध्यगतौ कर्कादिकेन्द्रे धनं मकरादिकेन्द्रे ऋणं कार्यं मन्दस्पष्टा गतिर्भवति। एवं सर्वेषां मन्दस्पष्टागतिः कार्या।

## अथ धनर्णतोपपत्तिः।

अद्यतनश्वस्तनमध्यग्रहयोरन्तरं मध्यमा गतिः भवति। मन्दस्पष्टयोरन्तरं मन्दस्पष्टा गतिर्भवति। फलयोरन्तरं गतिफलं भवति। तत्र मेषादेः कर्कादिपर्यन्तं फलं ऋणं भवति। कुतः। अद्यतनऋणफलात् श्वस्तनऋणफलं अधिकमस्ति। अनयोरन्तरे क्रियमाणे फलान्तरं ऋणशेषमेव भवति।

एवं मकरादेः मेषादिपर्यन्तं अद्यतनधनमन्दफलात् श्वस्तनं धनं मन्दफलमूनं भवति। संशोध्यमानं स्वमृणत्वमेतीत्यनेनान्तरे क्रियमाणे ऋणशेषमेवावशिष्यते (ते) न मकरादेः कर्कादिपर्यन्तं गतिफलं ऋणं भवतीत्युपपन्नम्।

एवं कर्कादेस्तुलापर्यन्तमद्यतनऋणफलात् श्वस्तनमृणफलं न्यूनं भवति। तत्र शोधने क्रियमाणे धनशेषं भवति।

एव तुलादेर्मकरादिपर्यन्तं अद्यतनधनफलात् श्वस्तनधनफलं अधिकं भवति। तयोरन्तरे धनशेषमेव तेन कर्कादेर्मकरादिपर्यन्तं गतिफलं धनं भवतीत्युपपन्नम्।

स्पष्टशीघ्रगति साधनमाह—

स्पष्टाशुकेन्द्रस्य गतिः फलस्य कोटिज्यकाशुश्रवणान्तरेण।
गुण्याशुकर्णेन विभाजिता च फलं स्वमस्वं च मृदुस्फुटायाम्॥ २१॥

---

१. एतद् गतिमन्दफलं भास्कराचार्यानुरूपमेव। अतः साधितमन्दगतिफलं फलयोरन्तरं नास्ति फलज्ययोरन्तमस्ति। तस्माद् भास्कराचार्यसाधने यो दोष स एवात्रापि।

फलस्य कोट्यंशकसिञ्जिनीतः कर्णेऽधिकोने च गतिः स्फुटा स्यात्।
यदा न शुध्येद्विपरीतशुद्धौ शेषं भवेद् वक्रगतिर्ग्रहस्य ॥२३॥
दिनान्तरालस्फुटखेटयोर्यद्विश्लेषशेषं सजवो भवेद् वा।

अस्यार्थः—स्पष्टशीघ्रकेन्द्रगतिः फलकोटिज्याशीघ्रकर्णान्तरेण गुण्या शीघ्रकर्णेन भक्ता फलं फलकोटिज्यातः कर्णेऽधिके मन्दस्पष्टगतौ धनं कार्यम्। फलकोटिज्यातः कर्णे ऊने ऋणं कार्यं, ( सा ? ) गतिः स्पष्टा भवति। यदा फलं गतौ न शुध्येत्तदा मन्दस्पष्टगतिरेव तत्र शोध्या शेषं ग्रहस्य वक्रगतिर्भवति। दिनान्तरालस्पष्टखेटयोर्विश्लेषे यच्छेषं सा ग्रहस्य गतिर्वा भवति।

## अत्रोपपत्तिः

शीघ्रफलकोटिज्या कर्णान्तरपरमत्वे गतिफलपरमत्वं, फलकोटिज्याकर्णान्तराऽभावे गति फलाभावः, मध्येऽनुपातः। फलकोटिज्याकर्णान्तरपरमत्वमुच्चसमे ग्रहे अन्त्यफलज्यातुल्यं भवति। फलस्याभावात्फलकोटिज्या त्रिज्या तुल्या भवति, गतिफलञ्च परमं भवति। तद्यथा—अद्यतनश्वस्तनकेन्द्रदोर्ज्यान्तरमन्त्यफलज्यागुणं त्रिज्याभक्तं गतिफलं भवति। पुनरनुपातः—अन्त्यफलज्यातुल्येन फलकोटिज्याकर्णान्तरेणेदं तदा, इष्टेन फलकोटिज्याकर्णान्तरेण किमिति, पुनरनुपातः—कर्णाग्रे इदं तदा त्रिज्याग्रे किमित्यत्र तुल्ययोरन्त्यफलज्ययोस्त्रिज्ययोश्च नाशे कृते केन्द्रगतिः, फलकोटिज्या कर्णान्तरगुणा कर्णभक्ता भवतीत्युपपन्नम्। सूर्यसिद्धान्तोक्तगतिफलानयनप्रकारे त्रिज्याकर्णान्तरं गृहीतमस्ति। तद्यथा—

[1]मन्दस्फुटीकृतां भुक्तिं प्रोज्झ्य शीघ्रोच्चभुक्तितः।
तच्छेषं विवरेणाथ हन्यात्त्रिज्यान्त्यकर्णयोः॥ १॥
चलकर्णहृतं भुक्तौ कर्णे त्रिज्याधिके धनम्।
ऋणमूनेऽधिके प्रोज्झ्य भुक्तिं ( शेषं ) वक्रगतिर्भवेत्॥ २॥

अत्र त्रिज्या कर्णान्तरस्थाने फलकोटिज्या कर्णान्तरमेव व्याख्येयम्। अनेनार्थेन कृतत्तुचन्द्रेत्यादि सौरोक्तवक्रकेन्द्रेषु भौमादीनां गतिः शून्या, आयाति। त्रिज्याकर्णान्तरे गृहीते गतिः शून्या नायाति। अत्रोच्चसमे

१. सू. सि. स्प. ५०—५१ श्लो.।

मध्यमे उदाहरणम्—भौमस्य वक्रकेन्द्रांशाः १६४ भुजः ०।१६ अस्य ज्या १६।३२।१८ भुजफलं १०।४७।४५ कोटिफलं ३७।३७।१६ कर्कादिकेन्द्रत्वात्त्रिज्यायां शोधितं शेषवर्गभुजफलवर्गयोर्योगपदं कर्णः २४।४८ अत्र मध्यगतितुल्यैव मन्दस्पष्टगतिर्गृहीता। अथ भौमशीघ्रकेन्द्रगतिः २७।४२ फलकोटिज्या कर्णान्तरेणानेन २८।२६ गुणिता ७८७।३६ कर्णेनानेन २४।४८ भक्ता, लब्धं गतिफलं ३१।४१ फलकोटिज्यातः कर्णस्य न्यूनत्वाज्जातमृणफलं, अस्य मध्यगतेश्चान्तरं जाता गतिः शून्या, तस्मात्त्रिज्याकर्णान्तरस्थाने फलकोटिज्याकर्णान्तरमेव ग्राह्यम्। एतादृशं सौराशयमविदित्वा यथावत् स्थितं व्याख्यानमङ्गीकृत्य कमलाकरेण तत्त्वविवेके भास्कराचार्यस्य दूषणं दत्तं तदसत्। भास्कराचार्येण सौराशयानुसारेणैव गणितं निबद्धं कोटिफलघ्नीत्यादिना।

अथ सौरोक्तान्वक्रमार्गचलकेन्द्रांशानाह—

कृतर्तुचन्द्रै १६४ र्युगवेदचन्द्रैः १४४
खरामचन्द्रै १३० र्हुतभुङ्नरेन्द्रैः १६३॥ २३॥

शरेषुचन्द्रै ११५ श्चलकेन्द्रभागैः, स्युर्वक्रिणो भूमिसुतादयश्च।
स्वैर्वक्रभागैर्भगणांशशुद्धैः स्युर्मार्गिणस्ते खचराश्चलांशैः॥ २४॥

अस्यार्थः—कृतर्तुचन्द्रादयो यदा भौमादिकानां शीघ्रकेन्द्रांशाः स्युस्तदा तैर्यथाक्रमं वक्रिणो ज्ञेयाः। एतैरेव भागैर्भगणांशशुद्धैः समाः यदा भौमादिकानां चलकेन्द्रांशा भवन्ति, तदा ते मार्गिणो भवन्तीति ज्ञेयम्। एते केन्द्रांशा इदं गतिफलं सौरतन्त्रादिषु लिखितत्त्वाल्लिखितम्। यदा स्पष्टयोरन्तरं क्रियते तदैतेषु केन्द्रांशेषु गतिः शून्या न भवति। भौमस्य गतिमन्दफलाभावे द्विपञ्चेन्दुमित १५२ चलकेन्द्रांशैर्गतेः शून्यत्वं भवति। बुधस्य, एतावन्मिते शीघ्रकेन्द्रे १४५ गतिः शून्या भवति। गुरोरेतावन्मिते १२० केन्द्रे गतिः शून्या भवति। शुक्रस्यैतावन्मिते केन्द्रे १६१ गतिः शून्या भवति। शनेः १०६ एतावन्मिते केन्द्रे गतिः शून्या भवति, इति।

अथ पूर्वमुक्ता अपि अर्द्धफलादिवासनाः प्रकारान्तरतो रेखागणितेनोच्यन्ते। अत्राभीष्टचिह्नात्त्रिज्यामितकर्कटेन कक्षावृत्तं कार्यं, नीचोच्चरेखा कार्या, उच्चान्मेषादिर्विलोमं देयः, मेषादेर्मध्यग्रह उच्चादग्रतो

देयः। ग्रहशीघ्रोच्चं मध्यमग्रह—मन्दोच्चाभ्यां हीनं मन्दमन्दोच्चं भवति। तन्मेषादेर्विलोमं देयं, तद्ग्रहमन्दमन्दोच्चस्य चिह्नं भवति। तन्मन्दोच्चयोरन्तरं मन्दमन्दकेन्द्रं भवति। मन्दोच्चाच्छीघ्रान्त्यफलज्यार्द्धेन वृत्तं कार्यं, तत्राप्युच्चरेखा केन्द्राभिमुखी कार्या। तस्मिन्परिधावुच्चात्पश्चिमतो मन्दमन्दकेन्द्रं दत्त्वा चिह्नं कार्यं, तत्केन्द्रदोर्ज्या कार्या, भूकेन्द्रात्तच्चिह्नपर्यन्तं कर्णरेखा कार्या, सा कर्णरेखा कक्षावृत्ते यत्र लग्ना तत्र शीघ्रफलार्द्धसंस्कृतं मन्दोच्चं जातम्। अत्र शीघ्रफलं मेषादावृणं तुलादौ धनं ज्ञेयम्। पुनर्मन्दोच्चस्य शीघ्रोच्चन्तु मध्यमग्रह एवास्ति। तत्स्पष्टमन्दोच्चान्तरं मन्दोच्चस्य शीघ्रकेन्द्रं भवति। उक्तकर्णरेखा कक्षावृत्ते यत्र लग्ना तत्र केन्द्रं कृत्वा मान्दान्त्यफलज्यार्द्धेन वृत्तं कार्यं, तत्रकर्णरेखैवोच्चरेखास्ति। तत्र परिधावुच्चात् पूर्वतः शीघ्रकेन्द्रं दत्त्वा चिह्नं कार्यं, तत्केन्द्रस्य दोर्ज्यां कोटिज्यां कृत्वा भुजफलं कोटिफलञ्च विधाय कर्णः कार्यः, सा कर्णरेखा कक्षावृत्ते यत्र लग्ना तत्र फलद्वयसंस्कृतं मन्दोच्चं जातम्। भूकेन्द्रात्स्पष्टोच्चगा रेखा नीचपर्यन्तं कार्या। सा स्पष्टनीचोच्चरेखा भवति। तस्यां केन्द्रादुच्चोन्मुखीं मान्दान्त्यफलज्यां दत्त्वा तत्र केन्द्रं कृत्वा त्रिज्यामितकर्कटेन मन्दप्रतिवृत्तं कार्यम्। तस्मिन्नुच्चरेखा यत्र लग्ना तत्र स्पष्टोच्चं ज्ञेयम्। स्पष्टोच्चमध्यमग्रहान्तरं फलद्वयसंस्कृतं मन्दकेन्द्रं ज्ञेयम्।

अथ द्वितीयं (क्षेत्रं ?) क-ख-ग-घ कक्षावृत्तं कार्यं, घं भूकेन्द्रं चछथघं मन्दप्रतिवृत्तं थखचघ रेखा स्पष्टोच्चरेखा। कक्षावृत्ते कं मेषादिः खं स्पष्टोच्चं, प्रतिवृत्ते छं मेषादिः थं स्पष्टोच्चं घं मध्यमः थघं मन्दकेन्द्रं, अयं थचघकोणः ज्ञातोऽस्ति। एतस्य ज्या गचघ त्रिभुजे गचघकोणस्यापि जीवास्ति, सा ज्ञातास्ति। गघभुजः, त्रिज्यामितः एतौ ज्ञातौ स्तः। गघेन गचघकोणज्या लभ्यते तदा चघेन किमिति लब्धं चगघ कोणज्या, अस्याश्चापं मन्दफलं चगघ कोणः। अनेन हीनः थचघ कोणो जातः। थघक कोणः खगं मन्दफलसंस्कृतं मन्दकेन्द्रं कृत्वा पुनर्गकेन्द्रं कृत्वा रुजतं शीघ्रनीचोच्चवृत्तं कार्यम्। एतस्योच्चं मन्दप्रतिवृत्तकेन्द्रसन्मुखं भवति। स्पष्टोच्चं भूकेन्द्रसन्मुखं भवति। चग घग रेखे वर्द्धनीये लघुवृत्तपालिपर्यन्तम्। ज चिह्नं मध्यमोच्चं रु चिह्नं स्पष्टोच्चं त चिह्नं बिम्बं जतं मध्यमशीघ्रकेन्द्रं इदं चगघ तुल्येन जगरु कोणेन मन्दफल-

रूपेण विलोमं संस्कृतं तरु स्पष्टकेन्द्रं भवति। अस्य भुजज्या तवं कोटिज्या वगं गतरेखायां षष्टिस्तन्मानेन यदि तगं शीघ्रान्त्यफलज्या तदा वतं भुजफलं वगं कोटिफलं इदं मकरादिकेन्द्रत्वाद् घग त्रिज्यायां योजितं, जातं घव कोटिः, अस्य वर्गः वतवर्गयुतः जातो घतवर्गः। अस्य मूलं घतं जातः शीघ्रकर्णः। कर्णाग्रे यदि वतं भुजफलं तदा घमत्रिज्याग्रे किमिति लब्धस्य चापं जातं मगं। शीघ्रफलमिदं मेषादिकेन्द्रत्वाद्धनं इदं मन्दस्पष्टकेन्द्रे खगे योजितं शीघ्रस्पष्टं, मन्दकेन्द्रमिदं कखेन स्पष्टोच्चेन युतं जातः स्पष्टग्रहः। अनेन शकलेन भौमादिपञ्चग्रहाणां मन्दकर्णाभावः सिद्ध्यति। त्रिज्यायां कोटिफलं योज्यं शोध्यमिदमपि सङ्गच्छति। रविचन्द्रयोस्त्वनया कल्पनया मन्दकर्णाभावः सिद्ध्यति। परन्तु बिम्बयोर्न्यूनाधिक्यं न संभवति। बिम्बयोर्न्यूनाधिक्यन्तु प्रत्यक्षं दृश्यते, तेन मन्दकर्णोऽपेक्षितः। रविणा न कृतः, स्वल्पान्तरत्वात्।

अत्र पूर्वाचार्यैः 'स्वल्पान्तरत्वान्मृदुकर्मणीह कर्णः कृतो नेति' इत्यादि सर्वग्रहसाधारण्येन मन्दकर्णाभाव उक्तः। स नादरणीयः। कमलाकरदैवज्ञैः सिद्धान्ततत्त्वविवेके एकरूपपरिधिकल्पनं सूर्यसिद्धान्ते त्रुटितग्रन्थकल्पनां कृत्वा कृतं तदसत् मन्दजनानां प्रतारणमात्रम्। तन्मतानुसारिभिर्दादाभाईनामभिर्दैवज्ञैः सूर्यसिद्धान्तटीकायां किरणावल्यामेकरूपपरिधिकल्पनं कृतं तदप्यसत्। अन्यदपि शीघ्रान्त्यफलज्यायाः मन्दकर्णगुणनेन त्रिज्यया भजनेन स्पष्टत्वं कृत्वा फलसाधनं कृतं तदप्यसत्। सौरोक्तफलस्य तत्कृतफलस्य चान्तरं नवांशपरिमितं दृष्टमिदं गणितविरुद्धं प्रत्यक्षविरुद्धञ्चेति।

अथ भौमादिपञ्चग्रहाणां शरसाधनमाह—

तत्रादौ, उपयोगित्वाच्चन्द्रादीनां परमशरकला उच्यन्ते—

खभानि २७० खाङ्का ९० नखभूमयश्च १२०,
खाङ्गानि ६० खाङ्का ९० खदिवाकराश्च १२०।
चन्द्रादिकानां परमाः खगानां,
पुरातनैर्बाणकला प्रदिष्टाः॥ २५॥

अथ शरसाधनं—

पातोनमन्दस्फुटखेटदोर्ज्या निघ्नी पराभिः शरलिप्तिकाभिः।
चलान्त्यकर्णेन हृता शरः स्यात्पातोनमन्दस्फुटगोलदिक्कः॥ २६॥

हिमद्युतेस्त्रिज्यकया त्रिभाजिता भवेत्पृषत्कोऽपमसंस्कृतिक्षमः।
पातेऽथवा मन्दफलं विलोमं दत्त्वा तदूनः खलु मध्यखेटः।
स्यात्पातकेन्द्रं, च ततः पुरावत्साध्यः पृषत्को गणकप्रवीणैः॥ २७॥

अथ पातोनमन्दस्फुटेत्यस्यार्थः—पातास्तु चक्रशुद्धाः पूर्वं चक्रे लिखिताः सन्ति। चन्द्रस्य चक्रशुद्धः पातो राहुरेव ग्रहः, स्वपातोनः पातकेन्द्रं भवति। तस्य दोर्ज्या परमशरगुणा शीघ्रान्त्यकर्णेन भक्ता फलस्य चापं शरकला भवन्ति। चन्द्रस्य त्रिज्याभक्ताः शरकला भवन्ति। पातकेन्द्रे मेषादिके शरकला उत्तरा, तुलादिके दक्षिणा ज्ञेयाः।

## अत्रोपपत्तिः

प्रतिवृत्तप्रकारेण भौमादिकानां शीघ्रप्रतिवृत्ते मेषादेः सकाशाद् गणितागतः पात अनुलोमं देयः। तत्र चिह्नं कृत्वा तत्रान्यत् त्रिज्यावृत्तस्य संपातः कार्यः। तस्मात् षड्भान्तरे द्वितीयसंपातः कार्यः। पातात्त्रिभान्तरे परमशरकलातुल्यान्तरेणोत्तरतः, सषड्पातात्परमशरकलातुल्यान्तरेण दक्षिणतो विश्लिष्टं कार्यम्। ग्रहस्तस्मिन् वृत्ते मन्दस्पष्टगत्या भ्रमति। अस्माभिः स्वल्पान्तरत्वात्फलसाधनार्थं प्रतिमण्डलस्थ एव गृहीतः। तस्य पातेन यदन्तरं तत्पातकेन्द्रं भवति। यतः पाततुल्ये ग्रहे शराभावोऽस्ति। पातात्त्रिभान्तरे परमशरकलातुल्यमन्तरं भवति। मध्येऽनुपातेन क्रान्तिवच्छर आनेयः। स यथा—त्रिज्यातुल्यया पातकेन्द्रदोर्ज्यया परमशरकलातुल्यमन्तरं लभ्यते तदिष्टया किमिति। अस्मिन् त्रिभुजे कोटिः, प्रतिवृत्ते शरोभुजः, द्वितीयवृत्ते कर्णः। पुनः कर्णाग्रे इदं तदा त्रिज्याग्रे किमिति, अनुपातेन लब्धस्य चापं शरो भवति। कर्णस्तु, अस्माभिः फलसाधनार्थं भूकेन्द्रात्प्रतिमण्डलपर्यन्तं साधितोऽस्ति, परन्तु स्वल्पान्तरत्वात्स एव गृहीतः। तेन गणितेन किञ्चिदन्तरं पतति। चन्द्रस्य प्रतिमण्डलाभावात्त्रिज्याग्र एव शर आयाति। तेन तदीयं चापं चन्द्रस्य शरो भवति। पूर्वाऽनुपाते तुल्ययोस्त्रिज्ययोर्नाशे कृते मन्दकेन्द्रदोर्ज्या परमशरगुणा शीघ्रकर्णभक्तेत्युपपन्नम्।

अथ नीचोच्चवृत्तप्रकारेण शरसाधनमाह—पातेऽथवा मन्दफलमित्यादिना—

अस्यार्थः—अथ पाते विलोमं मन्दफलं दत्त्वा तदूनो मध्यखेटः कार्यस्तत्पातकेन्द्रं स्यात्। तस्मात्पुरावद् गणकप्रवीणैर्बाणः साध्यः।

अत्रोपपत्तिः—नीचोच्चवृत्ते मध्यमोच्चान्मेषादिः पूर्वतो देयः। ततो मन्दस्पष्टपातं दत्त्वा चिह्नं कार्यं, ततो नीचोच्चवृत्तसदृशस्य द्वितीयवृत्तस्य संपातः कार्यः। तद्वृत्तं पातादुत्तरतः बृहद्वृत्तीयपरमशरकलान्तरेण सषड्पाताद् दक्षिणतो विप्रकृष्टं यथा स्यात्तथा द्वितीयवृत्तं स्थापनीयं, शेषोपपत्तिः पूर्ववद् ज्ञेया।

इति नीचोच्चवृत्तप्रकारेण शरसाधनं संपूर्णम्॥

अथ स्पष्टदिनेभ्यो मध्यदिनानयनमाह। तत्र श्लोकाः—

स्पष्टक्दाद्यन्तयोर्यौ स्पष्टार्कौविनयोः पृथक्।
विषुवांशान् साधयित्वा स्थाप्यं तद्विवरं पृथक्॥ १॥
एवं स्पष्टदिनाद्यन्ते साध्यौ मध्यमभास्करौ।
तयोर्यद्विवरं तस्य पृथक्स्थेन सहान्तरम्॥ २॥
योज्यं स्पष्टदिनेष्वेतद्विषुवांशान्तरेऽधिके।
न्यूने शोध्यं भवन्तीह मध्यमानि दिनानि च॥ ३॥
यदि मध्यदिनेभ्यश्च साध्यः, स्पष्टदिनोच्चयः।
तदा विलोमसंस्कारः कार्यश्च गणकोत्तमैः॥ ४॥

एषामर्थः—स्पष्टकुदिनादौ स्पष्टार्कः कार्यः। स्पष्टकुदिनान्ते च स्पष्टार्कः कार्यः। स्पष्टार्कयोः पृथग्विषुवांशान् साधयित्वा विषुवांशान्तरं कृत्वा पृथक् स्थाप्यम्॥ १॥ एवमिति—अमुनैव प्रकारेण स्पष्टकुदिनाद्यन्ते मध्यमार्कौ साध्यौ। तयोरन्तरञ्च कार्यम्। अन्तरान्तरयोरन्तरञ्च कार्यम्॥ २॥ योज्यमिति—तदन्तरं विषुवांशान्तरे अधिके स्पष्टदिनेषु योज्यं, न्यूने शोध्यं, मध्यमदिनानि भवन्ति॥ ३॥ यदीति—यदि मध्यदिनेभ्य स्पष्टदिनानि साध्यानि स्युस्तदा गणकोत्तमैर्विलोमसंस्कारः कार्यः॥ ४॥

इति स्पष्टदिनेभ्यो मध्यदिनानयनम्॥

नत्वा गणेशं रविपूर्वकाणां स्पष्टक्रियां दृक्तुलितां प्रवच्मि।
गोलादियन्त्रैः कृतनिश्चयाञ्च व्यक्तेन रेखागणितेन युक्ताम्॥ १॥

तत्रादौ वेधेन रवेर्निश्चयमाह--

चन्द्रबाणनृप १६५१ सम्मितशाके चैत्रशुक्लगुहसंज्ञतिथौ च ।
वासरे दिनकरस्य दिनार्द्धादष्टचन्द्र १८ मितयातघटीषु ॥ १ ॥
सप्तपञ्च ५७ विघटी सहितासु सायनेऽजवदने रविरासीत् ।
तत्र तस्य खलु मन्दकेन्द्रकं राशिपूर्वकमिदं विनिश्चितम् ॥ २ ॥

वसवः ८ प्रकृतिस्तु २१ पक्षयक्षौ २२
रवय १२ स्त्र्यक्षिमित २३ स्तु वेधतः ।
ज्वलना ३ श्च रसा ६ द्विवेद ४२ तुल्या
नगरामा ३७ श्च नवेन्दु १९ सम्मिताश्च ॥ ३ ॥

रवितुङ्गमिदं भपूर्वमुक्तं मृदुकेन्द्रेण युतञ्च मध्यमः ।
भवतीह रविस्तु सायनानामहसां वच्मि मितिञ्च सौरवर्षे ॥ ४ ॥
पञ्चाङ्गरामा ३६५ इन्द्राश्च १४ भूरामाश्च दिनादिकम् ।
अनेनाप्ताश्चक्रकला रवेर्दिनगतिर्भवेत् ॥ ५ ॥

सा यथा--

खं नन्दबाणा वसवो नवेन्दवोऽष्टाक्षाः कुपक्षायमसागरास्तथा ।
यमाग्नयः स्वर्गमिता रसाब्धयः पक्षाब्धयोंऽशादिगतिर्भवेद्रवेः ॥ ६ ॥

द्वौ भूस्तत्त्वाग्निरामाक्षा भागाद्या परमा स्मृताः ।
जीवा मन्दफलस्याथ भागाद्यं परमं फलम् ॥ ७ ॥
मान्दं भूः पञ्चबाणाश्च वस्वक्षा द्वौ प्रकीर्तितम् ।
अत्र स्पष्टः सहस्रांशुर्भवेच्छून्यमितो ध्रुवम् ॥ ८ ॥

अथार्थः--संवत् १७८६ शके १६५१ चैत्रकृष्ण ६ रवौ मध्याह्नाद् गतघट्यादिषु १८।५७ तदा मेषसंपातस्थो रविर्दृष्टः । तत्र मन्दकेन्द्रं निश्चितं ८।२१।२२।१२।२३ उच्चं ३।६।४२।६७।१९ अनयोर्योगे मध्यमः ११ २८।४।४९।४२ ।

अथ सावनदिनानि सौरवर्षे ३६५।१४।३१ एतद्भक्ताश्चक्रकलाः २१६०० रवेरेकदिनगतिर्भवति । सा यथा ०।५९।८।१९।५८।२१।४२।३२। २१।४६।४२ इयमंशाद्यास्ति । अत्र परममन्दफलज्या २।१।२५।३।५३। परममन्दफलं १।५५।५८।२ अत्र स्पष्टो रविः ०।०।०।० मन्दकेन्द्रगतिः

०।५६।८।११।१८।२१।१२।१८।१२।५८।१८ उच्चगतिः ०।०।०।८।४०।२१।२६। १४।८।३८।२४ इयमुभयोरेकदिनजा गतिरस्ति। तस्मिन् दिने मध्याह्ने ध्रुवकः मन्दकेन्द्रध्रुवकः ८।२१।३।३१।४४।५६ उच्चध्रुवकः ३।६।४२।३७। १६। अथात्र सूर्यस्य तत्परममन्दफलस्य तथा तदुच्चस्य पुनर्वर्षमितेः केन्द्रोच्चगत्योश्च यथा निश्चयः कृतः, स चात्र सोपपत्तिको लिख्यते।

संवत् १७८६ चैत्रकृष्ण ६ रवौ मध्यनतांशा वेधेन वृत्तषष्ठांशयन्त्रे प्राप्ताः २८।४४।३०, अत्र दिनद्वयनतांशान्तरजा गतिः २३।४५, अतो निष्कासितः कालः १८।५७ एवमत्र चैत्रकृष्ण रवौ मध्याह्नाद् गतघट्यादिषु १८।५७ तदा मेषसंपातो दृष्टः।

## अयमेव प्रथमवेधः।

तथा उक्तवत्सर एव ज्येष्ठशुक्ल ६ शुक्रे मध्यनतांशाः ६।१८ क्रान्तिः २२।१६ स्पष्टोऽर्कः २।१२।२८।४४ अयं द्वितीयो वेधः।

तथा तद्वत्सर एव आश्विन शुक्ल १ शुक्रे मध्यनतांशा उक्त यन्त्र एव २८।४०।४४ किञ्चिदधिका गत्यनुसारेणापेक्षिताः सन्ति। अत एतावन्तः २८।४०।४४।३२ गृहीताः। यतोऽत्र विकलांशज्ञानं दुर्घटम्। गतिः २३।४५ पूर्ववत्कालश्च ६।२७।१४। एवमत्र, आश्विन शुक्ल १ शुक्रे मध्याह्नात्प्रागेव घट्यादि ६।२७।१४ तथा तद्दिन एव सूर्योदयाद् गतघट्यादिषु ५।३२।४६ तुलासंपातो दृष्टः।

अथ च संवत् १७८७ चैत्र शुक्ल २ सोमे उक्तरीत्यैव मध्याह्नाद् गतघट्यादिषु ३३।२८ पुनर्मेषसंपातो दृष्टः, अयं चतुर्थो वेधः।

अथात्र पूर्ववर्षमेषादितोऽग्रिमवर्षमेषादिपर्यन्तमन्तरकालं दिनादिः ३६५।१४।३१ इयमेव सौरसावनात्मिका वर्षमिति निश्चितास्ति। एवमत्र, अनया चक्रे १२ भक्ते लब्धा मध्यमार्कगतिरंशाद्या ०।५६।८।१६।५८।२१। ४२।३२।२१।३६।४२। अत्र वेधत्रयेण सूर्यस्य परममन्दफलमुच्चं च निष्काश्यते तदुत्पादकक्षेत्रन्यासः।

अथ प्रथमवेधाद् द्वितीयवेधपर्यन्तं कालान्तरं स्पष्टसावनात्मकम्। यतो वेधेन दिनद्वये सूर्यस्य याम्योत्तरवृत्तगमनान्तरिताः स्पष्टसावनाः सन्ति। त एव वेधेन प्राप्यन्ते।

ते तु, एतावन्मिताः ७४।४१।३। एतत्कालजा मध्यगतिः राश्यादि २।१३।३६।४४।१७।२।३६।१२।३६।५६।३६। परमियं गतिरेकमध्यमसावनानुसारेण निष्कासितास्ति। अपेक्षिता तु स्पष्टसावनजा अत उभयोरन्तरं द्युफलं तदत्रावश्यकं दापनीयम्। यत्तु वतलमयूषेन द्युफलसंस्कारः सूर्यनिश्चयार्थं न कृतस्तदसत्। तत्र द्युफलानयनं—स्पष्टोऽर्कः २।१२।२८।४४ मेषादित इदमेवास्यान्तरं अस्य कोटिः ०।१७।३१।१६। अस्याः ज्या १८।३।४८।२१।४ क्रान्तिः २२।१६। कोटिः ६७।४१। ज्या ५५।३०।२१।२६। ५५। अनया पूर्वज्याधरीकृतया भक्ता लब्धि ३०।३१।२६। रंशाद्याः, १६।३१।३।२२।२६ चापं १८।५६।३०।२१।४२।४६। नवतौ शुद्धं एवं जाता निरक्षोदयांशाः ७१।०।२६।३८ १७।१४ अस्य मध्यगतेश्चान्तरं इदमेव द्युफलं अं० २।३६।१४।३८।४५।२५।

अथ मध्यमसावनघटिका प्रमाणमंशादि ६।०।५६।८।१६।५८।२१।४२। ३२।२१।३६।४२। अनेनान्तररूपं द्युफलं भक्तं लब्धं घट्यात्मकं द्युफलं ०।२५।५८।१०। एतद् गुणिता मध्यगतिफलमंशाद्यं ०।०।२५।३५।४८।१३। ५१।२३।४०। इयं ( दं ) पूर्वकालान्तरगुणितायां मध्यगतौ मध्य ( म ? ) सावनगत्यर्थं शोधितावशिष्टा ( ष्टम् ) २।१३।३६।१८।४१।१४।२५। अस्यार्द्धं १।६।४८।६।२०।३७।१२। इदं हकोण प्रमाणमस्ति। अयं कोणः स्पष्टगतिरूप २।१२।२८।४४। कयख कोणे शोधितः शेषं १।५।४०।३४।३६।२३। अयं यतह कोणोऽस्ति। अस्य ज्या ३४।५६।३२।१८।४४।

अथ प्रथमवेधात्तृतीयवेधपर्यन्तं, अन्तरं स्पष्टसावनात्मकं १८६।३१। ३५।४६, एतत्कालजा मध्यगतिः ६।३।५०।५८।२८।२६।२६।२५।३४।५६।१६। ३२। अत्रापि पूर्वद्युफलं ३।५०।५८।२८।२६।२६।२५।३४।१६।१६।३२। घटिकादिः ०।३८।२३।२५। अयं स्पष्टसावनेषु शोधितः शेषं मध्यसाव(नं) १८७।३०।५७।२२ ३५। एतत्कालजा मध्यगतिः ६।३।५०।२०।३८।५, अत्र प्रथमवेधद्वितीय वेधान्तरजा द्युफलसंस्कृतमध्यगतिशोधितावशिष्टा द्वितीयवेध-तृतीयवेधान्तरजा मध्यगतिः ३।२०।१४।१।५६।५१, अस्य पूर्णज्या १।३८।२६।१८।३६।३२। इयं हत रेखास्ति। अनया यतह कोणज्या गुणिता जाता ५७।२४।३५।२७।३१।२।२६।३६।३५।२८। इयं स्पष्टज्यया ५७।१२।५८। तयह कोणज्या रूपया भक्ता लब्धिः अं० १।०।१२।१०।२५।५८।३४ इयं हय रेखा जाता। पुनर्द्वितीयतृतीयवेधान्तर

जद्युफलसंस्कृतगतिश्चक्रे १२ शोधितावशेषं ५।२६।६।३६।२१।५५ अर्द्धं २।२८।४।४६।४०।५७।३० ज्या ५६।५७।५८।४७।२८।५८ इयं हव रेखास्ति। अस्याः हयरेखायाश्चान्तरं ०।१४।११।३८।२६।३६। इयं यव रेखा जाता, अस्या वर्गः ०।३।२१।२८।१३।२०।२०।५६।१२।६।३६।

अथात्र प्रथमवेधतृतीयवेधांतरे द्युफलसंस्कृतमध्यगतेस्तथा स्पष्ट-गतेश्चान्तरं ०।३।५०।२०।३८।५ अर्द्धं १।५५।१०।१६।२।३० अस्य ज्या २।०।३५।६।५०। अयं लम्बः दवरेखा जाता।

अथवा चक्रशुद्धशेषार्द्धस्य कोटिज्या दव रेखा भवति। अस्याः वर्गः ४।२।२०।४७।५२।५६।६।४१।४०। अस्य पूर्ववर्गस्य च योगः ४।५।४२।१६। ६।१६।२७।३७।५२।६।३६। अस्य मूलं जाता परमफलज्या दय रेखा २।१। २५।३।५२।३५। ( अस्याः ) चापं परमफलम् १।५५।५८।२।

अथ लम्बोधरीकृतपरफलज्यया भक्तो लब्धिः ५६।३५।१६।५८।३३। इयमुच्चतुलासंपातयोरन्तरज्यास्ति। ( अस्याः ) चापं जातं तयोरन्तरं [1]८७।१७।११।५३।४७। इदं तुलादौ शोधितं जातमुच्चं गोचहस्थानं ३।६।४२। ४८।७।

इति प्रथमवेधोदाहरणम्।

## अथ द्वितीयवेधोदाहरणम्—

तत्र तु संपातौ तावेव तथा श्रावणकृष्ण १४ रवौ मध्यनतांशाः ८।४१।३७।६। एते गत्यनुसारेण कृताः। यतो वधे विकला ज्ञानं सम्यक् न भवति। अत्र क्रान्तिः १६।५५।२२।५१ स्पष्टार्कः ४।१।६।२५।२५ अयं द्वितीयवेधः कृतः।

अत्रापि क्षेत्रन्यासः अत्र प्रथम वेधद्वितीयवेधयोः कालान्तरं १२५। ४१।३ मध्यगतिः ४।३।५२।४६।१६। द्युफलांशः ०।०।०।४।४२। एतत्संस्कृत-मध्यगतिः ४।३।५२।४४।३४ अर्द्धं २।१।५६।२२।१७। इदं हकोणप्रमाणं अयं कोणो यकोणे ४।१।६।३५।२५। शोधितः शेषं १।२६।१३।१३।८ अयं त कोणः। अस्य ज्या ५१।३२।५४।३२।२३।

अथ मेषतुलान्तरपर्यन्तं मध्यगतिः ६।३।५०।२०।३८। अत्र प्रथम गतिः शोधिता १।२६।५७।३६।४। अस्य पूर्णज्या ५६।५७।४६।२७।८। इयं

१. ८३ कपु. पा.।

तह रेखास्ति । जीवयोर्घातः ५११३११२१२२१५०१३६११३१३७१४०१४। अयं खदय कोणज्यारूपस्पष्टज्यया ५११२०१३७१३१५७। भक्तः लब्धं १।१२।१०। ४४।२७।२८। इयं हय रेखास्ति । पुनर्मेषतुलान्तरगतिश्चक्रे शोधिता ५।२६। ६।३६।२२। अर्द्धं २।२८।४।४६।४०।५७।३०। अस्य ज्या ५६।५७।५८।४७।२८। ५८। इयं हव रेखास्ति । हयहवयोरन्तरं वय रेखा ०।१४।११।५६।५८।३०। अस्याः वर्गः ०।३।२१।२६।५८।५।३३।६।२।१५। लम्बस्तु पूर्वोदाहरण एव निष्कासितस्तस्य वर्गः ४।२।२०।४७।५२।५६।४१।४०। वर्गयोर्योगः ४।५।४२। २४।५१।४।३६।५०।४८। ४ मूलं २।१।२५।६।२। इयं ( द ? ) य रेखा परमफलज्या रूपा । अस्याश्चापं परमफलं १।५५।५८।५ इदं पूर्वानीतसममेव।

अथ परमफलज्ययाधरकृतया लम्बो भक्त आप्तं ५६।३५।१७।५५।३। चापं ८३।१७।३।१४।४२ इदं तुलादौ शो ( धितं ) जातमुच्चप्रमाणं [1]२।६। ४२।५६।४५।१८ । इदमप्यासन्नमेव ।

इति द्वितीयोदाहरणम् ।

## अथ तृतीयोदाहरणम्—

तत्र प्रथमवेधस्तुलासंपातः द्वितीयवेधस्तु फाल्गुनशुक्ल ५ बुधे गृहीतः । तत्र मध्यनतांशाः ३८।५१।२४ क्रान्तिः १०।१३।२४ स्पष्टोऽर्कः ११।३।३१।३१।५१ अत्र तृतीयवेधः संवत् १७८७ मेषसंक्र ( मण ? ) रूपो गृहीतः । स च पूर्वलिखित एव । अत्रापि क्षेत्रस्य स्वरूपं अत्र प्रथमवेधद्वितीयवेधयोः कालान्तरं १६२।६।२७।१४। मध्यगतिः ४।२६। ५६।४।४८ द्युफलांशः ०।०।०।१४।४२। इदं मध्यगतौ युतं ४।२६।५६। १६।३० अर्द्धं २।१४।५६।३६।४५। हकोणप्रमाणम् । अयं स्पष्टार्के शोधितो जातस्तकोणः, २।१८।३१।५२।६, ज्या [2]५८।४८।७।६।२८ मध्यगतिः ४।२६। ५६।१६।३० तुलादितो मेषादिमकालान्तरजगतौ ५।२६।६।३६।२२। शोधिताशेषं ०।२६।१०।१६।५२ अर्द्धं ०।१३।५।६।५६ पूर्णज्या २७।१०।११। १३।५२ इयं हतरेखास्ति । ज्ययोर्घातः २६।३७।३८।१३।३०।२२।४१।४०।१६ स्पष्टज्या [3]२५।४४।५२।३८।१६ ( इयं ) कोणज्यास्ति । अनया घातो

---

१. ३।६ खपु. पा. ।

२. ६ खपु. पा. ।

३. २६ खपु. पा. ।

भक्तः लब्धं ५६।४३।४५।३२।३०।५७। इयं हय रेखा जाता तुलामेषाद्यन्तरे मध्यगतिः ५।२६।६।२६।२५। अर्द्धं २।२८।३।४६।४०।५७।३० ज्या ४६।५७। ५८।४७।२८।५८। इयं हव रेखास्ति। अस्याः लब्धेश्चान्तर ०।१५।१३।१४। ५८ १। इयं यव रेखा जाता। अस्याः वर्गः ०।३।२२।१३।५४।३७।२०।२६। ३३।५६।१। लम्बवर्गः ४।२।२०।४७।२।५६।६।४१ ४०। वर्गयोर्योगः ४।५। ४३।१।४७।३६।२७।८।१३।५६।१ मूलं २।१।२५।१५।६।५३। इयं दय रूपा परमफलज्या। अस्याश्चापं परमफलं १।५५।५८।१३। इदमपि पूर्वानीत-स्यासन्नमेवास्ति। लम्बः परमफलज्ययाऽधरीकृतया भक्तः लब्धं ५६।३५। १३।२६।७ चापं ८३।१६।२६।४१।१४। इदमेव तुलाद्युच्चयोरन्तरमुच्चम् ३।६। ४३।३३।१८।४६। इति तृतीयोदाहरणम्।

एवमत्र प्रथमोदाहरणमेव स्वीकृतमस्ति। तत्र परमफल १।५५।५८ तथोच्चं ३।६।४२।४८।७। मध्यगतिः ०।५६।८।१६।५८।२१।४०।३३।२१।२६।४२।

अथोऽलुग्वेगीनीचारम्भे उच्चं ३।२।२५।५८।०। एवमुच्चान्तरमंशाद्यं ४।१६।५०।७। अथोलुग्वेगीनीचारम्भत एतत्कालपर्यन्तं दिनानि ५२।३६। २६। एभिरुच्चान्तरं भक्तं लब्धोच्चगतिः ०।०।०।८।४०।२१ २६।१४।१८। ३८।२४।

अथोच्चगतिर्मध्यगतौ शोधिताशेषं केन्द्रगतिः ०।५६।८।११।१८।०। १३।१८।१२।५८।१८। एवमत्रोच्चगतिरेवायनांशगतिः। अस्या अंशपूर्त्तिः, एतावद् वर्षादिना ६८।२।१।३२।५१। भवति।

अथ ध्रुवकस्य स्थापनार्थे स्पष्टज्ञानात्तथा परमफलोच्चयोर्ज्ञाना-च्चेष्टमन्दफलमध्यमयोर्निष्कासनार्थं युक्तिः प्रदर्श्यते। तत्र तत्साधक-(क्षेत्र) मुच्यते। तत्र कं उच्चस्थानं खचिह्नं स्पष्टस्थानं ताचह्नं मध्यम-स्थानं गं प्रतिवृत्तकेन्द्रं दं भूकेन्द्रं अत्र द कोणो ज्ञातः ग कोणो निष्काश्यते। अथात्र ज्येष्ठशुक्ल ६ शुक्रे स्पष्टोऽर्कः २।१२।२८।४४ उच्चं ३।६।४२।४८।७। परमफलज्या २।१।२५।३।५३ उच्चं स्पष्टे शोधितं शेषं ११।५।४५।५५।५३। अस्य भुजः ०।२४।१४।४।७ अयं कदख कोणप्रमाणमस्ति। अस्य ज्या २४।३७।४१।५४।४२। इयं, परमफलज्यया गुणिता षष्टिभक्ता जाता दतग कोणज्या इयमेवेष्टफलज्यास्ति। अस्याश्चापं ०।४७।३५।३७। इदमेवेष्टफलं जातम्। इदं खदककोणे ०।२४।१४।४।७। योजितं ०।२५।१ ३६।४४। अयं

कगत कोणः सिद्धः। अयं चक्रे शोधितः शेषं केन्द्रं द्युफलसंस्कृतमेव जातं ११।४।५८।२०।१६।

अथात्र मेषादित एतत्कालपर्यन्त ३७।१।५०। जा केन्द्रगतिः राश्यादिका २।१३।३६।७।५३। उच्चगतिश्च ०।०।०।१०।४८ एते क्रमेण केन्द्रे उच्चे च शोधिते जाते मेषार्ककालीने केन्द्रोच्चे केन्द्रं ८।२१।२२।१।२३ उच्चं ३।६।४२।३७।१६। एते एव मेषारम्भे केन्द्रोच्चयोर्ध्रुवके सिद्धे। अनयोरेव योगे मध्यमध्रुवकः ११।२८।४।४६।४२। एवमत्र निश्चित्य मेषार्कसमये ध्रुवकाः स्थापिताः। कार्ये सती (त ?) श्चालनं विधेयमिति।

अथ प्रतीत्यर्थं चालितैरेतैः केन्द्रोच्चमध्यमैः स्पष्टता क्रियते। तत्रादौ श्रावणकृष्ण १४ रवौ मेषादितः कालान्तरं १२५।४१।३ चालितकेन्द्रं १०।२५।१४।४२।२६ उच्चं ३।६।४२।५५।२६। द्युफलांशः ०।०।०।४।४२। एतत्संस्कृतकेन्द्रं ०।२५।१४।१४।३८।४७। उच्चयोगेन मध्यमः ४।१।५७। ३४।१६। परमफलज्या तु निष्कासितैव २।१।२५।३।५३। अथ एभिः स्पष्टताज्ञानार्थं क्षेत्रम्—

अथात्र कघत कोणः ०।२५।१४।३८।४७। अस्य ज्या कह रेखा २५। ३५।१८।४५।४। कोटिः ६४।४५।२१।१३। अयं हकघ कोणोस्ति। अस्य ज्या ५४।१६।११।४७।६। इयं हघ रेखास्ति। कघ रेखा त्रिज्यामिताऽस्ति। एवं कघहत्रिभुजे भुजत्रयं कोणत्रयं ज्ञातम्। तथा तत्सजातीयस्य घवदत्रिभुजस्य कोणत्रयं ज्ञातं घतभुजोऽपि ज्ञातः, परमफलज्या तुल्यः। अवशिष्टभुजयोर्ज्ञानं क्रियते—त्रिज्यया चेद् भुजज्या लभ्यते तदा घद रेखया किमिति भुजज्या २५।३५।१८।४५।४। इयं परमफलज्याघ्नी अधरीकृता जाता दव रेखा ०।५१।४६।५४।११।३।५८।२६।०।३२। अस्याः, वर्गः ०।४४।४१।२०।४६।४२।४२। ।१४।२८।१६। तथा कोटिज्या (परमफलज्या) गुणा अधरीकृता जाता घव रेखा १।४६।४६।२०।१।४४।४१।३१।५।५७। इयं त्रिज्यामितायां तघरेखायां युता जाता तव रेखा १।१।४६।४६।२०।१। ४४।४१।३१।५।५७। वर्गः (१) ३।४२।५६।४०।५६।२१।५।५७।२८।४ वर्गयोर्योगः १।३।४३।४४।२२।२०।७।४८।३६।२५।१८। अस्य मूलं १।१।५०।११। ०।५७। इदं मन्दकर्णरूपायास्तदरेखायाः प्रमाणं जातम्। पुनरेतत्त्रिज्या

१. ४३ कपु. पा.।

प्रमाणेन वद ( रेखा व द ) त कोणज्यास्ति । सा षष्टित्रिज्यायां परिणास्यते । यदि कर्णाग्रे दव तदा त्रिज्याग्रे किं दवं अधरीकृतकर्णभक्तं जातं ०।५०।१४।३८।७।३६ चापं ०।४७।५८।५१ इदं मन्दफलमध्यमे ४।१।५७। ३४।१६। शोधितं शेषं ४।१।९।३५।२५। अयमेव स्पष्टसूर्यः । अयमेव पूर्वं वेधेनोपलब्धः । अतो निश्चितसूर्यसंस्थापि मिलिता ।

अथ पुनः प्रतीत्यर्थं फाल्गुन शुक्ल ५ बुधे स्पष्टानयनं मेषादितः कालान्तरं ३३८।४०।४०।४८ २५। एतावता कालेन चालितकेन्द्रं ७।२५। १०।५७।३६ उच्चं ३।६।४३।२६।१६। द्युफलांशः ०।०।०।१५।५८। द्युफलसंस्कृतमन्दकेन्द्रं ७।२५।११।३।३४। मध्यमः ११।१।५४।२९।५० परफलज्या तु कथितैव २।१।२५।३।५३ एवमेभिः स्पष्टता क्रियते। तत्र क्षेत्रस्वरूपं यथा गघह कोणज्या गद रेखा ४९।५५।३४।२९।४१ दवं भुजफलरूपं १।३९।४०।५९।१४।३१।३२।२।१६।१३' अस्य वर्गः २।४५।३६।४३।३१।२८। ३०।३३।४५ कोटिः ३४।४८।५६।२६। ज्या ३४।१५।२२।३९।११। कोटिफलं घवं १।९।१९।१९।१८।२९।१३।३३।९।४३ इदं षष्टितुल्ये घते शोधितं शेषं वतं ५८।५०।४०।४०।४१।३०।४६।२६।५०।१७ ।

अस्य वर्गः ५७।४२।४१।२६।५६।३६।४३।३६।२९।२४ वर्गयोर्योगः ५७।४५।२७।३।४०।८।१२।७।३।६ मूलं ५८ ५२।५।५।३६। अयं कर्णः इदं दत रेखा पुनरधरीकृतयानया दत रेखया भुजफलं भक्तं जातं दतव कोणज्या प्रमाणं १।४१।३५।५९।२४। चापं मन्दफलं १।३७।२।१। इदं मध्यमे योजितं जातः स्पष्टः ११।३।३१।३१।५१। अयमपि मिलितः । एवमुक्तसंस्थातः स्पष्टा अपि निरन्तरेण मिलिताः, तस्मादयं निश्चयः सूर्यस्य कृत इत्यलं बहुश्रमैः ।

अथ मध्यगतिस्पष्टगत्योर्विचा ( रो ) निरूप्यते । तत्र प्रत्येकग्रहो निजसमानैकगत्या सर्वदा भ्रमति । तद्दर्शने तद्गतेर्यन्न्यूनाधिक्यं भवति तत्तदाकाशकृतमस्ति । तत्र न्यूनाधिकगतेः कारणद्वयमस्ति ।

अथ गतिन्यूनाधिक्यदर्शनेनेदमनुमीयते ग्रहाधिष्ठिताकाशानां केन्द्रं भूकेन्द्रे नास्ति । भूमिस्तु तदन्तर्गतास्ति । एषामाकाशानां केन्द्रं भूकेन्द्रे स्यात् , तत्र गतिः समाना भवति । अथवेयं भूस्तदाकाशमध्यवर्त्तिनी

नास्ति। सचाकाशस्तु भूकेन्द्रा ( का ? ) काशाश्रितोस्ति। पूर्वाकाशस्य प्रतिवृत्तेति संज्ञा द्वितीयस्य नीचोच्चवृत्तमिति संज्ञा। अनेन प्रकारद्वयेन गतेर्न्यूनाधिक्यं दृश्यते। तत्र प्रथमक्षेत्रेण प्रतिवृत्तजनितगतेर्न्यूनाधिक्यज्ञानं निरूप्यते। कखगघं वृत्तं ह केन्द्रे कल्पितं कघ रेखा व्यासः रुं भूकेन्द्रं कचिह्नं उच्चं घं नीचं कखचापं गघचापं च समानं कल्पितम्। पुनः खह रेखा खरु रेखा गह रेखा गरु रेखा च संयोजिता। तस्मात् कहखकोण गहघकोणौ समानौ स्तः। एतयोः प्रत्येकात् खरुक कोणः, न्यूनोऽस्ति गरुघकोणश्चाधिकोऽस्ति। तस्मादेतौ द्वौ कोणौ तुल्यकोणयोर्न्यूनाधिकौ जातौ। तस्माद्गतेर्न्यूनाधिक्यं दृश्यते।

अथ द्वितीयं क्षेत्रम्। तत्र नीचोच्चवृत्तजनितगतेर्न्यूनाधिक्यं निरूप्यते--तत्र भूकेन्द्ररूपहचिह्नकेन्द्रे कखगघं वृत्तं कल्पितं तद्वृत्तपालौ कं केन्द्रं कृत्वा रुवतपं नीचोवृत्तं कार्यं। ग्रहबिम्बं रुचिह्ने त चिह्ने वा स्यात्। तदा कचिह्ने दृष्टिगोचरो भविष्यति। यदि च रुचिह्नाच्चलित्वा व चिह्ने समायाति तदा ख चिह्नदिशि कचिह्नगतेः सकाशात्कवचापतुल्याधिकं दृग्गोचरो भविष्यति। यदि च रु चिह्नात्पचिह्नदिशि बिम्बं सङ्गच्छति तदा क ( प ) चापमिता न्यूनागतिर्दृष्टिगोचरा भवेत्।

अथ च प्रतिवृत्तोच्चदिशि सदैव न्यूनागतिरस्ति। नीचदिशि सदैवाधिकास्ति। कुतः करुखकोणः गरुघकोणात् सदैव न्यूनोस्ति। नीचोच्चवृत्ते नीचो ( च्च ) दिशि न्यूनाधिकागतिर्भवितुमर्हति।[1] कुतः नीचोच्चवृत्तकक्षावृत्तयोर्गतिर्यदैकदिक्का भवति। तदोच्चदिश्यधिकागतिर्भवति। नीचदिशि न्यूना। यदि तयोर्गतिर्भिन्नदिक्का स्यात्तदोच्चदिशि न्यूनागतिर्भवति। नीचदिश्यधिका च।

अथ च यस्य ग्रहस्यैकफलमस्ति तस्यानयोः प्रकारयोर्मध्य, एक प्रकारेण सिद्धिरस्ति। येषु च फलद्वयं तेषु प्रकारद्वयेन सिद्धिः। अथैतत्प्रकारयोरन्तरं नास्ति। यथा भूकेन्द्रप्रतिवृत्तकेन्द्रान्तरनिष्पत्तिः प्रतिवृत्तव्यासार्द्धेन तथा भवेद्यथोच्चनीचवृत्तव्यासार्द्धनिष्पत्तिः कक्षावृत्तव्यासार्द्धेन भवेत्। अथ च प्रतिवृत्तकक्षावृत्तयोरेकदिशि यदि गतिः स्यात्

१. अत्र युक्तिः स्फुटा नास्ति।

पुनर्नीचोच्चवृत्तस्य भिन्नदिक्का गतिः स्यादित्यपि चिन्त्यं एवं गतित्रयमेकरूपमिति ध्येयम् ।

अथ परममन्दफलं कदा जायते तन्निरूप्यते । यत्र नवत्यंशमितमन्दस्पष्टो भवति तत्र परमं मन्दफलमुत्पद्यते । तस्मिन्नेव स्थले गतिफलाभावः । तत्रोच्चात्कक्षावृत्तमध्यगतिर्यग्रेखाप्रतिवृत्तसंपातपर्यन्तं गतिसंबन्धिकालो महान् भवति । संपातान्नीचपर्यन्तं गतिकालोऽल्पो भवति ।

अथ नीचोच्चवृत्तगतिकक्षावृत्तगत्योरेकदिक्त्वे उक्तगतिकालवैपरीत्यं भवति ।

अथ तृतीयक्षेत्रेऽस्य विचारो निरूप्यते--तत्र कखगघं प्रतिवृत्तं हकेन्द्रं कगव्यासः रुचिह्नं भूकेन्द्रं कल्पितं पुनः खघरेखा कगरेखयोः संपातः समकोणरूपः कल्पितः । तत्र ग्रहबिम्बमेकदा घ चिह्ने कल्पनीयं पुनः खचिह्ने कल्पनीयम् । तदा कचिह्नान्नवत्यंशान्तरे तद्बिम्बं भवति । पुनर्हख रेखा हघ रेखा च संयोज्या । तस्मात् हखरुकोणः समानगतिरूपकरुखकोणयोरन्तररूपोस्ति । अयं, अन्तरकोणः सर्वेभ्योऽन्तरकोणेभ्योऽधिकोस्ति । यथा हतरुकोण हफरुकोणौ कल्पितौ । पुनस्तघ रेखा फघ रेखा ( च ) तत्र संयोजितास्ति । तत्र तरुघत्रिभुजे तरुभुजो रुघभुजादधिकोस्ति । तस्मात्तघरुकोणः घतरुकोणादधिको भविष्यति । पुनर्हखरुकोणतुल्यः हघरुकोणः हतरुकोणादधिकोऽस्ति । हफरुकोणादप्यधिकोऽस्ति । कुतः यतो रुघफत्रिभुजे रुघभुजः रुफभुजादधिकोस्ति । तस्मात् रुफघकोणः रुघफकोणादधिको भविष्यति । हफघकोणतुल्य हघफकोणस्य शेषरूपः हखधकोणतुल्यहघरुकोणः हफरुकोणशेषादधिकोस्ति । पुनर्न्यूनगतेर्मध्यगतिपर्यन्तं यत् कखचापं तन्मध्यगतेरधिकगतिपर्यन्तं खगचापाद्द्विगुणपरमफलतुल्यमधिकमस्ति । कुतः कहखकोणः समकोणात् हखरुकोणतुल्योधिकोस्ति । खहगकोणस्तु तावता प्रमाणेन समकोणान्न्यूनोऽस्ति । अनेन प्रकारेणेदं सिद्धं गतिफलाभावस्थानादुभयदिशि अन्तरफलकोणाः निकटस्थाः दूरस्थान्तररूपफलकोणेभ्योधिकाः भवन्ति ।

अथ चतुर्थं क्षेत्रम्—तत्र कखगं कक्षावृत्तं भूकेन्द्रं दचिह्नं हरुवं नीचोच्चवृत्तं ककेन्द्रे कल्पनीयम् । पुनर्हख रेखा केन्द्रद्वये पातनीया ।

यदा ग्रहबिम्बं उच्चान्नवन्त्यंशान्तरे भवति, तदाबिम्बं वचिह्ने कल्पितं, पुनर्दवग रेखा कव रेखा च संयोज्या तदा दवग रेखा नीचोच्चवृत्तपालि संलग्ना गमिष्यति । कुतः हकवकोणः समानगतिकोणोऽस्ति । अयं ककेन्द्रे दकेन्द्रे च समानोऽस्ति । कदवकोणः फलस्य कोणोऽस्ति । तस्मात्कवद-कोणः स्पष्टगतेः कोणो जातः । अयं समकोणः । कुतः स्पष्टगतेर्नवति-तुल्यत्वकल्पनात् । तस्माद्दवरेखा नीचोच्चवृत्तपालिलग्ना भविष्यति । अस्मादिदं निश्चितं कदवकोणः सर्वेभ्यो गत्यन्तरकोणेभ्योधिकोऽस्ति । पुनरपि हकवकोणस्तु न्यूनगतेर्मध्यगतिपर्यन्तमस्ति । अयं द्विगुणकदव-कोणतुल्यं मध्यगतेरधिकगतिपर्यन्तं रुकवकोणादधिकोऽस्ति । यदि तक लम्बः कचिह्नात् हखरेखोपरि निष्काश्यते तदा दवरेखा तच्चिह्नपर्यन्तं वर्द्धनीया । तदा हकवकोणः हकतसमकोणात् कदवकोणतुल्य तकवकोण तुल्याधिको भविष्यति । रुकवकोणस्तावत् रुकतसमकोणान् न्यूनो भविष्यति ।

अथ पञ्चमं क्षेत्रं—तत्र द्वयोः पूर्वोदितप्रकारयोरन्तरं नास्तीति निरूप्यते--कखगं कक्षावृत्तं दकेन्द्रे हरुवं प्रतिवृत्तं तत्समानं तकेन्द्रे कल्पनीयम् । पुनर्गहव्यासः केन्द्रद्वयगतः कल्पनीयः । पुनः कखचापं कक्षावृत्तीयमिष्टचापं भवति । पुनः खकेन्द्रे तदर्द्धव्यासेन परुं नीचोच्च-वृत्तं कार्यं पखद रेखा च कार्या । तदा ग्रहबिम्बं प्रकारद्वयगतिभ्यां प्रति-वृत्तनीचोच्चवृत्तसंपातरूपरुचिह्ने प्राप्तं भविष्यति । तदा कखचाप हरु-चापपरुचापानि त्रीण्यपि सजातीयानि भविष्यन्ति ।

अस्योपपत्तिः--तत्र रुतरेखा रुखरेखा रुदरेखा च संयोज्या । तस्मात् रुखदतचतुर्भुजं समानान्तरभुजं भविष्यति । पुनः हतरुकोण रुखपकोणौ प्रत्येकं कदखकोणसमानौ भविष्यतः । तस्माच्चापत्रयमपि सजातीयं भविष्यति । ग्रहबिम्बं च प्रकारद्वयेन रुचिह्ने गमिष्यति । पुनः कलचापं ग्रहबिम्बस्य स्पष्टं भविष्यति । पुनरपि फलं प्रकारद्वयेनाप्येकमेव । कुतः गत्यन्तरस्य तरुदकोण पदरुकोणयोः समानरूपत्वात् । अनेनैव प्रकारेण सर्वस्थलेष्वपि बोध्यम् ।

अथोच्चनीचवृत्तकल्पनया प्रतिवृत्तप्रकार उत्पद्यते । प्रतिवृत्तप्रकार-कल्पनया नीचोच्चप्रतिवृत्तप्रकारो नैव सिद्ध्यति । पूर्वोक्तपञ्चमक्षेत्रे निरूपितप्रकारो निष्पत्तिराश्योः साम्ये भवति ।

यदि तौ समानौ न भवतः। केवलं सजातीयौ भवतस्तद्विचारार्थं षष्ठक्षेत्रं निरूप्यते। तत्र कखगं कक्षावृत्तं दकेन्द्रे उच्चनीचोपरिगतः कगव्यासः खकेन्द्रे हरुमुच्चनीचवृत्तं च, कखचापं उच्चस्थानात् नीचोच्चवृत्तकेन्द्रपर्यन्तं, हरुचापं च ग्रहगतिरूपं सजातीयं नीचोच्चवृत्ते कल्पितम्। पुनर्दखहरेखा खरुरेखादरुरेखा च संयोज्या। तस्मात्कदह-कोणरुखहकोणौ समानौ स्तः। तदा कद रेखा रुखरेखा च समानान्तरा भविष्यति। ग्रहबिम्बं च दरु रेखायां भविष्यति। पुनः पं केन्द्रं कृत्वा वतप्रतिवृत्तं कक्षावृत्ताद् बृहत्कल्पितम्। न केन्द्रे लमप्रतिवृत्तं कक्षावृत्ता-ल्लघुकल्पितम्। पुनर्दरुरेखा दकरेखा च वर्द्धनीया तपरेखा मनरेखा च संयोजनीया। दखरुखयोर्निष्पत्तिः, तपपदनिष्पत्तिसमाना वा मननद-निष्पत्तितुल्या कल्पिता। पुनः खरुद नदम पदत त्रिभुजेषु खरुदकोण, मदनकोण रुदयकोणाः समाना सन्ति। एतत्कोणातिरिक्तान्यकोणभुजाः सजातीयाः सन्ति। शेषकोणाः समकोणान्न्यूनाः सन्ति। तस्मात्त्रीण्यपि त्रिभुजानि सजातीयानि जातानि। खदरुकोण, दमनकोण, दतपकोणाः समाना जाताः। तस्माद्दह नम तप रेखाः समानान्तरा भविष्यन्ति। तस्मात्कदखकोण कनमकोण वपतकोणाः समानाः सन्ति। तस्मात्कख-चापवतचाप-लमचापानि सजातीयानि सन्ति। तदा ग्रहबिम्बं प्रतिवृत्त-द्वयेऽपि तचिह्ने मचिह्ने च दरुरेखायां भविष्यति। पुनर्हदरु-दमन-दतप-गत्यन्तरकोणाः समाना भविष्यन्ति। इदमेवास्माकमिष्टम्।

अथ ग्रहबिम्बं उच्चनीचाभ्यां समानस्पष्टचापस्थं भवति। तदा तत्फलेऽपि समाने स्तः।

अथ सप्तमक्षेत्रे एतद्विचारो निरूप्यते। तत्र हकेन्द्रे कखगघं प्रतिवृत्तं कगव्यासः रुचिह्नं भूकेन्द्रं कल्पनीयं, खरुदरेखा भूकेन्द्रोपरिगता कार्या। हखरेखा गहरेखा संयोज्या। तस्मात्करुखकोण गरुघकोणौ समानौ स्तः। हखघत्रिभुजे खकोण घकोणौ फलकोणावेतौ मिथः समानौ स्तः। तदोच्चात्कखचापं स्पष्टचापात्फलतुल्यमधिकं स्यात्। नीचादारभ्य घगचापं फलतुल्यस्पष्टचापात् न्यूनमस्ति। कुतः कहख कोणः करुख-कोणात्खकोणेनाऽधिकोऽस्ति। पुनर्गरुघकोणो घहगकोणाद् घकोणेना-धिकोस्ति।

अथाष्टमक्षेत्रम्--तत्र दकेन्द्रे कखगं कक्षावृत्तं कदव्यासः हरुवमुच्चनीचवृत्तं ककेन्द्रे कल्प्यं, पुनर्दवरुरेखा कार्या। पुनः करुरेखा कवरेखा संयोज्या। तस्मात्कखचापं फलं भविष्यति। रुचिह्नमुच्चाद्वचिह्नं नीचात्समानस्पष्टचापे स्तः। कुतः करुदकोणः समानगतिरूप-रुकहकोणगत्यन्तररूप हदरुकोणयोरन्तररूपोऽस्ति। तस्मादयं कोणः स्पष्टकोणो जातः। एवं हि कवरुकोणोपि करुवकोणसमानो भविष्यति। कुतः करुरेखा कवरेखयोः समानत्वात्। तस्माद्वयोः फले समाने जाते। हकरुकोणप्रमाणमुच्चचापं करुदकोणप्रमाणस्पष्टचापात् फलतुल्यमधिकमस्ति। वकदकोणप्रमाणं नीचचापं कवरुकोणप्रमाणस्पष्टचापात्फलतुल्यं न्यूनमस्ति। इदमेवास्माकमिष्टम्।

अथ नवमं क्षेत्रं--तत्र परमफलज्ञानं निरूप्यते। दकेन्द्रं कृत्वा कखगं प्रतिवृत्तं कार्यं, हं भूकेन्द्रं केन्द्रद्वयगतश्च कगव्यासः कचिह्नमुच्चं च कल्पितम्। पुनर्हखलम्बः कगव्यासोपरि निष्कास्यः। दख रेखा संयोज्या। तत्र षष्टिमितखदानुसारेण हदरेखा २।१।२५ मिता जाता। अस्याश्चापं १।५५।५२। एतत्परमफलं खकोणप्रमाणं कदखकोणस्तु षट्पञ्चकलाधिकैकनवत्यंशमितोस्ति। एतदस्य मन्दकेन्द्रं, मन्दस्पष्टस्तु नवतिमितः। एवं हि द्वितीयदिश्यपि ज्ञेयम्।

अथ दशमं क्षेत्रम्--तत्र द्वितीयप्रकारो निरूप्यते। करुरेखा उच्चनीचवृत्तस्य व्यासार्द्धरूपा केन्द्रद्वयान्तरतुल्या कदरेखा कक्षावृत्तव्यासार्द्धरूपा षष्टिमिता कल्पिता। दरुरेखा भूकेन्द्रादुच्चनीचवृत्तपालिलग्ना निष्कासिता तदा कदरुकोणः परमफलं भविष्यति। हकरुकोणस्तु मन्दकेन्द्रं भविष्यति। करुदकोणस्तु स्पष्टकेन्द्ररूपो भविष्यति। एतत्त्रयाणां प्रमाणानि तान्येव यानि पूर्वमुक्तानि इदमेवास्माकमिष्टम्।

अथैकादशं क्षेत्रम्--तत्रेष्टफलसाधनं निरूप्यते। कखगं कक्षावृत्तं दभूकेन्द्रोपरि हरुवं प्रतिवृत्तं तकेन्द्रोपरि केन्द्रद्वयगतो गहव्यासः। इष्टमन्दकेन्द्रं त्रिंशदंशमितं हरुचापं कल्पितम्। तत्र रुदरेखा रुतरेखा च संयोज्या। पुन रुतरेखा वर्द्धनीया पुनर्दचिह्नाद् दफलम्बः रुतरेखोपरि कार्यः। तस्मात्तफदत्रिभुजे तकोणः ३०। दकोणस्तु तदूननवतिः ६०। केन्द्रद्वयान्तररूप २।१।२५। तद्भुजश्चैतत्त्रयं ज्ञातमस्ति। तस्मादफ

भुजोऽपि ज्ञातो भविष्यति । स च सार्धद्विचत्वारिंशद्विकलाधिकांशमितोऽस्ति । तफ भुजोऽपि ज्ञातोऽस्ति । स च सं १।४५।६। मितोऽस्ति । पुन रुतरेखा ६१।४५।६। एतन्मिता भविष्यति । रुदरेखा च ६१।४६। अंशकलामिता भविष्यति । पुनर्दफरुदयोर्निष्पत्तिस्तथा भविष्यति यथा रुदफत्रिभुजे रुकोणज्या निष्पत्तिः षष्टिमित फसमकोणज्ययास्ति । तस्मात् रुकोणज्या ०।५८।५८। पुन रुकोणः ०।५६।१६। तस्मात्कदखकोणः २६।३।४१ ।

अथ द्वादशं क्षेत्रम्--तत्र क्रान्तिवृत्तस्य मन्दस्पष्टचापं कखरूपं ज्ञातमस्ति । तस्मात्तचिह्नात्कचिह्नोपरि लम्बः कार्यः । ततः तदफत्रिभुजे दकोणस्तदभुजश्च ज्ञातोऽस्ति । तस्मादेतद्वयज्ञानेन तफभुजो ज्ञातो भविष्यति । अनेन तरुव्यासार्द्धेन च तरुफकोणरूपमिष्टफलं विज्ञातं भविष्यति । अनेन कदखकोणेन च हतरुकोणरूपमन्दकेन्द्रं ज्ञातं भविष्यति । पुनर्यदि तरुफकोणरूपमिष्टफलं ज्ञातं स्यात् । अनेन रुतव्यासार्द्धेन च तफभुजोपि ज्ञातो भविष्यति । अनेन इष्टफलेन च हतरुकोणो ज्ञातो भविष्यति ।

अथ त्रयोदशं क्षेत्रम्—तत्र द्वितीयप्रकारेण स्वेष्टफलं निरूप्यते । तत्र दचिह्नभूकेन्द्रोपरि कखगं कक्षावृत्तं पुनः ककेन्द्रोपरि हरुवतं उच्चनीचवृत्तं केन्द्रद्वयगतो गहव्यासश्च मन्दनीचोच्चवृत्तस्य हरुमिष्टचापं त्रिशदंशमितं कल्पितम् । पुन रुफलम्बः गहरेखोपरि नेयः पुन रुकरेखा संयोज्या पुनः ककोण रुकोणयोर्ज्ञानेन रुकव्यासार्द्धेन रुफकत्रिभुजस्य रुफभुज फकभुजौ ज्ञातौ भविष्यतः । रुफ फद भुजाभ्यां च रुदकर्णो ज्ञातो भविष्यति । रुफफदभुजाभ्यां च रुदकर्णो ज्ञातो भविष्यति । अनेन कर्णेन रुफभुजेन च रुदफ कोण कखचापं च विदितं स्यात् ।

अथ चतुर्दशं क्षेत्रम्--तत्र यदि कदरुकोणो ज्ञातो भविष्यति । तदा कचिह्नात् रुदरेखायां लम्बो नेयः । तस्मात रुकोण करुभुजाभ्यां कल भुजोपि ज्ञातो भविष्यति । [ अनेन कदभुजेन च कदख कोणो ज्ञातो भविष्यति[1] ] ।

---

१. कोष्ठान्तर्गतोऽश. खपु. नोपलभ्यते ।

अथ च कदख कोण करुखकोणा [ भ्यां हकरुकोण[१] ] हरुचापे ज्ञाते भविष्यति ( तः ? ) पुनरपि यदि कखचापं ज्ञातं स्यात्तदा तेन कदभुजेन कलभुजो ज्ञातो भवति। पुनः अनेन रुकभुजेन च करुखकोणस्य पुनः हकरुकोणस्य च ज्ञानं स्यात्।

अथ पञ्चदशं क्षेत्रं--प्रथमप्रकारेण निरूप्यते। यदीष्टचापं प्रतिवृत्तस्य नीचादिमारभ्य स्यात् तदास्मिन्प्रकरणे प्रथमक्षेत्रं करणीयम्। रुवमिष्टचापं त्रिंशदंशमितं कार्यम्। तदा दफलम्बः रुतरेखायां पतिष्यति। पुनः पूर्वोक्तप्रकारेण दफलम्बः १।०।४२। मितो भविष्यति। दफ रेखा च १।४५।६। फरुशेषं ५८।१४।५१। रुदरेखा च ५८।१५।५१। मन्दफलज्या १।२ [ [२]३१। मन्दफलं ०।५६।४३। मन्दस्पष्टं खगचापं ३०।५६।४२ ]।

अथ षोडशं क्षेत्रम्--तत्र मन्दस्पष्टखगचापं ज्ञातमस्ति। तदा प्रथमक्षेत्रं कार्यं पुनः खदरेखा वर्द्धनीया तच्चिह्नात्तल लम्बः खदरेखायां संयोज्यः। अस्माल्लम्बान्मन्दफलं मन्दकेन्द्रं पूर्वोक्तप्रकारेण विदितं स्यात्।

अथ सप्तदशाष्टादशक्षेत्रे निरूप्येते। द्वितीयप्रकारेण तत्र तृतीयचतुर्थक्षेत्रे कार्ये। वतमिष्टचापं कल्पनीयं, एतच्चापं वकतकोणप्रमाणं प्रथमक्षेत्रे द्वितीयक्षेत्रे च कवलकोणप्रमाणरूपमस्ति। पुनर्वफलम्बः कदरेखायां प्रथमक्षेत्रे कललम्बस्तु द्वितीयक्षेत्रे दवरेखायां साध्यः। तत्र पूर्वोक्तप्रकारेण शेषकोणज्ञानं कार्यम्। एवं मन्दफलज्ञाने मन्दकेन्द्रमन्दस्पष्टस्य च ज्ञानं कार्यम्। इदमेवास्माकमिष्टम्।

अथ रविस्पष्टीकरणं पद्यैरुच्यते--

अथ रव्यादीनां मन्दपराण्युच्यन्ते।

रवेर्द्वयं २ भूः १ शरपक्षतुल्यं २५
मान्दं परं भागमुखं प्रदिष्टम्।
इन्दोः शराः ५ शक्रमिताः १४
खवाण ५० मान्दं परं तद्द्विगुणञ्च पाक्षम्॥ १॥

---

१. कोष्ठान्तर्गतोऽशः खपु. नोपलभ्यते।

२. कोष्ठान्तर्गतोऽशः खपु. न दृश्यते।

भौमस्य षड् ६ वेदभुवो १४ विदः स्यात्
त्रयं ३।० गुरोर्द्वौ २
तुरगाब्धयः ४७ स्यात् ।
शून्यं द्विबाणा ०।५२। भृगुनन्दनस्य,
त्रयं नवद्विप्रमिताः ३।२९ शनेः स्यात् ॥ २ ॥

अथ भौमादीनां शीघ्रपराण्युच्यन्ते ।
गोवह्नयस्त्र्यब्धिमिताः कुजस्य ३९।४३,
सार्द्धा द्विदस्रा २२।३०। शशिनन्दनस्य ।
गुरोर्भवाश्चाश्वयुगा ११।४७। पराख्यं
भृगोस्त्रिवेदाः खभुवः ४३।१०। प्रदिष्टम् ॥ ३ ॥

शनेर्नगा नन्दकलाविहीनाः ६।५१। शैघ्रं परं वेधविनिश्चितं स्यात् ।
जीवात्मकं ज्ञेयमिदं निरुक्तं पराख्यचापं परमं फलं स्यात् ॥ ४ ॥
मन्दोच्चहीनः खचरो ग्रहोनं शीघ्रोच्चकं स्याच्च तदाख्यकेन्द्रम् ।
केन्द्रे तुलाजादिगते धनर्णं मान्दं फलं स्याच्च फलं विलोमम् ॥ ५ ॥
केन्द्रं त्रिभाल्पं त्रिभतोऽधिकं चेच्छुद्धं रसेभ्यो रसभाधिकं चेत् ।
रसोनितं गोभवनाधिकं चेच्चक्राद् विशोध्यं च भुजः प्रदिष्टः ॥ ६ ॥
त्रिभच्युतो दोः कथितात्र कोटिस्ततोंऽशकानां भुजकोटिजानाम् ।
जीवा प्रसाध्या खलु कोष्टकोक्ता चापं विधेयं विपरीतरीत्या ॥ ७ ॥
व्यस्तैस्तु खण्डैर्विपरीतजीवा साध्या तु तैरेव तदीयचापम् ।
कार्यं सुधीभिर्गणकैः स्वबुद्ध्या फलं प्रवक्ष्ये रवितोऽपि मान्दम् ॥ ८ ॥

दोः कोटिजीवे परमा ( न्द ) २०।१।२५
सङ्गुणे त्रिज्या विभक्ते भुजकोटिजे फले ।
अथ फलं कोटिभवं युतोनितं
त्रिभज्यकायां मृगकर्किकेन्द्रे ॥ ९ ॥

शेषस्य वर्गो भुजसंज्ञकस्य फलस्य वर्गेण युतोऽस्य मूलम् ।
स्यान्मन्दकर्णोऽथ फलं भुजाख्यं त्रिभज्यया सङ्गुणितं विधेयम् ॥१०॥
तन्मन्दकर्णेन हृतं फलस्य चापं भवेन्मन्दफलं लवाद्यम् ।

अथार्थः—रवेर्द्वयं भूरित्यादि फलं प्रवक्ष्ये रवितोऽथ मादमित्यन्तं श्लोकाः स्पष्टार्थाः दोः कोटिजीवेत्यादि भवेन्मन्दफलं लवाद्यमित्यन्तं सार्द्धपद्यद्वय-

स्यार्थो लिख्यते। दोर्ज्याकोटिज्या च पृथक् मान्दान्त्यफलज्यया २।१।२५। अनया गुणिता त्रिज्या भक्ता क्रमेण भुजफलं कोटिफलं च स्यात्। यथा भुजज्या मान्दान्त्यफलज्यया २।१।२५। अनया गुणिता त्रिज्यया भक्ता भुजफलं भवेत्। कोटिज्या मान्दान्त्यफलज्यया २।१।२५। अनया गुणिता त्रिज्याभक्ता कोटिफलं भवेत्।

अथ कोटिफलं मकरादिकेन्द्रे त्रिज्यायां योज्यं कर्कादिकेन्द्रे त्रिज्यायां शोध्यं शेषस्य वर्गः भुजफलवर्गयुतः अस्य मूलं मन्दकर्णः स्यात्।

अथ भुजफलं त्रिज्यागुणं मन्दकर्णभक्तं लब्धफलस्य चापं अंशाद्यं मन्दफलं भवति।

## अत्रोपपत्तिः

शकलानि पूर्वोक्तान्येव ज्ञेयानि।

श्रीगणेशाय नमः॥ अथ सर्वदेशीयजरकालीयन्त्रं लिख्यते—प्रथमं अभीष्टं वृत्तं कार्यं तद्भांशाङ्कितं पूर्वपररेखाङ्कितं ऊर्ध्वाधररेखाङ्कितं च कार्यं एतदायनवृत्तं याम्योत्तरवृत्तं च ज्ञेयम्। ऊर्ध्वाधररेखा नाडीवलयं भवति। तिर्यक्रेखा निरक्षक्षितिजं ज्ञेयम्। नाडीवृत्तादुभयतो प्रत्यंशं अहोरात्रवृत्तानि कार्याणि। यन्त्रे सन्मुखे कृते स्वदक्षिणविभागे दक्षिणदिक् ज्ञेया। वामभागे सौम्या दिक् ज्ञेया। अंशगणना तु नाडीवलयाद् ज्ञेया। निरक्षक्षितिजस्य उभयप्रान्तौ ध्रुवौ ज्ञेयौ दक्षिणोत्तरौ। ध्रुवद्वयलग्नानि वृत्तानि ध्रुववृत्तानि ज्ञेयानि। एषां गणना अयनवृत्तान्नाडीवृत्ते ज्ञेया। तानि वृत्तानि भार्द्धांश १८० मितानि भवन्ति। तान्येव अधो विभागाद् गणितानि भार्द्धांश १८० मितानि भवन्त्येव। अयनवृत्ते नाडीवृत्ताद् दक्षिणतो परमक्रान्त्यंशान्तरे चिह्नं कार्यम्। अधोविभागे नाडीवृत्तादुत्तरतो परमक्रान्त्यंशान् दत्वा चिह्नं कार्यम्। चिह्नद्वयगकेन्द्रस्पृष्टा रेखा क्रान्तिवृत्तं भवति। ततः नवत्यंशान्तरे उभयतः कदम्बचिह्नं ज्ञेयम्। तद्गता रेखा कदम्बसूत्रं ज्ञेयं, कदम्बद्वयलग्नानि प्रत्यंशं कदम्बवृत्तानि कार्याणि। एवं, अहोरात्रवृत्तवत् शरकोटिज्यावृत्तानि कार्याणि। अयनवृत्तात्क्रान्तिवृत्ते मकरादितो षट्राशयो ज्ञेयाः। एवं अधोविभागाद् अयनवृत्तात् त एव राशयः कर्कादितो विलोमेन ज्ञेयाः। यन्त्रे बिन्दवः नक्षत्र १३३ स्थानानि ज्ञेयानि एषां नामानि उपरितः लिखितानि

मकरादितो ज्ञेयानि। एषां नामानि अधोविभागात् लिखितानि तानि कर्कादितो ज्ञेयानि। तत्र पट्टी अन्यदेशक्षितिजं ज्ञेयं, पट्टिकायां नवति-विभागाः यन्त्रराजोक्तवत् कार्याः। नाडीवलयसूत्रे क्रान्तिवृत्तसूत्रे क्षितिज-सूत्रे विभागकरणन्तु यन्त्रराजोक्तवत् ज्ञेयम्।

## अथ द्वितीयपार्श्वे रेखाकरणप्रकारः—

तत्र यद्वृत्तं याम्योत्तरवत् तद्दृग्वृत्तं ज्ञेयं चतुःसूत्राङ्कितं कार्यम्। उपरितनविभागे प्रथमचतुर्थयोः नवतिर्नवतिर्विभागाः कार्याः। अधो-विभागे द्वितीयतृतीपदयोः छायाविभागाः कार्याः। तदन्तर्गतं अन्यद्वृत्तं कार्यं। तद्भांशाङ्कितं कार्यं, याम्योत्तरवृत्तसंज्ञम्। अत्रापि ऊर्ध्वसूत्रं नाडी-वलयं भवति, तिर्यक् सूत्रं निरक्षक्षितिजं ज्ञेयम्। नाडीवलयादुभयतः सरलरेखा अहोरात्रवृत्तसूत्राणि भवन्ति, तानि दक्षिणोत्तराणि ज्ञेयानि। तिर्यग्रेखाप्रान्तलग्नानि ध्रुववृत्तानि ज्ञेयानि। अधोविभागे तृतीयपदे कार्याणि। चतुर्थपदे ज्या रेखा षष्टिमिताः क्रमतः विलोमतश्च कार्याः। एका पट्टिका वेधार्थं कार्या। तत्र पट्टिकायां सच्छिद्रं भुजद्वयं दृढं कार्यं पट्टिकायां तिर्यक्पट्टी ऊर्ध्वाधरगमनशीला प्रोता कार्या।

इति परिभाषा।

## अथ गणितप्रकारः-तत्र क्रान्तितः स्पष्टसूर्यानयनम्।

क्रान्तिः दक्षिणा सौम्या वा ज्ञेया। तद्गतमहोरात्रवृत्तं क्रान्तिवृत्ते यत्र लग्नं तत्र स्पष्टः सूर्यो ज्ञेयः। दिनमानं वर्द्धिष्णु भवति, तदा मकरादौ ज्ञेयः। क्षयिष्णुश्चेत् कर्कादौ ज्ञेयः।

## पुनः प्रकारान्तरेणाह—

अयनवृत्तं नाडीवृत्तं कल्पनीयं, नाडीवृत्ते परमक्रान्त्यंशान् दत्त्वा तदग्रे यद्ध्रुववृत्तं तत्क्रान्तिवृत्तं कल्प्यं, पट्टिका ध्रुववृत्तं कल्प्यम्। उभौ ध्रुवौ मेषतुलासंपातौ ज्ञेयौ। द्युज्यांशान् केन्द्रात् पट्टिकायां दत्वा तदग्रे चिह्नं कार्यम्। क्रान्तिवृत्ते पट्टीचालनेन द्युज्याचिह्नं यत्र लगति तन्नाडी-रेखयोर्मध्ये भुजकोट्यंशा ज्ञेयाः नवतिशुद्धाः भुजांशाः। यदि क्रान्तिरुत्तरा वर्द्धमाना तदा प्रथमपदे ज्ञेयाः। क्रान्तिः क्षीयमाना तदा द्वितीयपदे ज्ञेयम्। दक्षिणा क्रान्तिः वर्द्धमाना तदा तृतीयं पदं ज्ञेयम्। क्षीयमाना चतुर्थपदं ज्ञेयम्।

## पुनः प्रकारान्तरेणाह——

अथ पट्टी ध्रुवसूत्रे संस्थाप्य तिर्यक् पट्टीं याम्योत्तरवृत्ते क्रान्त्यन्शान्तरे स्थाप्या। क्रान्तिर्यदा क्षीयमाना तिर्यक्पट्टीयुता पट्टी परमक्रान्त्यन्शान्तरे स्थाप्या। क्रान्तिर्यदा वर्द्धमाना तिर्यक्पट्टिका द्वितीयमग्रं द्वितीयविभागे परमक्रान्त्यन्शान्तरे स्थाप्या। एवं कृते तिर्यक्पट्टी नाडीवृत्ते यत्र संपातं करोति तत्र चिह्नं कार्यम्। पुनः पट्टिका नाडीवृत्ते स्थाप्या। तिर्यक्पट्टिका स्वचिह्नोपरि नेया। वलयात् पट्टिकाग्रपर्यन्तं मकरसूर्यान्तरं भवति। यदि दिनमानमुपचीयमानं भवति तदा ज्ञेयम्। यदि दिनमानं अपचीयमानं तदा कर्कसूर्ययोरन्तरन्तरांशा भवन्ति।

## अथ रविज्ञाने सति क्रान्तिज्ञानं——

क्रान्तिवृत्ते रव्यंशोपरि यदहोरात्रवृत्तं भवति तन्नाडीवृत्तयोरन्तरे क्रान्त्यंशा ज्ञेयाः। पुनः प्रकारान्तरं——स्पष्टसूर्यस्य भुजं कृत्वा कोटिः कार्यः। वृत्ते नाडीचिह्नात् कोट्यंशान् दत्त्वा तद्गतं अहोरात्रवृत्तं ग्राह्यं। नाडीवृत्ते याम्योत्तरवृत्तात् परमक्रान्त्यन्शान्तरे ध्रुववृत्तं ग्राह्यं, ध्रुववृत्त आनीताहोरात्रवृत्तसम्पाते पट्टिका स्थाप्या। सम्पाताद् अयनवृत्तपर्यन्तं पट्टिकायां क्रान्त्यंशा ज्ञेयाः। पुनः प्रकारान्तरेण मकरसूर्यान्तरं कर्कसूर्यान्तरं वा यथासन्नं भवतिं तथा कार्यम्। पट्टी नाडीरेखायां स्थाप्या अन्तरांशान् नाडीवृत्तात्याम्योत्तरवृत्ते दत्वा यदग्रे तिर्यक् पट्टी स्थाप्या। नाडीवृत्ते यत्र सम्पातं करोति तत्र चिह्नं कार्यम्। पुनः पट्टीं परमक्रान्त्यंशान्तरे स्थाप्या। तिर्यक् पट्टिका नाडीवृत्ते चिह्नोपरि नेया। पुनः पट्टीध्रुवसुत्रे नेया। तिर्यक् पट्टी यस्मिन् अहोरात्रवृत्ते सम्पातं करोति तदहोरात्रवृत्तनाडीवृत्तान्तरे क्रान्त्यंशा भवन्ति।

## अथ चरांशज्ञानं दिनार्द्धज्ञानं चाह——

याम्योत्तरवृत्ते नाडीवलयाल् लम्बांशान् दत्त्वा तदग्रे पट्टी स्थाप्या। तत्र उभयत्र समचिह्ने भवतः। पट्टी क्षितिजरेखा भवति। समचिह्नाद् दक्षिणध्रुवः अक्षांशान्तरितोऽधस्ताद् वर्त्तते। उत्तरध्रुवस्तु तावतान्तरेणोर्द्धमस्ति। सूर्यस्य क्रान्तिः यद्दिग् भवति तन्नाडीवलयात् तद्दिक् क्रान्तिं दत्वा तद्गतमहोरात्रवृत्तं क्षितिजरेखायां यत्र लगति तद् याम्यो-

त्तरवृत्तयोरन्तरं दिनार्द्धं भवति। तदंशगणना तु ध्रुववृत्तैर्ज्ञेया। अहोरात्र-वृत्ते निरक्षरेखाक्षितिजरेखयोरन्तरं चरांशा ज्ञेयाः। क्षितिजरेखातः याम्योत्तराधोभागपर्यन्तं अहोरात्रवृत्ते रात्र्यर्द्धं ज्ञेयम्। नक्षत्रदिनमानार्थं स्पष्टक्रान्तिं दत्वा तस्य रात्र्यर्द्धं चरं च ज्ञेयम्।

## अथ नतोन्नतकालसाधनम्—

पट्टीं द्वितीयपार्श्वे ध्रुवसूत्रे स्थापयित्वा नाडीवलयादुन्नतांशान् दत्वा तदग्रे तिर्यक् पट्टीं स्थापयेत्। नाडीवलयादुत्तरतो अक्षांशान् दत्वा तदग्रे पुनः पट्टीं स्थापयेत्। नाडीवलयात् सूर्यस्य क्रान्तिं यथादिशं दत्वा तदग्रगता रेखा तिर्यक् पट्टीं यत्र स्पृशेत् तत्र रेखायां चिह्नं कार्यं, तच्चिह्नगतं ध्रुववृत्तं नाडीरेखायां यत्र लग्नं तत्र चिह्नं कार्यम्। पुनः पट्टीं नाडीवृत्ते स्थापयित्वा तच्चिह्नोपरि तिर्यक् पट्टी नेया। तदग्रं वृत्ते यत्र लग्नं तन्नाडीवृत्तयोरन्तरे नतघटिका ज्ञेयाः। ताः दिनार्द्धाच्छोधिता उन्नतघटिका भवन्ति। पूर्वकपाले गतघटिकाः पश्चिमकपाले शेषघटिका भवन्ति।

## अथ नतकालादुन्नतांशज्ञानम्—

नाडीवलये पट्टीं स्थाप्या नतकालाग्रे तिर्यक् पट्टीं स्थापयेत्। तिर्यक् पट्टी नाडीवृत्तसम्पाते यद्ध्रुववृत्तं तस्य क्रान्त्यग्रगताहोरात्र-सूत्रस्य यत्र सम्पातः तत्र चिह्नं कार्यम्। नाडीवलयादुत्तरतो अक्षांशान्तरे पट्टीं स्थापयित्वा चिह्नोपरि तिर्यक् पट्टीं नयेत्। पुनः पट्टीं ध्रुवरेखायां नीत्वा तिर्यक्पट्टीवृत्ते यत्र लग्ना ततः नाडीरेखापर्यन्तं उन्नतांशा ज्ञेयाः।

## अथाग्राज्ञानमाह—

स्वाहोरात्रवृत्तक्षितिजसम्पातात्केन्द्रपर्यन्तं क्षितिजरेखायां अग्रा ज्ञेया।

## अथ निरक्षे विषुवांशसाधनमाह—

एषां क्षेत्रांशानां विषुवांशा भवन्ति। तान् अंशान् क्रान्तिवृत्ते दत्वा तद्गतं ध्रुववृत्तं नाडीवृत्ते यत्र लग्नं तत्र मकरादितो अंशान् ज्ञात्वा तेषु खसप्ताश्वि २७० मितान् अंशान् संयोज्य विषुवांशा भवन्ति।

## अथ निरक्षे विषुवांशेभ्यो लग्नसाधनम्—

मेषादितो ज्ञातविषुवांशेषु खसप्ताश्वि २७० मितानंशान् संशोध्य शेषांशान् मकरादितो नाडीवृत्ते दत्वा तद्गतं ध्रुववृत्तं क्रान्तिवृत्ते यत्र लग्नं तत्र चिह्नं कार्यम् । विषुवांशा यदि मकरादितो दत्ताः, तदा तच्चिह्नं मकरषट्के—ज्ञेयम् । यदि अधोभागे कर्कादितो दत्ताः, तदा कर्कादिषट्के चिह्नं गणनीयम् ।

## अथ स्वदेशीयोदयसाधनमाह—

क्रान्तिवृत्ते मकरादिषड्कं मेषादिषट्कं कल्पनीयम् । कर्कादिषट्कं तुलादिषट्कं कल्पनीयम् । अभीष्टांशोपरिगतं कदम्बवृत्तं अक्षांशोपरिगत अहोरात्रवृत्तस्य यत्र सम्पातः, तद्गतं ध्रुववृत्तं नाडीवृत्ते यत्र लग्नं तत्र स्वदेशीयोदयचिह्नं ज्ञेयम् ।

## अथ स्वदेशीयोदयेभ्यः लग्नसाधनम्—

विषुवांशान् नाडीवृत्ते ( याम्योत्तरवृत्ते ? ) दत्वा तत्र ध्रुववृत्तं नेयम् । याम्योत्तरवृत्ते नाडीवृत्तादक्षांशान् उत्तरतो दत्वा तद्गतं अहोरात्रं ज्ञात्वा विषुवांशध्रुववृत्त एतदहोरात्रवृत्तयोः सम्पाते चिह्नं कृत्वा तद्गतं कदम्बवृत्तं नेयं तत्क्रान्तिवृत्ते यत्र लग्नं तत्र स्वदेशीयं लग्नं ज्ञेयम् ।

## अथायनदृक्कर्मसाधनम्—

ग्रहबिम्बोपरिगतं कदम्बवृत्तं क्रान्तिवृत्ते यत्र लग्नं तत्र ग्रहध्रुवको ज्ञेयः । बिम्बगतं ध्रुववृत्तं क्रान्तिवृत्ते यत्र लग्नं यत्रायनदृक्कर्मसंस्कृतो ग्रहः । बिम्बगतकदम्बध्रुववृत्तयोः क्रान्तिवृत्ते यदन्तरं तदायनदृक्कर्म ज्ञेयम् । यद्बिम्बोपरि यद्गतं शरकोटिवृत्तं तत्क्रान्तिवृत्तयोरन्तरं शरो ज्ञेयः ।

## ग्रहस्य वा नक्षत्रस्य यन्त्रे स्थाननिश्चयमाह—

क्रान्तिवृत्ते गणित[1] ध्रुववृत्तं दत्वा तद्गतकदम्बवृत्तस्य शरकोटि वृत्तस्य च यत्र सम्पातः, तत्र ग्रहस्य नक्षत्र ( स्य ) वा स्थानं ज्ञेयम् ।

---

१. बिम्बगत इत्यर्थः । ( तागतध्रुवकं )

## ग्रहनक्षत्राणां चरसाधनं, अग्रासाधनं दिनार्द्धसाधनं च सूर्योक्तवत् ज्ञेयम्

अत्र क्रान्तिस्थाने स्पष्टक्रान्तिर्ग्राह्या ।

## अथ आक्षदृक्कर्मसाधनम्—

आयनदृक्कर्मसंस्कृतग्रहस्य निरक्षोदयेभ्यः विषुवांशाः मेषादितः साध्याः । तत्र स्पष्टं चरं न्यूनं कार्यं शेषं आक्षदृक्कर्मसंस्कृतग्रहस्य स्वदेशोदयो भवति । तस्मात् यल्लग्नं स आक्षदृक्कर्मसंस्कृतो ग्रह उदये भवति । अस्ते आयनदृक्कर्मसंस्कृतविषुवांशेषु स्पष्टं चरं योज्यं, तदुत्पन्नं लग्नं षड्राशियुतं आक्षदृक्कर्मसंस्कृतो भवति ।

## अथ स्वस्थानाद् इष्टकाले चलितग्रहस्थानस्य अन्तरज्ञानमाह—

यदा अयनवृत्तं याम्योत्तरवृत्ते भवति तदा सर्वे ग्रहाः नक्षत्राणि च स्वस्वस्थाने भवन्ति । यदा भगोलः यथा यथा चलति तथा स्वस्थानादन्तरं पतति तत् कियत् पततीति समानीयते । सूर्यस्य नतकालः साध्यः । मकरादितो ( ये ? ) सूर्यस्य विषुवांशाः साध्याः पूर्वकपाले विषुवांशेषु नतकालः शोध्यः, पश्चिमकपाले योज्यः । स स्वस्थानादन्तरकालो भवति । रात्रौ सषड्भसूर्यान्नतकालः साध्यः । सषड्भसूर्यस्य मकरादितो विषुवांशा ग्राह्याः । तेषामन्तरं कार्यं तद्वा स्वस्थानादन्तरं भवति । तदन्तरं आयनदृक्कर्मसंस्कृतस्य भस्य वा विषुवांशेषु शोध्यं शेषं याम्योत्तरवृत्ताद् ग्रहपर्यन्तं अन्तरकालो जातः ।

## अथ ग्रहर्क्षाणां उन्नतांशसाधनम्—

प्रथमं याम्योत्तरवृत्ताद् ग्रहपर्यन्तं अन्तरकालः साध्यः । तदंशाः नाडीवलये गणयित्वा ग्राह्याः । तदुपरिगतं ध्रुववृत्तं ग्रहाहोरात्रवृत्ते यत्र सम्पातं करोति तत्र चिह्नं कार्यं तत्काले तद् ग्रहस्य स्थानं भवति । पट्टिकां क्षितिजाकारान् धृत्वा ग्रहचिह्नं क्षितिजादुपरि वर्त्तते वा अधो वर्त्तते वेति ज्ञेयम् । अन्तरांशा भार्द्धांश १८० न्यूनास्तदा पूर्वकपाले ग्रहोऽस्तीति ज्ञेयम् । यदि भार्द्धांशेभ्योऽ १८० भ्यधिकास्तदा पश्चिमकपाले ग्रहोस्तीति ज्ञेयम् । अन्तरकालः यदि दिनार्द्धन्यूनस्तदा स एव

नतकालो ज्ञेयः। अन्तरकालः रात्रिमानदिनार्द्धयोगाद्यद्यधिकस्तदा भांशेषु ३६० शोध्यः, शेषं नतकालो भवति।

## नतकालात् स्पष्टक्रान्तिश्च उन्नतांशसाधनं सूर्योन्नतांशसाधनवत् ज्ञेयम्।

## अथ भग्रहाणामुन्नतांशेभ्यः, रात्रिगतसाधनमाह—

ग्रहस्योन्नतांशं साधयित्वा स्पष्टक्रान्तिं च साधयित्वा पूर्वोक्तप्रकारेण नतकालः साध्यः। आयनदृक्कर्मसंस्कृतग्रहस्य मकरादितो विषुवांशान् ज्ञात्वा तेषु पूर्वकपाले नतकालः शोध्यः पश्चिमकपाले योज्यः। तत्काले लग्नस्य उदयविषुवांशा भवन्ति। पुनः सषड्भसूर्यस्य मेषादितो स्वदेशी-योदयविषुवांशाः साध्याः। तेषां लग्नविषुवांशानां च यदन्तरं षड्भक्तं रात्रिगतघटिका भवन्ति। अथ रात्रिगतग्रहोन्नतांशसाधनं ग्रहस्य अन्तर-कालं आनीय नतकालं साधयेत्। नतकालात् स्पष्टक्रान्तेश्च उन्नतांश-साधनं पूर्वोक्तवत् ज्ञेयम्।

## अथ लग्नसाधनम्—

दिनगतघटिकाः षड्गुणाः कार्याः सूर्यस्य स्वदेशीयोदयविषुवांशेषु योज्याः लग्नविषुवांशा भवन्ति। रात्रौ सषड्भसूर्यस्य विषुवांशेषु योज्याः। ते लग्नविषुवांशा भवन्ति। तेभ्यः पूर्ववत् लग्नं साध्यं लग्न-विषुवांशान् मकरादितो निरक्षविषुवांशान् प्रकल्प्य निरक्षलग्नं साध्यं तद्दशमं भवति।

## अथ दशमलग्नाद् दिनगत-रात्रिगत-साधनमाह—

दशमलग्नस्य मकरादितो निरक्षविषुवांशा ग्राह्याः। स्पष्टसूर्यस्य (च) मकरादितो निरक्षविषुवांशा ग्राह्याः। उभयोरन्तरांशाः षड्भक्ताः दिनरात्रिनतघटिका भवन्ति।

## दशमलग्नाल्लग्नसाधनम्—

क्रान्तिवृत्ते दशमलग्नांशं दत्वा तद्गतध्रुववृत्तस्य स्वक्षांशागता-होरात्रवृत्तस्य च यत्र सम्पातस्तदुपरिगतं कदम्बवृत्तं यत्र क्रान्तिवृत्ते लग्नं तत्र वित्रिभचिह्नं ज्ञेयम्। वित्रिभं राशित्रययुतं लग्नं भवति।

## अथ लग्नतो दशमानयनम्—

लग्नं त्रिभोनं कार्यं तत्क्रान्तिर्देयम् । तद्गतं कदम्बवृत्तं स्वाक्षांशागताहोरात्रवृत्ते यत्र लग्नं तच्चिह्नगतं ध्रुववृत्तं क्रान्तिवृत्ते यत्र लग्नं तत्र दशमलग्नम् ।

## अथ दशमलग्नयोर्ज्ञाने सति क्रान्तिवृत्तस्य प्रत्यंशमुन्नतांशानयनम्—

याम्योत्तरवृत्ते नाडीवलयात् लग्नांशं यथादिशं दत्वा तदग्रे पट्टी स्थाप्या। दशमनतांशान् केन्द्रात् पट्टिकायां विगणय्यैव दत्वा चिह्नं कार्यम्। तद्गतं ध्रुववृत्तं क्रान्तिवृत्तं कल्प्यम्। उत्तरध्रुवस्थानं लग्नं कल्पनीयं, दक्षिण ध्रुवस्थानं अस्तलग्नं कल्पनीयम्। यस्य क्रान्तिवृत्तांशस्य उन्नतांशाः साध्या भवन्ति सोंऽशः लग्नासन्नो भवति सप्तमासन्नो वा भवति विचार्य तदंश-लग्नयोरन्तरं तदंशसप्तयोर्वा, अन्तरं ग्राह्यम्। तस्यान्तरस्य कोटिमितानंशान् नाडीवलयाद्विगणय्यैव दत्वा तद्गतं अहोरात्रवृत्तं कल्पितं क्रान्तिवृत्ते यत्र लग्नं तत्र चिह्नं कृत्वा पट्टीं स्थापयेत्। केन्द्रचिह्नयोरन्तरे नतांशा भवन्ति। नवतिशुद्धा उन्नतांशा भवन्ति।

## अथ उन्नतांशेभ्यः अंशानयनम्—

पूर्ववत् क्रान्तिवृत्तां कल्पयित्वा नतांशान् केन्द्रात् पट्टिकायां दत्वा चिह्नं कार्यम्। तच्चिह्नं कल्पितक्रान्तिवृत्तो यत्र लगति तद्गतमहोरात्रवृत्तं अयनवृत्तो यत्र लगति तन्नाडीरेखयोर्मध्ये कोट्यंशाः भवन्ति। नवतिशुद्धाः स्वाभीष्टांशलग्नयोरन्तरं वा स्वाभीष्टांशसप्तमयोरन्तरं भवति। तदन्तरं लग्नासन्नं चेल्लग्ने शोध्यः सप्तमासन्नं चेत्सप्तमे शोध्यम्।

## अथ ग्रहात्, याम्योत्तरवृत्तपर्यन्तयोरन्तरकालः तस्माद्दिगंशोन्नतांशसाधनम्—

याम्योत्तरवृत्तो नाडीवृत्तादुत्तरतो अक्षांशान्दत्वा खमध्यचिह्नं कार्यं नाडीवृत्तो उपरित अन्तरकालं दत्वा तद्गतं ध्रुववृत्तं ग्राह्यम्। स्पष्टक्रान्त्यग्र (म) गतमहोरात्रवृत्तं तद्ध्रुववृत्तो यत्र लग्नं तत्र चिह्नं कार्यं, तच्चिह्नोपरि क्षितिजपट्टिका स्थाप्या। [1]पट्टीमपि चिह्नं कार्यं खमध्यपट्टि-

---

१. पट्यामिति भाव्यम्।

कान्तरे ये अंशास्तान् निरक्षक्षितिजाद्दत्वा तदग्रे पट्टीं संस्थाप्य तद्गतमहोरात्रवृत्तं याम्योत्तरवृत्ते यत्र लग्नं तन्नाडीवृत्तयोरन्तरे उन्नतांशाः ज्ञेयाः। चिह्नगतं ध्रुववृत्तं नाडीवृत्ते यत्र लग्नं तच्चिह्नं याम्योत्तरवृत्तमध्ये दिगंशा ज्ञेयाः। पुनः पट्टीं खमध्ये स्थाप्या पूर्वकृतं ध्रुववृत्तचिह्नं खमध्यरेखातः उत्तरं चेद् दिगंशा उत्तरा ज्ञेयाः। दक्षिणं चेद्दक्षिणा ज्ञेयाः।

## अथोन्नतांशेभ्यः दिगंशसाधनम्—

यन्त्रपरपार्श्वे निरक्षक्षितिजरेखायां पट्टिका स्थाप्याः नाडीवलयात् उन्नतांशान् दत्वा तदग्रे तिर्यक्पट्टी स्थाप्या। पुनः पट्टीं खमध्ये स्थाप्या। अहोरात्ररेखा तिर्यक् पट्यां, यत्र लग्ना तत्र तिर्यक्पट्यां चिह्नं कार्यम्। पुनः पट्टीं निरक्षक्षितिजे (सं) स्थाप्य तिर्यक्पट्टीचिह्नं यन्त्रे यत्र लगति तत्र चिह्नं कार्यं, तद्गतं ध्रुववृत्तं नाडीवृत्ते यत्र लग्नं तत्र चिह्नं कार्यम्। पुनः पट्टीं नाडीवृत्ते (सं) स्थाप्य तिर्यक्पट्टीचिह्ने नेया। नाडीवलयात् तिर्यक् पट्यग्रपर्यन्तं याम्योत्तरवृत्ते दिगंशा ज्ञेयाः। तिर्यक्पट्टीकेन्द्रादधोगता चेद् अधो भागादंशाः गणनीयाः ते अंशाः निरक्षक्षितिजादूर्ध्वं गृहीताश्चेत् उत्तरा भवन्ति। अधोगृहीता चेद्याम्या भवन्ति।

## अथ दिगंशेभ्यः उन्नतांशसाधनम्—

दिगंशा नवतिशुद्धाः कार्याः। ते अंशा नाडीवलये दत्वा तद्गतं ध्रुववृत्तं ग्राह्यम्। नाडीवलयात् उन्नतांशान् दत्वा तद्गतमहोरात्रवृत्तं ध्रुववृत्ते यत्र लग्नं तत्र चिह्नं कार्यं पट्टी निरक्षक्षितिजे स्थाप्या। तच्चिह्नं यस्याग्रस्य समीपे भवति तदग्रं चिह्ने स्थाप्यम्। तच्चिह्नं पट्टिकायां यत्र लगति तत्र चिह्नं कार्यं, निरक्षक्षितिजपट्टिकाग्रयोर्मध्ये यावन्तोऽशास्तावन्तोऽशाः खमध्यतो ग्राह्याः। दिगंशा दक्षिणाश्चेद्दक्षिणतो ग्राह्याः। उदक्चेत् उत्तरतो ग्राह्याः। तत्र पट्टिकाग्रं स्थाप्यम्। पट्टिस्थितचिह्नगतं ध्रुववृत्तं नाडीवृत्ते यत्र लग्नं तच्चिह्नयाम्योत्तरवृत्तयोर्मध्ये नतकालो ज्ञेयः। तच्चिह्नगतमहोरात्रवृत्तं यत्र याम्योत्तरवृत्ते लग्नं तच्चिह्ननाडीवृत्तयोर्मध्ये क्रान्त्यंशाः ज्ञेयाः।

## अथाभीष्टनगरादन्यनगरं कस्यां दिशि वर्त्तते तज्ज्ञानमाह—

अन्यनगराक्षांशान्स्पष्टक्रान्त्यंशान्प्रकल्प्य देशान्तरांशान् अन्तरकालं

प्रकल्प्य स्पष्टक्रान्तिनतकालज्ञानेन यथापूर्वं दिक्ज्ञानकृतमस्ति। एवं अत्रापि तन्नगरस्य दिक् ज्ञेया। नतांशापि ज्ञेया। नतांशान् षष्ट्या सङ्गुण्य कोंशा [ कलांशा ] भवन्ति।

### अथ अभीष्टग्रहयोरन्तरचापज्ञानमाह—

उभयोर्ग्रहयोरन्तरांशा ग्राह्याः। अन्तरांशाः १८० भार्द्धाधिकास्तदा १८० भार्द्धांशशुद्धाः कार्याः। तानंशान् नाडीवृत्ते याम्योत्तरवृत्ताद्विगणय्यैव दत्वा तद्गतं ध्रुववृत्तं ज्ञेयं अधिकध्रुवकस्य ग्रहस्य शरांशान् नाडीवृत्तात् यथादिशं दत्वा तद्गतमहोरात्रवृत्तं ध्रुववृत्ते यत्र लग्नं तत्र चिह्नं कार्यम्। द्वितीयग्रहस्य शरांशान् नाडीवृत्ताद् दत्वा खमध्यचिह्नं कल्प्यं ततः पूर्वोक्तप्रकारेण अन्तरचापं ज्ञेयम्।

### अथाभीष्टनगरे नतकालज्ञाने सति अन्यनगरे नतकालज्ञानमाह—

स्वदेशे नतकालं ज्ञात्वा तन्मध्ये देशान्तरांशाः शोध्याः, नतकालस्य अन्यनगरस्यैकदिक्त्वे, भिन्नदिक्त्वे तु योगः कार्यः। तद्देशीय नतकालो भवति। तद्देशीय दिनार्द्धात् शुद्धउन्नतकालो भवति।

### अथोन्नतांशेभ्यः छायाज्ञानं छायात उन्नतांशज्ञानम्—

पट्ट्या एकमग्रं उन्नतांशोपरि दत्वा द्वितीयमग्रं यत्र लगति तत्र छाया गणयित्वा ग्राह्याः। एवमेव अभीष्टछायाग्रे पट्टीं स्थापयित्वा द्वितीयमग्रं यत्र लगति तत्रोन्नतांशा ग्राह्याः।

### अथ एकवर्षस्य लग्नज्ञाने सति द्वितीयादिवर्षाणां लग्नमाह—

यावन्ति वर्षाण्यभीष्टानि नगाष्ट ८७ गुणितानि कार्याणि। ते विषुवांशाः भवन्ति। ज्ञातलग्नविषुवांशेषु योज्याः। अभीष्टवर्षलग्नस्य विषुवांशा भवन्ति। तेभ्यः लग्नं साध्यम्।

### अथ स्वदेशलग्नज्ञानात्, अन्यदेशलग्नज्ञानमाह—

देशान्तरांशान् स्वलग्नविषुवांशान् ( शेषु ) संयोज्य लग्नं साध्यम्। यदि अन्यदेशः स्वपूर्वतो भवति। यदि पश्चिमतस्तदा अन्तरं कृत्वा लग्नं साध्यम्।

इति सर्वदेशीयजरकालीयन्त्रम्।

## अथ त्रिप्रश्नाध्यायो निरूप्यते ।

शिलातलादौ जलवत्समाने वा वज्रलेपे सुसमानभूमौ ।
कृत्वा समं [1]मण्डलमस्य केन्द्रे शङ्कुं निवेश्याथ विभां प्रपश्येत् ॥ १ ॥
भायाः प्रवेशस्य च यत्र चिह्नं तत्राऽपरा निर्गमनस्य पूर्वा ।
एवं द्वितीयेऽपि दिने विधेयं पूर्वाख्यचिह्नन्तु तदन्तरे यत् ॥ २ ॥
भावेशनिर्वेशघटीप्रमाणान्तरेण निघ्नं खरसैर्विभक्तम् ।
फलेन पूर्वा चलितायनाशां पूर्वाख्यचिह्नं स्फुटमत्र विन्द्यात् ॥ ३ ॥
ततः समस्ता ककुभः प्रसाध्या मत्स्यादिना [2]प्रागपरसूत्रकं च ।
याम्योत्तरं चक्रकलास्तथैव कार्याः सुधीभिर्निपुणैः कलाज्ञैः ॥ ४ ॥
केन्द्रस्थशङ्कोर्दिनमध्यजाभा तुलाजसंस्थे तरणौ स्वदेशे ।
पलप्रभा स्यात्तु तदीयकर्णो भावर्गयुक् शङ्कुकृतेर्हि मूलम् ॥ ५ ॥

## अथ श्लोकपञ्चकस्य व्याख्या ।

शिलातलादिति । जलवत्समीकृते शिलातलादौ वा वज्रलेपे सुधादिलेपैः समीकृते भूभागे समानं वर्तुलं मण्डलं कृत्वा अस्य केन्द्रे शङ्कुं संस्थाप्य छायां पश्येत ॥ १ ॥

भायाः प्रवेशस्य चेति । भायाः छायायाः प्रवेशस्य यत्र चिह्नं सा अपरा पश्चिमा दिक्, भायाः निर्गमनस्य यत्र चिह्नं तत्र पूर्वा, एवं द्वितीयेऽपि दिने पूर्वापराख्यचिह्नं कर्तव्यम् । पूर्वदिनपूर्वचिह्नद्वितीयदिनपूर्वचिह्नयोरन्तरं यवलिक्षादिप्रमाणं यत् ॥ २२ ॥

भावेशनिर्वेशेति । तद् भावेश—निर्वेशघटीप्रमाणान्तरेण छाया प्रवेशनिर्गमघटीमानान्तरेण गुणितं षष्टिभक्तं यल्लब्धं फलं तत्प्रमाणेन अयनाशां पूर्वा चलिता कार्या । तत्र स्पष्टं चिह्नं विन्द्याज्जानीयात् ॥ ३ ॥

ततः समस्ता इति । ततस्तदनन्तरं समस्ताः ककुभः दिशः मत्स्यादिना प्रसाध्याः । तासामपि चिह्नानि कार्याणि । पूर्वापरं याम्योत्तरं च देयम् । कलाज्ञैः निपुणैः सुधीभिस्तथैव चक्रकला अङ्क्याः ॥ ४ ॥

---

१. मण्डालमस्थ इति क पुस्तके पाठः ।

२. प्राक् पर इति क पुस्तके पाठः ।

केन्द्रस्थशङ्कोरिति। सायनतुला--मेषस्थे सूर्ये पूर्वोक्तवृत्तकेन्द्रस्थितशङ्को मध्याह्ने या छाया आयाति सा स्वदेशे अङ्गुलाया पलप्रभा स्यात्। तु परं शङ्कुवर्गः छायावर्गयुक्तः अस्य मूलं तदीयकर्णः पलकर्णः स्यात् ॥ ५ ॥

## अथ क्रान्त्यक्षांशज्ञानार्थं याम्योत्तरयन्त्रमुच्यते।

श्लक्ष्णं दृढं धातुमयं सुवृत्तं शताङ्गुलव्यासयुतं समानम्।
तथै (व) पञ्चाङ्गुलपिण्डयुक्तं कृत्वा तदन्तस्त्वपरन्ततोऽल्पम् ॥ १ ॥
अन्तर्विलग्नं भ्रमति प्रयुक्तं तथाक्षयुग्मेन सरन्ध्रकेण।
षड्भान्तरस्थेन युतं प्रकुर्यात्तद्वृत्तयुग्मं भकलाङ्कितञ्च ॥ २ ॥
एवं हि याम्योत्तर नाम यन्त्रं भूमौ समायां [1]कुकुभाङ्कितायाम्।
याम्योत्तरस्थं रथचक्रसंस्थं दृढं च दिक्चिह्नयुतं विदध्यात् ॥ ३ ॥
मध्याह्नसंस्थे तरणौ समाना यन्त्रप्रभा चोभयपार्श्वयोर्यदा।
वृत्तं द्वितीयं परिचालनीयं यथा विशेच्छिद्रयुगेऽर्कतेजः ॥ ४ ॥
छिद्रोन्मुखं चिह्नमतः प्रकुर्यात्तत्स्वान्तरालं नतभागकाः स्युः।
दिने दिने तास्तु तथा दिनस्य मध्ये नतांशान्विलिखेद्विदित्वा ॥५॥
एवं मृगादौ परमोन्नतांशास्तथैवकीटादिगतान् विदित्वा।
एकान्यदिक्त्वे तु तदन्तरैक्यं कृत्वा तदर्द्धे परमापमांशाः ॥ ६ ॥
मृगोन्नतांशाः परमापमांशैर्युक्ताः दिनार्द्धे भवतीह लम्बः।
तदूनखाङ्काः पलभागकाः स्युः जीवे तदीये विदधीत धीमान् ॥ ७ ॥

क्रान्त्यक्षांशज्ञानन्तु पूर्वोक्तभित्तियन्त्रेणापि जायते। तथापि पूर्वाचार्यैः उक्तत्वादिदमपि याम्योत्तरयन्त्रमुक्तम्। श्लक्ष्णं दृढमिति ॥ १ ॥

श्लक्ष्णं दृढं शताङ्गुलव्यासं पञ्चाङ्गुलपिण्डं समानं धातुमयं वृत्तं कार्यं तु परं तदन्तस्तन्मध्ये अपरमन्यद्वृत्तं धातुमयं तत अल्पमन्तर्विलग्नं सत्केनापि प्रयुक्तं भ्रमति तथा सरन्ध्रेण अक्षयुग्मेन षड्भान्तरस्थेन युक्तं प्रकुर्यात् च पुनः तद्वृत्तयुग्मं चक्रकलाङ्कितं च कुर्यात् ॥ २ ॥

अमुना प्रकारेण याम्योत्तरनामयन्त्रं कृत्वा समायां भुवि दिक् साधनं कृत्वा रथचक्रवद् याम्योत्तरस्थं दिक्चिह्नाङ्कितं कृत्वा स्थापयेत् ॥ ३ ॥

[1] ककुवं किता—इति क पुस्तके पाठः।

मध्याह्नसंस्थ इति । तरणौ सूर्ये मध्याह्नसंस्थे सति यन्त्रप्रभा यन्त्रच्छाया उभयपार्श्वयोः यदा समाना स्यात् तदा द्वितीयवृत्तं तथा परिचालनीयं यथा अर्कतेजः छिद्रयुगे छिद्रद्वये विशेत् प्रविशेत ॥ ४ ॥

छिद्रोन्मुख इति । छिद्रोन्मुखं छिद्रसम्मुखं चिह्नं कुर्यात् तत्खान्तरालं तत् चिह्नं खं खमध्यः अनयोरन्तरालं अन्तरं नतभागकाः नतांशाः स्युः । दिने दिने तान् नतभागकान् तथा विलोक्य दिनस्य मध्ये विदित्वा धीमान् तान् विलिखेत् ॥ ५ ॥

एवमिति । एवमनुना प्रकारेण मृगादौ कर्कादौ च परमान् नतांशान् विदित्वा द्वयोः एकदिशि अन्तरं भिन्नदिशि योगं कृत्वा तदर्द्धं परमापमांशाः स्युः ॥ ६ ॥

मृगोन्नतांशा इति । मृगोन्नतांशाः परमापमांशैर्युता इह लम्बाः स्वदेशीयलम्बांशाः स्युः । तदूनखाङ्काः लम्बांशोननवतिः पलभागकाः स्युः । धीमान् तदीये जीवे विदधीत कुर्यात् ॥ ७ ॥

## अथ विषुवसङ्क्रान्तिज्ञानार्थं नाडीवलययन्त्रमुच्यते ।

एवं ( हि ) नाडीवलयाख्ययन्त्रं पूर्वापरस्थं ध्रुवसम्मुखं च ।
आधारयुग्मेन दृढं निधाय प्रद्योतनं मेषगतं प्रतीच्छेत् ॥ १ ॥
वृत्तस्य भा वृत्तगता समाना प्रान्तात्समानान्तरगा यदा स्यात् ।
तदा रवेः सङ्क्रमणं प्रजातं मेषादि जूकादि गतस्य वेद्यम् ॥२॥
दिनादिकं तद् दिनपाब्दवेशे द्वितीयवर्षेऽपि पुनः प्रसाध्यम् ।
तदन्तरं वर्षदिवागणः स्यात्तद्भक्तचक्रं रविजा गतिः स्यात् ॥ ३ ॥

अथ श्लोकत्रयस्य व्याख्या । एवं हीति । एवं पूर्वोक्तप्रकारेण याम्योत्तरयन्त्रवत् नाडीवलयाख्ययन्त्रं पूर्वापरस्थं ध्रुवसम्मुखं आधारद्वयेन दृढं निधाय स्थापयित्वा मेषगतं प्रद्योतनं प्रतीच्छेत् प्रतीक्षां कुर्यात् ॥ १ ॥

वृत्तस्य भा इति । वृत्तस्य छाया वृत्तगता समाना वृत्तप्रान्तात्समानान्तरगा यदा स्यात्तदा रवेः सङ्क्रमणं जातं मेषादि तुलादिगतस्य वेद्यं ज्ञेयम् ॥ २ ॥

दिनादिकमिति । दिनपाब्दवेशे सूर्यवर्षप्रवेशे दिनादिकं वारादिकं साध्यम् । एवं द्वितीयवर्षेऽपि वाराद्यं साध्यम् । द्वयोरन्तरं कार्यं तदन्तरं

वर्षगणः स्यात् । तेन दिनगणेन भक्तं चक्रं [1]रविजा गतिः स्यात [2]प्रतिदिवसीया रविगतिः स्यात् ॥ ३ ॥

## अथ दृग्गोलबन्धनम् ।

खगोलवृत्तैः सहितो भगोलो हि भवेदिह ।
दृग्गोलस्तं शलाकाभिः धातुजाभिश्च कारयेत ॥ १ ॥
पूर्वापरं च याम्योदग् वलयं क्षितिजं तथा ।
दृग्वृत्तं कोणवृत्ते द्वे खगोलोऽयं स्मृतो बुधैः ॥ २ ॥
[3]याम्योत्तर-क्षितिजयो सम्पातः समसंज्ञकः ।
समचिह्नादक्षभागैः सौम्यात्स्यादुत्तरध्रुवः ।
ऊर्ध्वं तथा याम्यसंज्ञादधः स्याद् दक्षिणः ध्रुवः ॥ ३ ॥
ध्रुवात्खाङ्कांशकैः ९० वृत्तं निरक्षे सममण्डलम् ।
तदेव नाडीवलयं विषुवाभिधमण्डलम ॥ ४ ॥
तद् याम्योत्तरसम्पातात् खाङ्कभागैस्तु यद् भवेत् ।
वृत्तं निरक्षक्षितिजं तदेवोन्मण्डलं भवेत् ॥ ५ ॥
समोन्मण्डलभूजानां भवेतां यत्र सङ्गमो ।
पूर्वापरौ [4]स्वस्वस्तिकाख्यौ ज्ञेयौ गोलविचक्षणैः ॥ ६ ॥
ध्रुवात्परापमांशैस्तु कदम्बभ्रमवृत्तकम् ।
तत्पालितः खाङ्कभागैः वृत्तं स्याद् राशिमण्डलम् ॥ ७ ॥
तदेवापमवृत्तं स्यात क्रान्तिवृत्तं तदेव हि ।
तन्नाडीवृत्तसम्पाताद् भवेदायनमण्डलम् ॥ ८ ॥
क्रान्तिनाडीवलयोः यत्र [5]स्यातपरमान्तरम् ।
परक्रान्तिमितं तत्स्यान्नैकरूपं कदाचन ॥ ९ ॥

---

१. रविः या इति क पुस्तके पाठः ।
२. प्रतिदिवसी रवि या ग—इति क पुस्तके पाठः ।
३. याम्यो—इति क पुस्तके पाठः ।
४. खस्वास्ति—इति क पुस्तके पाठः ।
५. तत्र इति क पुस्तके पाठः ।

क्रान्तिकोट्यंशवृत्तानि द्युनिशाख्यानि कारयेत् ।
ध्रुवात् तथा कदम्बात्तु शरकोट्युद्भवानि च ॥ १० ॥

ऊर्ध्वाधः स्वस्तिके लग्नं चलं दृङ्मण्डलं तथा ।
पूर्वापरस्वस्तिकोत्थं वृत्तं स्याच्चलवृत्तकम् ॥ ११ ॥

त्रिभोनलग्नदृग्वृत्तं तत्स्याद् दृक्क्षेपमण्डलम् ।
तज्ज्ये नतोन्नतज्ये च स्यातां दृक्क्षेपदृग्गती ॥ १२ ॥

वृत्ते याम्योत्तरे खात्तु नाडिकावलयावधि ।
पलांशास्तज्जकोट्यंशा लम्बांशाः दक्षिणाः सदा ॥ १३ ॥

ध्रुववृत्ते क्रान्तिवृत्तनाडिकावलयान्तरम् ।
क्रान्तिः सौम्या च याम्या स्यात्कदम्बाख्ये परा स्मृता ॥ १४ ॥

याम्योत्तराख्यवृत्ते तु क्रान्तिरक्षांशसंस्कृता ।
नतांशकाः खमध्यात्तो स्युर्भूजादुन्नतांशकाः ॥ १५ ॥

तत्सक्तं वलयं प्रोक्तं समचिह्नाख्यमण्डलम् ।
तत्राग्रा विषुवद्वृत्ताद् ग्रहबिम्बावधि स्मृता ।
समवृत्ताद् भुजांशाश्च ज्ञेया गणितकोविदैः ॥ १७ ॥

उद्वृत्तभूजवृत्तान्तश्चरं स्याद्युनिशाभिधे ।
भूजयाम्योरान्तस्थं तत्रैव स्यादिनार्द्धकम् ॥ १८ ॥

दृग्वृत्तं ग्रहबिम्बस्य क्षितिजे यत्र सङ्गतम् ।
तच्चिह्नस्वस्तिकान्तः स्युर्दर्भाजवृत्ते दिगंशकाः ॥ १६ ॥

अग्रा तुल्या दिगंशाः स्युर्लग्नजा वित्रिभस्य तु ।
अग्रा कोट्यंशकैस्तुल्यास्तावन्तः सत्रिभस्य च ॥ २० ॥

पूर्वापरस्वस्तिकयोर्बद्धं सूत्रन्तु यद् भवेत् ।
पूर्वापरन्तु तद् ज्ञेयं याम्योदक् स्याद् ध्रुवाभिधम् ॥ २१ ॥

द्युरात्रकुजसम्पातसूत्रं स्यादुदयास्तकम् ।
समाख्यचिह्नयोर्बद्धं समसूत्रं तदुच्यते ॥ २२ ॥

ऊर्ध्वाधः स्वस्तिके लग्नं ऊर्ध्वसूत्रं तदुच्यते ।
एवं विपलजोर्ध्वाधः सूत्रं कार्यं विचक्षणैः ॥ २३ ॥

नक्रकीटाद्ययोर्बद्धं सूत्रं स्यादपमण्डले ।
निरक्षक्षितिजे बद्धं निरक्षास्तोदयाभिधम् ॥ २४ ॥
याम्योत्तरद्युरात्राणां वृत्तानां यत्र सङ्गतिः ।
यत्र यद् विनिबद्धन्तु सूत्रं द्युज्याभिधं भवेत् ॥ २५ ॥
[1]नतांशजीवा दृग्ज्या स्यादुन्नतज्या नरः स्मृतः ।
अग्राग्रकाच्छङ्कुमूलं यावच्छङ्कुतलं स्मृतम् ॥ २६ ॥
अग्रनृतलसंस्काराद् याम्यः सौम्यो भुजो भवेत् ।
पूर्वापराख्यसूत्रात्तु कोटिः पूर्वापरे स्मृता ॥ २७ ॥
मेषसम्पाततो जूकसम्पातावधिकः स्मृतः ।
सौम्यगोलो राशिषट्कं याम्यगोलस्तुलादिकः ॥ २८ ॥
सौम्यायनं नक्रमुखात्कीटाद्याद्दक्षिणायनम् ।
पूर्वापराख्यसम्पातलग्नं वृत्तं चलाभिधम् ॥ २९ ॥
मध्ये समन्ताद् गोलस्य भूगोलस्त्वीश्वरेच्छया ।
बिभ्राणो भगवच्छक्तिमचलस्तिष्ठति ध्रुवम् ॥ ३० ॥
अर्द्धाधिको भूमिदेशो जलमग्नोऽस्ति सर्वदा ।
भूसक्तो जलगोलोऽस्ति तदूर्ध्वं वह्निगोलकः ॥ ३१ ॥
[2]तदूर्ध्वं मारुतो गोलस्तदूर्ध्वं गोलकाः क्रमात् ।
चन्द्रसौम्यास्फुजित्सूर्यः भूजेज्यरविजन्मनाम् ॥ ३२ ॥
भानां तदूर्ध्वं गोलः स्यादिति पूर्वे जगुर्बुधाः ।
भूमौ देशस्थितिश्चैव ज्ञेया शास्त्रान्तराद् बुधैः ॥ ३३ ॥
मिथस्तिर्यक्स्थयोर्यत्र सम्पातो वृत्तयोर्भवेत् ।
तत्रोत्पन्नास्तु ये कोणाः समसंज्ञा बुधैः स्मृताः ॥ ३४ ॥

## अथ विषुवांशक्षेत्रम् ।

त्रिज्यावृत्तत्रयोत्पन्नं त्रिभुजं यच्च जायते ।
तत्रैकः, समकोणश्चेच्चापजात्यं भवेदिह ॥ ३५ ॥
गोलसन्धेः क्रान्तिवृत्ते भुजांशाः श्रवणो भवेत् ।
विषुवांशास्तु कोटिः स्यात् क्रान्ति ध्रौवे भुजस्तथा ॥ ३६ ॥

---

१. नितांशजीवो इति क पुस्तके पाठः ।

२. इत्यारभ्य ख पुस्तके पाठो दृश्यते ।

गोलसन्धेस्त्रिभान्ते तु कर्णः कोत्र्यंशकैः समाः ।
परक्रान्त्यंशका बाहुश्चापत्र्यस्रं त्रिबाहुकम् ॥ ३७ ॥
नातश्चापानुपातो वै भिन्नजातित्वतो भवेत् ।
तस्माज्जीवानुपातौ वै कथितः पूर्वसूरिभिः ॥ ३८ ॥
पराक्रान्तिज्यका बाहुस्त्रिज्या कर्णस्तयोस्तु यत् ।
कृत्यन्तरपदं कोटिः परालपद्युज्यका भवेत् ॥ ३९ ॥
इष्टापमज्यका बाहुः भुजांशज्या श्रवो भवेत् ।
तद्वर्गयोः पदं कोटिः भुजमूलश्रवोऽन्तरम् ॥ ४० ॥
द्युज्याग्रस्थितितो नैव चापं सञ्जायते क्वचित् ।
अतस्त्रिज्यानुपातेन तच्चापं विषुवांशकाः ॥ ४१ ॥
विषुवांशमिदं क्षेत्रं गोलजात्ये प्रयोजयेत् ।
सम्पातं गोलसन्धिं च कल्पयेच्चायनं त्रिभे ॥ ४२ ॥

इति विषुवांशक्षेत्रम् ।

## अथ छायासाधनम् ।

अथ छाया द्विधा प्रोक्ता प्रथमापरभेदतः ।
प्रथमा च विलोमाख्या द्वितीया सरलाभिधा ॥ १ ॥
प्रथमा भित्तिगा ज्ञेया द्वितीया भूमिगामिनी ।
इदं ( सार्द्धं ) पद्यं स्पष्टार्थम् ।

## अत्रोपपत्तिः

जलसमीकृतायां भूमौ शङ्कुः लम्बरूपः स्थाप्यः । अथवा दृग्वृत्तस्थ द्धिन्यां भित्तौ भूमिसमानान्तरितः शङ्कुः लम्बरूपः स्थाप्यः, रविबिम्ब केन्द्रातिर्यक्शङ्क्वग्रस्पर्शभूगतसूत्रस्य ( [1]शङ्कुमूलस्य ) चान्तरं छायो च्यते । एवं भित्तावपि ज्ञेयम् । या भित्तौ छाया भवति सा प्रथमाख्या ( [2]विलोमाख्या च ) ज्ञेया । या भूमौ छाया भवति द्वितीयाख्या सरलाख्या च । शङ्क्वग्रछायाग्रयोरन्तरसूत्रं छायाकर्णः । सूर्योदये भित्तिगतशङ्कोः छायाभावः । यथा यथा रवेरुन्नतांशानां वृद्धिर्भवति तथा

१. कोष्ठान्तर्गतपाठो ख पुस्तके न दृश्यते ।
२. कोष्ठान्तर्गतोंऽशः ख पुस्तके नावलोक्यते ।

छायावृद्धिर्भवति। मध्याह्ने परमा भवति। अत एवेयं प्रथमा छायोच्यते। भूमिगतशङ्कोस्तु सूर्योदये परमा छाया भवति। यथा यथा रवेरुन्नतांशानां वृद्धिर्भवति तथा तथा छायापचयो भवति। खमध्यगेऽर्के छायाभावः। भित्तिगतशङ्कुः षष्टिविभागात्मकः कल्पितः। भूमिगतशङ्कुः द्वादशाङ्गुलः अथवा सप्ताङ्गुलः पादछायात्मकः।

अथ शङ्क्वग्रं केन्द्रं कृत्वा शङ्कुमितव्यासार्द्धेन [1]यद्वृत्तं भवति तत्पालिगतशङ्कुमूला छाया भुजरूपा भवति। तदग्रशङ्क्वग्रान्तरे छाया-कर्णः। अस्मिन् त्रिभुजे शङ्कुमूलकर्णसूत्रान्तरे यद् वृत्तखण्डं तस्य चापस्येयं छाया जाता। अत्र प्रथमा छायोन्नतांशानां द्वितीया छाया तन्नतांशानां छाया भवति। यदा प्रथमा छाया दशांशचापस्य भवति तदा द्वितीया अशीत्यंशचापस्य भवति। एवं परस्परं यस्य चापस्य ज्या त्रिज्या गुणा तच्चापकोटिज्या भक्ता फलं तच्चापस्य प्रथमा छाया भवति। पुनर्यस्य चापस्य कोटिज्या षष्टिगुणा भुजज्या भक्ता तस्य चापस्य द्वितीया छाया भवति। यत्र छायाशब्दस्तत्र प्रथमा छाया ज्ञेया। पुनः भुजज्या भुजः कोटिज्या कोटिः त्रिज्या कर्णः, इत्यस्य त्रिभुजस्य शङ्कुछायाकर्णात्मकं क्षेत्रं सजातीयम्।

अथ कश्चनाभीष्टाङ्क [2]अभीष्टचापछायया गुणितः त्रिज्या भक्तः यत्फलं लभ्यते तत्त्रिज्या[3]गुणिताभीष्टाङ्कस्य तच्चाप-कोटि-छायाभक्तस्य फलेन तुल्यं भवति। तस्माद्यद्ये ( क× ) का छाया ज्ञातास्ति तदा त्रिज्यावर्गे ज्ञातचापछायाभक्ते द्वितीया छाया भवति। षष्टिविभागात्मकशङ्कुछाया पञ्चभक्ता द्वादशाङ्गुलछाया भवति।

इति छायाधिकारः।

## अथ क्रान्तिसाधनाधिकारः।

तत्र प्रथमं क्रान्तिलक्षणमुच्यते।

क्रान्ति-नाडीवलयोरन्तरं क्रान्तिरुच्यते।
प्रथमापरभेदेन द्विविधा सा प्रकीर्त्तिता ॥ १ ॥

---

१. द्वेषपद् इति क पुस्तके पाठः।

२. भीष्टं चापं छाययां इति पु० द्व० पाठः।

३. गणिताभीष्टं कस्य इति पुस्तक द्व० पाठः।

प्रथमा ध्रुववृत्तस्था कदम्बवलये परा ।
परमास्त्वयने वृत्तो प्राप्तेयं विविधा बुधैः ॥ २ ॥
पूर्वाचार्यैः क्रान्तिभागाः जिनसंख्याः प्रकीर्त्तिताः ।
तथा वतलमजूषेन देशे जूनानसंज्ञके ॥ ३ ॥
भागस्त्र्यक्षिमिताः क्रान्तिः कला भूवाणसम्मिताः । (२३।५१)
फामामूनामकेनापि त्र्यक्षिभागाः कलास्तथा । (२३।३५) ॥४॥
पञ्चत्रिसम्मिता क्रान्तिर्निश्चितैवं सुबुद्धिना ।
उलूकवेगसंज्ञेन पुरे समरकन्दके ॥ ५ ॥
क्रान्तिराप्ता त्र्यक्षिभागाः कलाभिः खाग्निभिर्युताः । (२३।३०)
एवं क्रान्तिःक्रमेणैव प्राप्ता वेधविशारदैः ॥ ६ ॥
राज्ञा श्रीजयसिंहेन प्राप्ता जयपुरे तथा ।
त्र्यक्षिभागमिता क्रान्तिः वस्वक्षिकलिकायुता ॥ ७ ॥ (२३।२८)
ध्रुववृत्ते खेटभोगनाडीवृत्तान्तरं तु यत् ।
साद्यक्रान्तिः, तथा भोगात् कदम्बवलये परा ॥ ८ ॥
तथैव ग्रहबिम्बस्य नाडीवृत्तस्य यद्भ भवेत् ।
ध्रुववृत्तेऽन्तरं स्पष्टा क्रान्तिराद्या निरूपिता ॥ ९ ॥
बिम्बात्कदम्बवृत्ते तु नाडिकावलयावधि ।
स्पष्टान्यक्रान्तिरुक्तेयं पूर्वैर्यवनसूरिभिः ॥ १० ॥

## अथ इष्टक्रान्तिसाधनम् ।

दोर्ज्या परापमज्याघ्नी त्रिज्याप्ता फलजं धनुः ।
क्रान्तिराद्या गोलदिक् स्यादथ कोटेस्तु या भवेत् ॥ ११ ॥
विलोमा सा निगदिता क्रान्तिर्गणितकोविदैः ।
[1]विलोमक्रान्तिकोटिज्या भक्ता खेटस्य दोर्ज्यका ॥ १२ ॥
परमापक्रमज्याघ्नी तच्चापं त्वपमाः परः ।
भुजांशानान्तु या जीवा सा परक्रान्तिभागुणाः ॥ १३ ॥
त्रिज्या भक्ता भवेच्छाया तच्चापं वापमः परः ।
सत्रिभद्युज्यया भक्ता परात्पद्युज्यया हता ॥ १४ ॥

१. सत्रिभग्रहद्युज्या = विलोमक्रान्तिकोटिज्या ।

त्रिज्याफलधनुः शुद्धं नवतेर्वापमः परः ।
गोलदिक् त्वथ खेटस्य शरसंस्कारतस्त्वयम् ॥ १५ ॥
स्फुटान्यक्रान्तिसंज्ञः स्यात्तज्जीवा त्रिज्ययोद्धृता ।
सत्रिभद्युज्यया निघ्नी तच्चापं च स्फुटापमः ॥ १६ ॥

इति क्रान्त्यानयनप्रकारः ।

ध्रुववृत्ते क्रान्तिवृत्तस्थग्रहभोगचिह्न–नाडीवृत्तयोरन्तरं आद्यक्रान्तिः प्रथमक्रान्तिः स्यात् । कदम्बवृत्ते क्रान्तिवृत्तस्थग्रहभोगचिह्ननाडीवृत्तयोरन्तरं अन्यक्रान्तिः द्वितीयक्रान्तिः स्यात् । पदचतुष्टये भुजसमत्वे क्रान्तिस्तुल्यैव भवति । अतः [1]प्रथमपदे क्रान्तिसाधनमुक्तम्[2] ।

[3]पूर्वस्वस्तिकात्पश्चिमस्वस्तिकाद्वा नवत्यंशान्तरे यद् वृत्तं तदायनवृत्तं कदम्बवृत्तं ध्रुववृत्तं तदेव भवति । आयनवृत्ते क्रान्तिवृत्त–नाडी ( वृत्त ) वलययोः यदन्तरं सा परमा क्रान्तिः । आर्षग्रन्थेषु चतुर्विंशत्यंशमिता परमाक्रान्तिरुक्ताऽस्ति । यवनैर्वेधेन बतलमजूषेन लब्धा २३।५१। पश्चात् फामामू नाम्ना लब्धा २३।३५। समरकन्दनगरे उलूकबेगेन लब्धा २३।३०। राज्ञा श्रीजयसिंहदेवेन जयपुरे वेधेन लब्धा क्रान्तिः २३।२८। इदानीमनया क्रान्त्या व्यवहारः ।

वेधप्रकारस्तैरुक्तः । कर्कादौ रविवेधेन परमोन्नतांशाः ज्ञातव्याः तथा मकरादौ रव्युन्नतांशाः ज्ञातव्याः । अनयोरन्तरार्द्ध परमक्रान्त्यंशाः भवन्ति । कर्कस्थे रवौ नतांशानां क्रान्त्यंशानां योगोऽक्षांशाः भवन्ति ।

## अथ इष्टक्रान्तिसाधनम् ।

भुजज्या परक्रान्तिज्यागुणा त्रिज्याभक्ता फलस्य चापं आद्यक्रान्तिः स्यात् खेटगोलदिक्का[4] भवति ।

---

१. प्रथमपद इति पुस्तके द्व० पाठः ।

२. मुक्तां इति पु० द्व० पाठः ।

३. स्वस्तिकद्वये यदि गोलसन्धिद्वयं स्यात्तदैव उक्तं समीचीनं भवितुमर्हति ।

४. गोलदिग् इति पु० द्व० पाठः ।

अथ कोटिज्या परक्रान्तिज्यागुणा त्रिज्याभक्ता फलस्य चापं विलोम-क्रान्तिः भवति ।

## अत्रोपपत्तिः




क्रान्तिवृत्तस्य, अब चापं राशित्रयमितमस्ति । अजं नाडीवलयस्य पदमस्ति । दहं अदचापस्य क्रान्तिरस्ति ।

अथानुपातः अब चापज्यया परमक्रान्तिज्या लभ्यते तदा अद[1] चापज्यया किमिति लब्धा क्रान्तिः (दह)।

## अथ अन्यक्रान्तिसाधनम् ।

ग्रहस्य भुजज्या परक्रान्तिज्यागुणा विलोमक्रान्तिकोटिज्याभक्ता फलस्य चापं अन्यक्रान्तिर्भवति ।

वा भुजांशानां ज्या परक्रान्तिछायागुणा त्रिज्याभक्ता फलस्य छाया-रूपस्य चापं वान्यापमो भवेत् ।

वा त्रिज्या परालपद्युज्याहृता सत्रिभद्युज्याभक्ता फलस्य चापं नवतेः शुद्धं वान्यक्रान्तिर्भवति ।

## अत्रोपपत्तिः




द्वितीयक्षेत्रेण

द-अ-ध-वं अयनवृत्तमस्ति । अ-ह-वं नाडीवलयं बं ध्रुवः दहधं क्रान्तिवृत्तं जं कदम्बः बतकं ध्रु० वृ० जतमं कदम्बवृत्तं तकं क्रान्तिः तमं अन्यक्रान्तिः नसं सत्रिभक्रान्तिः लसं सत्रिभक्रान्तिकोटिः ।

---

१. अव इति पु० द्व० पाठः ।

[1]अथानुपातः लसज्यया लमत्रिज्या प्राप्यते तदा कत संज्ञया प्रथम-क्रान्तिज्यया किमिति लब्धा तमज्या तच्चापमन्यक्रान्तिः । प्रथमक्रान्तिज्या स्वरूपन्तु दोर्ज्या परक्रान्तिज्यागुणा त्रिज्याभक्ता अत्र त्रिज्ययोर्गुणहरयो-स्तुल्यत्वान्नाशे कृते यथोक्तमुपपन्नम् ।

## अथ प्रकारान्तरेण अन्यक्रान्तिसाधनोपपत्तिः ।

तृतीयक्षेत्रेण

ह केन्द्रे अ व ज दं आयनवृत्तं कार्यम् । अज रेखा वद रेखा च कार्या । अजं क्रान्तिवृत्तस्य व्यासः । वदं नाडीवलयस्य व्यासः सः तपर्यन्तं वर्द्धनीयः । अतं परमक्रान्ति-छाया । लमं अन्य क्रान्तिछाया हलं दोर्ज्या ।

[2]अत्रानुपातः यदि अहेन अतं लभ्यते तदा हलेन किमिति लब्धं लमं ।

---

१. अत्रायमाशयः । सलम चापजात्य तथा तमक चापजात्ययोर्साजात्या दनुपातः $\frac{\text{लमज्या} \times \text{कतज्या}}{\text{लस ज्या}}$ = तमज्या । अत्र लसज्या = सत्रिभक्रा० कोज्या= सत्रिभद्युज्या । लम = त्रिज्या । कतज्या = आ० क्रा० ज्या ।

अतः तमज्या = $\frac{\text{त्रिज्या} \times \text{क्रा० ज्या,}}{\text{स० द्यु०}}$ । क्रा० ज्या = $\frac{\text{जि० ज्या} \times \text{भुजज्या}}{\text{त्रिज्या}}$

क्रान्तिज्यया उत्थापनेन तमज्या = $\frac{\text{त्रिज्या}}{\text{स० द्यु०}} \times \frac{\text{प० क्र० × भुज्या}}{\text{त्रिज्या}}$ = तमज्या=

अन्य क्रा० ज्या = $\frac{\text{प० क्रा० ज्या} \times \text{भुज्या}}{\text{स० द्युज्या}}$ उपपन्नम् ।

२. चापीय त्रि० ग० १ प्रतिज्ञानुमानेन कोणकोटिभयाभक्ता इत्यादिना एतद् सिद्ध्यति ।




चतुर्थक्षेत्रेण अस्याश्छायायाश्चापमन्यक्रान्तिर्भवति इत्युपपन्नम् ।

पुनः प्रकारान्तरेणान्यक्रान्तिसाधनोपपत्तिः ।

अधहं क्रान्तिवृत्तं अस्य कदम्बो जं अकहं नाडीवलयं अस्य ध्रुवो वं वजकधं आयनवृत्तं तसजलं कदम्बवृत्तं तमं अन्यक्रान्तिः मजं अन्यक्रान्तिकोटिः वलसनं सत्रिभध्रुववृत्तं नसं सत्रिभक्रान्तिः खलं सत्रिभक्रान्तिकोटिः । यदि सलज्यया लम त्रिज्या लभ्यते तदा कजज्यया (कि) मिति लब्धा जमज्या अस्याश्चापमन्यक्रान्तिकोटिः इयं नवतिशुद्धा अन्यक्रान्तिर्भवतीत्युपपन्नम् ।

## अथ स्पष्टक्रान्त्यानयनम् ।

अन्यक्रान्तिः शरसंस्कृता स्पष्टान्यक्रान्तिर्भवति । अस्याः ज्या सत्रिभद्युज्यागुणा त्रिज्याभक्ता फलं स्पष्टक्रान्तिज्या भवति । वा स्पष्टान्यक्रान्तिज्या परक्रान्तिकोटिज्या गुणा स्पष्टान्यक्रान्तिकोटिज्याभक्ता लब्धा स्पष्टा क्रान्तिज्या तच्चापं स्पष्टाक्रान्तिः । अनयोः प्रकारयोरुपपत्तिः द्वितीयचतुर्थक्षेत्राभ्यां ज्ञेया । यतस्तत्र आद्यक्रान्तिः भुजः अन्यक्रान्तिः कर्णः । अत्र स्पष्टक्रान्तिर्भुजः स्पष्टान्यक्रान्तिः कर्णः । तस्मादिदमपि क्षेत्रं तत्सजातीयमस्ति । शराभावे मध्यमक्रान्तिरेव स्पष्टा क्रान्तिः । मध्यमक्रान्त्यभावे शरतुल्यैव स्पष्टान्यक्रान्तिः । यदा ग्रहः आयनवृत्ते भवति तदा स्पष्टान्यक्रान्तिरेव स्पष्टा क्रान्तिः ।

## अथ प्रकारान्तरेण स्पष्टक्रान्त्यानयनम् ।

अथवा ग्रहकोटिज्या शरकोटिज्यकाहता ।
त्रिज्याप्ता फलजं चापं चलवृत्तगतं भवेत् ॥ १ ॥
तत्कोटिज्या हरो ज्ञेयः शरज्या त्रिज्यया हता ।
हरभक्ता फलस्यास्य चापमाद्यं शरांशकम् ॥ २ ॥

एतच्च परमक्रान्त्या संस्कृतं चापरं धनुः ।
इदमायनवृत्तस्थं तस्य ज्या हरसङ्गुणा ॥ ३ ॥
त्रिज्याप्राप्तधनुः स्पष्टा क्रान्तिः स्यात्परचापदिक् ॥
इदं सार्द्धं पद्यत्रयं सुगमार्थम् ।

अस्योपपत्तिः पञ्चमक्षेत्रेण




[1]अ-त-द-जं क्रान्तिवृत्तं [2]असनहजं नाडीवलयं अबवजं [3]चलवृत्तं धहदवं आयनवृत्तं धसबं ग्रहोपरिगतं ध्रुववृत्तं कनतबं शरवृत्तं अजौ गोलसन्धी धं ध्रुवस्थानं कं कदम्बः बं ग्रहबिम्बस्थानं तदं ग्रहकोटिः [4]कतं शरकोटिः अबं हरचापं वदं प्रथमचापं वहं द्वितीयचापं वस स्पष्टा क्रान्तिः इत्येवं सर्वमुपपन्नम्[5] ।

इति क्रान्तिसाधनम् ।

---

१. वजं इति क पुस्तक द्व० पाठः ।

२. अनसहजं इति पुस्तक द्व० पाठः ।

३. वलवृ—इति पुस्तक द्व० पाठः ।

४. कवं इति पुस्तक द्व० पाठः ।

५. अत्रायमाशयः—चा० त्रि० ग० ५ क्षेत्रानुमानेन दोर्ज्यकोटिज्ययोर्घाते,

इत्यादिना अ ब त चापचाल्ये $\frac{\text{भु० को० ज्या} \times \text{श० को० ज्या}}{\text{त्रि०}}$ = बवज्या =

हारकोज्या ज्या ( ९०–चा० ) हार । $\frac{\text{शर} \times \text{त्रि}}{\text{हार}}$ = वदज्या चापं आद्यशरांशः ।

प० क्रां० + शरांश ( कुत्रापि ऋणम् ) = वह विशिष्ट प० क्रां० । △अवस

△ अवहयोरनुपातेन विम्बीयक्रा० ज्या = बस– = $\frac{\text{पं० क्रां० ज्या} + \text{हार}}{\text{त्रि}}$ ।

## अथ अक्षक्षेत्राणि ।

अक्षज्यका दोः श्रवणस्त्रिभज्या लम्बज्यकाकोटिरिति प्रसिद्धम् ।
क्षेत्रं पलांशप्रभवेषु मुख्यं विद्येत्र मानार्थयशः सुखेषु ॥ १ ॥
पलप्रभा बाहुरिनाश्च कोटिः श्रवोऽक्षकर्णस्त्वपवर्त्तितं च ।
कुज्या भुजः स्यादपमज्यकाऽत्र कोटिस्त्रिबाहौ श्रवणोऽग्रका स्यात् ॥२॥
अग्राद्यखण्डं भवतीह कोटिः श्रवोऽपमज्या सम ना भुजोऽत्र ।
अग्राग्रखण्डं तु भुजः क्षितिज्या श्रवस्तथोद्वृत्तनरस्तु कोटिः ॥ ३ ॥
अग्रा भुजस्तद्धृतिरत्र कर्णस्तथैव कोटिः समवृत्तशङ्कुः ।
कुज्योनिता तद्धृतिरत्रकोटिर्भुजोपमज्या सम ना च कर्णः ॥ ४ ॥
अग्रादिखण्डन्तु भुजस्तु कोटिरुद्वृत्तशङ्कूनसमाख्यशङ्कुः ।
द्युज्योनिता तद्धृतिरत्रकर्णः क्षेत्राण्यमून्यक्षभवानि चाष्टौ ॥ ५ ॥
कोटिस्तथैवेष्टनरः श्रुतिः स्यादिष्टा हृतिः शङ्कुतलं भुजोऽत्र ।
ज्ञातौ भुजौ चैकभवौ यदा स्तोऽन्यक्षेत्रबाहुर्विदितस्तदा स्यात् ॥६॥

## अथोदाहरणम्—

अथापमज्या पलकर्णनिघ्नी स्यादग्रिका सूर्यहृता तथैव ।
क्रान्तिज्यकाक्षप्रभया विनिघ्नी सूर्योद्धृतोन्मण्डलशङ्कुरेव ॥ ७ ॥
अग्रा तथा द्वादशसङ्गुणा च पलप्रभाहृत्समशङ्कुमानम् ।
समाख्यशङ्कुः पलकर्णनिघ्नः सूर्योद्धृतस्तद्धृतिरत्रवेद्या ।
तथेष्टशङ्कुः पलभाविनिघ्नो रव्युद्धृतः शङ्कुतलं प्रदिष्टम् ॥ ८ ॥
शङ्कुस्त्वभीष्टः पलकर्णनिघ्नो रव्युद्धृतोऽभीष्टहृतिस्तथैव ।
इत्थं स्वबुद्ध्या गणितप्रकाराः बुधैर्विचिन्त्या बहवोऽनुपातात् ॥१०॥

## अथ विषुवांशसाधनम् ।

क्रान्तिज्यकावर्गविहीनितायाः दोर्ज्याकृतेर्मूलमवाप्यते यत् ।
त्रिज्यागुणं द्युज्यकया विभक्तं फलस्य चापं विषुवांशकाः स्युः ॥ १ ॥
कोटिज्यका भत्रयसिञ्जिनीघ्नी[1] द्युरात्रमौर्व्या विहृताप्तचापम् ।
खाङ्कच्युतं वा विषुवांशकाः स्युः प्रकारतोऽथ प्रवदामि सूक्ष्मम् ॥ २ ॥

---

१. नीघ्नी इति पु० द्व० पाठः ।

दोर्ज्या परालपद्युगुणेन निघ्नी स्वद्युज्ययाप्ता फलजं धनुर्यत्।
ते वा भवेयुः विषुवद्विभागा पुनः प्रकारान्तरतः प्रवक्ष्ये ॥ ३ ॥
[1]क्रान्त्यंशकाच्छप्रभया विनिघ्नी त्रिज्या परक्रान्तिभया विभक्ता।
विलब्धचापं विषुवांशकाः स्युस्त्वाद्ये पदे सायनखेचरश्चेत् ॥ ४ ॥
भार्द्धांशशुद्धास्तु पदे द्वितीये तृतीयपादे खगजेन्दुयुक्ताः।
भांशच्युतास्ते तु पदे तुरीये मेषादिकानां निजगोलसन्धेः ॥ ५ ॥

अथार्थः। क्रान्तिज्या दोर्ज्यवर्गान्तरपदं त्रिज्यागुणं द्युज्याभक्तं फलस्य चापं विषुवांशकाः स्युः ॥ १ ॥

वा ग्रहकोटिज्या त्रिज्यागुणा ग्रहद्युज्याभक्ता फलस्य चापं नवतिच्युतं विषुवांशकाः ॥ २ ॥

अथवा ग्रहदोर्ज्या परालपद्युज्यागुणा ग्रहद्युज्याभक्ता फलचापं विषुवांशकाः ॥ ३ ॥

अथवा ग्रहक्रान्त्यंशानां छाया त्रिज्यागुणा परक्रान्तिछायाभक्ता फलस्य चापं विषुवांशाः भवन्ति। प्रथमपदे एत एवोदयांशाः भवन्ति।

---

1. अत्रायमाशयः $\frac{\text{प० द्यु} \times \text{भु० ज्या}}{\text{द्यु०}}$ = वि० ज्या।

अत्र भुज्या = उत्थापनेन वि० ज्या = $\frac{\text{प० द्यु० ( त्रि०} \times \text{क्रा० ज्या )}}{\text{द्यु०} \times \text{प० क्रां० ज्या}}$ =

$\frac{\text{पद्यु} \times \text{क्रा० स्प०}}{\text{प० क्रा० ज्या}}$

अत्र उभयत्र हरभाज्ये प. द्यु. अनेन भक्ते त्रिज्यया गुणनेन च वि. ज्या=

$\frac{\text{क्रा० स्प०} \times \text{त्रि}}{\frac{\text{प० क्रा०} \times \text{त्रि०}}{\text{प० द्यु०}}} = \frac{\text{क्रा० ० स्प} \times \text{त्रि}}{\text{प० क्रा० स्प०}}$

उपपन्नम्।

द्वितीयेभार्द्धांशशुद्धाः । तृतीये भार्द्धांशयुताः । चतुर्थे भांशशुद्धा उदयांशाः भवन्ति ।

अत्रोपपत्तिः षष्ठक्षेत्रेण



कखगघं आयनवृत्तं तस्य केन्द्रं हं गोलसन्धिः खहघं क्रान्तिवृत्तं कहगं नाडीवलयं तस्य ध्रुवौ रुयौ यधतरुं ध्रुववृत्तं हतं उदयः हधं लग्नः तधं क्रान्तिः धयं क्रान्तिकोटिः तहध त्रिभुजं खधय त्रिभुजस्य सजातीयं खधय त्रिभुजं यतक[1] त्रिभुजस्य सजातीयं खगं परालपद्युज्या । धयज्यया खयज्या लभ्यते तदा धहज्यया किमिति लब्धं तहज्या अस्याश्चापमुदयांशाः ।

अथवा धयेन धखं लभ्यते तदा यतेन किमिति लब्धं कतं तन्नवति-शुद्धं हतं भवति ।

इत्युपपन्नम् ।

## अथ चरसाधनम् ।

निरक्षसंज्ञा ये देशास्तत्राभावश्चरस्य हि ।
दिनार्द्धं तत्र पञ्चेन्दुघटिकाभिर्मितं भवेत् ॥ १ ॥
यत्राक्षांशा साक्षदेशे परालपद्युज्यया समाः ।
नवत्यंशमितं तत्र देशे स्यात्परमं चरम् ॥ २ ॥
खाङ्कनाडीमितं तत्र दिनमानं परं भवेत् ।
देशादेतादृशाल्लङ्कापर्यन्तं येऽपि मध्यगाः ॥ ३ ॥
देशास्तेषु चरांशाश्च नवत्यूनाः भवन्ति हि ।
चतुर्थेऽपि पदेष्वंशाः ये येऽत्र स्युः समानकाः ॥ ४ ॥
तेषां क्रान्तिश्चरं चात्र तुल्यमेव भविष्यति ।
येषां चरं भवेत्साध्यमंशानां क्रान्तिमानतः ॥ ५ ॥

---

१. खतकं इति पुस्तक द्व० पाठः ।

अक्षांशछायया गुण्या त्रिज्याभक्ता फलस्य यत् ।
चापं चरांशा विज्ञेयास्त्वथ वक्ष्ये प्रकारतः ॥ ६ ॥
अभीष्टांशक्रान्तिजीवा त्रिज्याघ्नी लम्बजीवया ।
भक्ताप्तमग्रजीवा स्याच्चापमग्रा विभागकाः ॥ ७ ॥
तत्कोटिजीवा त्रिज्याघ्नी स्वाभीष्टद्युज्यया हृता ।
फलस्य चापकोटिश्च चरांशास्ते भवन्ति हि ॥ ८ ॥
वाग्रज्याक्षज्यया गुण्याऽभीष्टांशद्युज्यया हृता ।
यल्लब्धं तस्य यच्चापं चरांशास्ते भवन्ति हि ॥ ९ ॥
इष्टांशलङ्कोदयसिञ्जिनिघ्नी चरांशमौर्वीपरमाविभक्ता ।
त्रिभज्ययाप्तस्य धनुश्चरांशाः षड्भिर्विभक्ता घटिकादिकश्च ॥१०॥
चरन्तेन युतोनाश्च नाड्यः पञ्चेन्दुसम्मिताः ।
दिनार्द्धं गोलयोः सौम्ययाम्ययोरस्फुटं भवेत् ॥ ११ ॥
इदं द्वाभ्यां च गुणितं दिनमानं भवेत् किल ।
उदयार्कस्य विषुवद्भागाः षड्भयुतस्य च ॥ १२ ॥
तेषां यदन्तरं सूक्ष्मं दिनार्द्धं तद् भवेत् किल ।
चन्द्रादीनां ग्रहाणां च नक्षत्राणां तथैव च ॥ १३ ॥
स्पष्टक्रान्तिं विधायादौ चरं साध्यं ततो दिनम् ।

अथैतेषां श्लोकानां क्रमेण व्याख्या । निरक्षदेशे चराभावः दिनार्द्धं पञ्चदशघटी मितम् । साक्षदेशे तु [1]यत्राक्षांशाः परालपद्युज्यातुल्याः, तत्र परमं चरं नवत्यंशमितं परमदिनमानं षष्टिघट्यात्मकम् । एतादृशाद्

---

१. अस्यार्थः—$\dfrac{\text{अज्या} \times \text{क्रांज्या}}{\text{लं० ज्या}}$ = कुज्या । चरज्या = $\dfrac{\text{कुज्या} \times \text{त्रि}}{\text{द्यु०}}$ =

$\dfrac{\text{अज्या} \times \text{क्रां० ज्या} \times \text{त्रि}}{\text{लं० ज्या} \times \text{द्यु}} = \dfrac{\text{पद्यु} \times \text{क्रां० ज्या} \times \text{त्रि}}{\text{परम क्रां० ज्या द्यु}}$

$= \dfrac{\text{प० द्यु} \times \text{भुज्या}}{\text{द्यु}}$ = विषुवांशज्या । चरज्या ।

यदि विषुवांशाः ९० तदा चरमपि = ९० ।

देशाल्लङ्कापर्यन्तं ये देशास्तत्र तत्र चरांशाः नवत्यपेक्षया न्यूना एव भवन्ति ।

अथ चतुर्षु पदेषु ये येंऽशाः समानास्तेषां क्रान्तिश्चरं च तुल्यमेव भवति । येषां अंशानां चरं साध्यं भवति तेषां क्रान्तिछाया[1] अक्षांशछायागुणा त्रिज्याभक्ता फलस्य चापं चरांशाः भवन्ति ।

अथ द्वितीयः प्रकारः । [2]अभीष्टांशानां क्रान्तिज्या त्रिज्यागुणा लम्बज्याभक्ता लब्धं अग्रज्या तस्य चापं अग्रांशाः । तत्कोटिज्या त्रिज्यागुणा अभीष्टांशद्युज्याभक्ता तच्चापकोटिश्चरांशाः भवन्ति ।

अथ तृतीयः प्रकारः । [3]अग्रज्या अक्षज्यागुणा अभीष्टांशद्युज्याभक्ता लब्धस्य चापं चरांशाः भवन्ति ।

अथ चतुर्थप्रकारः । आदौ परमचरं साध्यं अभीष्टांशानां लङ्कोदयज्या परमचरज्यागुणा त्रिज्याभक्ता फलस्य चापं चरांशाः ते षड्भक्ताः घट्यादिकं चरं भवति । उत्तरगोले चरं पञ्चदशघटीषु योज्यं दक्षिणगोले पञ्चदशघटीषु शोध्यं दिनार्द्धं भवति । तद्द्विर्गुणितं दिनमानं भवति। इदं दिनमानं स्थूलं सूक्ष्मन्तु उदयकालीनरविविषुवांशानां सषड्भरविविषुवांशानां चान्तरं दिनार्द्धं भवति । चन्द्रादिकग्रहाणां नक्षत्राणां च स्पष्टक्रान्तिं विधाय चरं दिनं च साध्यम् ।

---

१. $\dfrac{\text{अज्या} \times \text{क्रां० ज्या} \times \text{त्रि}}{\text{लं० ज्या} \times \text{द्यु}} = \text{चरज्या}$ ।

अत्र माज्यहरौ त्रिज्या अनेन गुणितौ जाता चरज्या =

$\dfrac{\text{अज्या} \times \text{त्रि} \times \text{क्राज्या} \times \text{त्रि}}{\text{लं ज्या} \cdot \text{द्यु} \times \text{त्रि}} =$

$\dfrac{\text{अक्षां छा} \times \text{क्रां० छा०}}{\text{त्रि०}}$ उपपन्नम् ।

२. 'कर्णकोटिज्यका त्रिज्याघाते' इत्यादिना चा० त्रि० ग० पञ्चम क्षेत्रानुमानेन सिद्धयति ।

३. चा० त्रि० ग० ३ क्षेत्रानुमानेन सिद्धयति ।

## अत्रोपपत्तिः

निरक्षसंज्ञा ये देशा इत्यारभ्य तेषां क्रान्तिश्चरं चात्र तुल्यमेव भविष्यति इत्यन्तं श्लोकानामुपपत्तिः सुगमैव।

येषां चरं भवेत्साध्यमित्यस्य उपपत्तिरुच्यते। अक्षज्या भुजः लम्बज्या कोटिः त्रिज्या कर्णः इदं जात्यक्षेत्रम्। एतत्सजातीयं अक्षछाया-भुजः त्रिज्या कोटिः तद्वर्गयोगपदं कर्णः। तृतीयं तत्सजातीयं क्रान्तिज्या कोटिः कुज्या भुजः अग्रा कर्णः। तत्रानुपातः त्रिज्यया अक्षांशछाया लभ्यते तदा क्रान्तिज्यया किमिति लब्धा कुज्या। इयं त्रिज्यागुणा द्युज्या-भक्ता फलं चरज्या भवति।

अत्र क्रान्तिज्या चेत् त्रिज्यया गुण्यते द्युज्यया भाज्यते तदा क्रान्ति-छाया भवति। तदेवमुपपन्नं क्रान्तिछाया अक्षछायागुणा त्रिज्याभक्ता फलं चरज्या भवति।

## तत्कोटिजीवेत्यस्योपपत्तिः।

( सप्तमक्षेत्रेण ? )




कखगघं आयनवृत्तं अलं नाडी-वलयं कगं निरक्षक्षितिजं खघं स्व-क्षितिजं वं ग्रहस्थानं गं ध्रुवस्थानं घं समचिह्नं हं गोलसन्धिः गवं ग्रहद्युज्या गतं गलं नवतिमितं लतं चरकोटिः वघं अग्राकोटिः हवं अग्रा तवं इष्टक्रान्तिः हतं चरं। गवज्यया घवज्या लभ्यते तदा गतज्यया किमितिलब्धं तलज्या एतच्चापं नवतिशुद्धं हतं भवतीत्युपपन्नम्।

वाग्रज्येत्यस्योपपत्तिरुक्तक्षेत्रेणैव ज्ञेया।

गघव त्रिभुजं हतव त्रिभुजं ( च ) मिथः सजातीयम्। गवज्यया गघज्या लभ्यते तदा हवज्यया किमिति लब्धं हतज्या तच्चापं हतं चरं भवति, इत्युपपन्नम्।

## इष्टांशलङ्कोदयसिञ्जिनिघ्नीत्यस्योपपत्तिः ।

परमाल्पद्युज्यावृत्ते त्रिज्यायाः परमचरज्यायाश्च निष्पत्तिरस्ति सैवा- भीष्टद्युज्यावृत्ते अभीष्टलङ्कोदयांशानामभीष्टचरज्यायाश्च निष्पत्तिरस्ति, इत्युपपन्नम् ।

## चरं तेन युतोनाश्चेत्यस्योपपत्तिः ।

उत्तरगोले स्वक्षितिजं निरक्षक्षितिजादधस्ताद् भवति । याम्यगोले उपरिष्टाद् भवति । अतश्चरांशैरूनयुता नवत्यंशाः गोलयोः दिनार्द्धं भवति इत्युपपन्नम् ।

इदं दिनार्द्धं प्रतिक्षणं चरवैलक्षण्यादस्फुटं इदं द्विगुणं दिनार्द्धं दिनमानं भवतीति । सूक्ष्मन्तु उदयार्कस्य विषुवांशाः साध्याः सषड्- भस्य विषुवांशाः साध्यास्तेषां यदन्तरं तत्सूक्ष्मं दिनार्द्धं भवेत् ।

## अथ चन्द्रादीनां ग्रहाणां चेत्यस्योपपत्तिः सुगमैव ।

प्रोक्तप्रकाराद् विषुवांशका ये निरक्षजाता उदयांशकास्ते ।
पूर्वेण पूर्वेण विहीनितास्ते प्रत्यंशकस्योदयकालमानम् ॥ १ ॥
प्रत्यंशजाता विपलोदयांशाः मेषादितः खाङ्कमिताश्च ये स्युः ।
क्रमोत्क्रमस्थाश्चरखण्डकैः स्वैः क्रमोत्क्रमस्थे रहिता युतास्ते ॥ २ ॥
मेषादितः स्वोदयभागकाः स्युस्तुलादितो ह्युत्क्रमतश्च वेद्याः ।
तान् पूर्वपूर्वैः सहितान् विधाय यावल्लिखेद् भांशमितालयेषु ॥ ३ ॥

## अथ विषुवांशकेभ्यो निरक्षलग्नसाधनम् ।

तात्कालिकात्सायनभागसूर्याद् राश्यादिकाद्ये विषुवद् विभागाः ।
ग्राह्याश्च ते ज्यानयनप्रकारात्कार्या रसघ्नेष्टघटीभिराढ्याः ॥ ४ ॥
ततो धनुर्वद् विपले विलग्नं राश्यादिकं स्यादयनांशहीनम् ।
एवं स्वकीयैरुदयैः स्वकीयं लग्नं प्रसाध्यं गणकैः स्वबुद्ध्या ॥ ५ ॥

## अथ कालसाधनम् ।

ससायनार्कान्निजभोदयांशाः साध्यास्तथा सायनलग्नजाताः ।
तदनन्तरं षड्विहृतन्तु घट्यः स्युः सावना रव्युदयात्स्वदेशे ॥ ६ ॥

## अथ लग्ने ज्ञाते दशमलग्नसाधनम् ।

विलग्नजाता उदयांशका ये खाङ्कांशकैस्ते रहिता विधेयाः ।
तेभ्यो विलग्नं हि निरक्षजातं साध्यं भवेत्तद् दशमाख्यलग्नम् ॥ ७ ॥

## अथ लङ्कोदयेभ्यः क्षेत्रांशसाधनम् ।

कोटिज्यकाया विपलोदयानां लङ्कोदयान्यद्युगुणेन गुण्या ।
त्रिभज्ययाप्ताप्तधनुर्लवाद्यं खाङ्कच्युतं चाद्यपदे तदेव ॥ १ ॥
द्वितीयके खाङ्कयुतं तृतीये खभच्युतं तुर्यपदे खभाढ्यम् ।
क्षेत्रांशकाः स्युः खगुणैश्च तष्टा राश्यादिलग्नं भवति स्फुटं तत् ॥ २ ॥

## अथ प्रकारान्तरम् ।

लङ्कोदयानां भुजसिञ्जिनी या स्वकोटिजातद्युगुणेन भक्ता ।
त्रिज्यागुणाप्ताप्तधनुर्लवाद्यमाद्ये पदे क्षेत्रलवा भवेयुः ॥ ३ ॥
द्वितीयके भार्द्धलवेषु शुद्धास्तृतीयके भार्द्धयुता विधेयाः ।
चतुर्थके चक्रलवेषु शुद्धाः क्षेत्रांशकाः वा प्रभवन्ति गोले ॥ ४ ॥

## अथ श्लोकचतुष्टस्य व्याख्या ।

कोटिज्यकेति । लङ्कोदयांशानां कोटिजीवा विषुवान्यक्रान्तिकोटिज्या-गुणा त्रिज्याभक्ता फलस्य चापं प्रथमपदे नवतिशुद्धं द्वितीये नवतियुतं तृतीये खभशुद्धं तुर्ये खभाढ्यं क्षेत्रांशाः भवन्ति ते खाग्नितष्टा राश्यादिलग्नं भवति ।

## अथ प्रकारान्तरम् ।

लङ्कोदयांशानां भुजज्या त्रिज्यागुणा [1]सत्रिभोदयांशद्युज्याभक्ता फलस्य चापं प्रथमपदे क्षेत्रांशाः भार्द्धशुद्धं द्वितीये पदे तृतीये भार्द्धयुतं चतुर्थे भांशशुद्धं क्षेत्रांशाः भवन्ति । ते खाग्नितष्टा राश्यादिलग्नं भवति ।

---

१. अत्रायमाशयः । सत्रिभोदयांशद्युज्या =
विषुवांशकोटिजातद्युज्या = यष्टि =
अयनवलनकोटिज्या ।

## अत्रोपपत्तिरष्टमक्षेत्रेण ।




कखगघं आयनवृत्तं कगं क्रान्तिवृत्तं खघं नाडीवृत्तं ह चिह्नं गोलसन्धिः म कदम्बः वं ध्रुवस्थानं मतधसं सत्रिभध्रुव – ( क + ) कदम्बवृत्तं तधं सत्रिभोदग्क्रान्तिः धसं सत्रिभोदयद्युज्याचापांशाः अजसवं ध्रुववृत्तं असं नवतिः अधमपि नवत्यंशमितं यदि धसज्यया अधज्या लभ्यते तदा जहज्यातुल्यया उदयज्यया किमिति लब्धं अहज्या तच्चापं क्षेत्रांशाः भवन्तीत्युपपन्नम् । प्रथमप्रकारस्योपपत्तिस्तु उदयांशानयनवैपरीत्येन ज्ञेया । अथ शकलं निदर्शनार्थम् ।

## अथ [1]स्वोदयांशेभ्यो लग्नसाधनम् ।

स्वोदयांशान् क्षेत्रभागान् कल्प्या लङ्कोदयास्ततः ।<br>
तत्कोटिभागक्रान्त्यंशान् लम्बभागेषु शोधयेत् ।। १ ।।<br>
यदि ते विषुवांशाः स्युः प्रथमेऽन्त्ये पदेऽथवा ।<br>
द्वितीये वा तृतीये च लम्बभागेषु योजयेत् ।। २ ।।<br>
शेषं खभस्योन्नतांशास्तज्जीवा त्रिज्यका गुणा ।<br>
दृग्गत्याप्तफलधनुः खभलग्नान्तरं भवेत् ।। ३ ।।<br>
खभद्यूनान्तरं वा स्यादथ एव विषयोदयाः ।<br>
भार्द्धांशेभ्यो यदा न्यूनाः सौम्यगोले विलग्नकम् ।। ४ ।।

---

१. स्वोदयांशेभ्यः स्वस्य लग्नस्य उदयांशेभ्यः लग्नसाधनमर्थात् नाडीवृत्ते लग्नस्य स्वदेशीयोदयमानानि ज्ञायन्ते तेभ्यो लग्नानयनमभीष्टमस्ति । वस्तुतोऽयं प्रकारः व्यवहारे नोपयुक्तः परं गोलचमत्कृतिकारको वर्तते । अत्र लग्नेन सह अनायासं दशमलग्नमपि सिद्धं भवतीति महद् वैचित्र्यं प्रतिभाति ।

अधिकाः स्युस्तदा ज्ञेयं याम्यगोले विलग्नकम् ।
लग्नदृक्क्षेपयोरेकदिक्त्वे लब्धस्य यद्धनुः ॥ ५ ॥
खमध्यलग्ने योज्यं स्याद् भिन्नदिक्त्वे तु तद् धनुः ।
भार्द्धांशशुद्धं दशमे योज्यं लग्नं भवेदिह ॥ ६ ॥

अथैतेषां पद्यानां व्याख्या ।

स्वोदयांशान् क्षेत्रांशान् प्रकल्प्य तेभ्यो लङ्कोदयाः साध्याः । तत्कोट्यंशानां क्रान्त्यंशाः लम्बांशेषु शोध्याः । यदि साधितलङ्कोदयाः प्रथमपदे तुर्यपदे वा स्युः । यदि द्वितीये तृतीये वा भवन्ति तदा क्रान्तिः लम्बांशेषु योज्या शेषं दशमस्योन्नतांशाः भवन्ति । तेषां ज्या त्रिज्यागुणा दृग्गतिभक्ता फलचापं दशमलग्नयोरन्तरं दशमसप्तमयोर्वान्तरं भवति । स्वोदयांशाः भार्द्धांशेभ्यो यदि न्यूनाः तदा लग्नमुत्तरगोलेस्तीति । यद्यधिकास्तदा दक्षिणगोलेस्तीति ज्ञेयम् । लग्नदृक्क्षेपयोर्दिगैक्ये सति लब्धचापं दशमलग्ने योज्यं भिन्नदिक्त्वे भार्द्धांशशुद्धं चापं दशमे योज्यं लग्नं भवतीति ।

## अत्रोपपत्तिर्नवमक्षेत्रेण

कखगघ क्षितिजं खहरुघं नाडीवलयं घरुलं क्रान्तिवृत्तं म कदम्बः कहगं याम्योत्तरवृत्तं रुघं स्वोदय चापं लं लग्नं त दशमं कतं दशमोन्नतांशचापं मनयघं कदम्बवृत्तं स्वोदयोपरिगतम् । तनं नवतिमितं[1] चापम् । स्वोदयांशान् क्षेत्रांशान् प्रकल्प्य उदयाः साधितास्ते रुय चापम् । घय चापं [2]स्व स्वोदयक्रान्ति [3]सवमं




वित्रिभदृग्वृत्तं तदेव कदम्बवृत्तं भवति । वसं वित्रिभोन्नतांशाः सैव

१. नितं इति पु० द्व० पाठः ।
२. स्वोस्वोदय—इति पु० द्व० पाठः ।
३. खदभं इति पु० द्व० पाठः ।

दृग्गतिः हृतं सत्रिभक्रान्तिः। यदि वसज्यया दृग्गत्या त्रिज्यातुल्या धवज्या लभ्यते तदा कतज्यया किमिति लब्धचापं धतं दशमसप्रमान्तरम्। विषुवांशाः भार्द्धांशेभ्यो न्यूनास्तदा लग्नमुत्तरगोलेस्तीति। अधिकास्तदा दक्षिणगोलेऽस्तीत्यत्र वासना प्रसिद्धा। दृक्क्षेपलग्नयोः दिगैक्ये दशमं वित्रिभात्पूर्वदिशि भवत्यतः प्राप्तमन्तरचापं दशमे योज्यं भिन्नदिक्त्वे दशमं वित्रिभात्पश्चिमदिशि भवत्यतः प्राप्तचापं भार्द्धांशशुद्धं दशमे योज्यं लग्नं भवतीत्युपपन्नम् ॥

इति स्वोदयांशेभ्यो लग्नसाधनम्।

## अथ आयनदृक्कर्मसशरस्य विषुवांशसाधनं चाह।

बिम्बध्रुवांशोद्भवकोटिजीवा शरांशकोटिज्यकया विनिघ्नी।
स्पष्टद्युजीवाविहृताप्तचापमाद्ये पदे खाङ्कलवेषु शुद्धम् ॥ १ ॥
पदे द्वितीये वियदङ्कयुक्तं खभांशशुद्धं तु पदे तृतीये।
खभांशयुक्तं च पदे तुरीये बिम्बस्य लग्नोदयभागकाः स्युः ॥ २ ॥
लग्नं लग्नोदयांशेभ्यः साध्यमायनदृग्ग्रहः।
स एव भवति स्पष्ट इति (तन्त्र) विदो विदुः ॥ ३ ॥
भानां शरान्यापमदि (क्) समत्वे षष्ट्याप्तबाणांशभया विनिघ्नी।
छायापरक्रान्तिभवांशकानां दोर्ज्याधिकाचेत्प्रभवेत्तदानीम् ॥ ४ ॥
स्यादाप्तचापं विपरीतसंज्ञं क्षेप्याः खनागेन्दु १८० मिता इहांशाः।
सबाणनक्षत्रंनभश्चराणां ते वै भवेयुः विषुवद्विभागाः ॥५॥

## अथ बिम्बध्रुवांशोद्भवेत्यादि श्लोकत्रयस्य व्याख्या।

स्पष्टग्रहध्रुवककोटिज्या शरकोटिज्यागुणा स्पष्टक्रान्तिकोटिज्याभक्ता फलचापं प्रथमपदे नवतिशुद्धं द्वितीये नवति युतं तृतीये पादोनभांशहीनं, चतुर्थे पादोनभांशयुतं बिम्बग्रहस्य लङ्कोदयांशाः भवन्ति। तेभ्यो लग्नं साध्यं स आयनदृग्ग्रहो भवति।

## अस्योपपत्तिर्दशमक्षेत्रेण



कखगघं आयनवृत्तं खहघं नाडीवलयं रुं ग्रहबिम्बं कहगवृत्तं पूर्वापरसंपातकीलितं बिम्बोपरिगतं इष्टवृत्तं भसदृशवृत्तं भवति। लरुतं ध्रुववृत्त लरुचापं स्पष्टद्युज्याचापं रुतं स्पष्टक्रान्तिचापं रुगं आयनवृत्तबिम्बयोरन्तरं यदि रुल चापज्यया रुगचापज्या लभ्यते तदा त्रिज्यातुल्यया लतज्यया किमिति लब्धस्य चापं तघं इदं नाडीवृत्ते आयनवृत्तध्रुववृत्तयोरन्तरं स्वोदयकोटिरूपं जातम्। अतो नवतिशुद्धं प्रथमपदे उदयांशाः भवन्ति। द्वितीये नवतियुतं सम्पातादुदयांशाः भवन्ति। तृतीये पादोनभांशशुद्धं सम्पातादुदयांशाः भवन्ति। चतुर्थे पादोनभांशयुतं सम्पातादुदयांशाः भवन्ति। एवं ये साधिता बिम्बोदयांशाः ते आयनदृक्कर्मसंस्कृतस्यापि भवन्ति। यतस्तूभयोर्ध्रुवसूत्रं एकमेवेत्यतस्तेभ्यः साधितं लग्नमायनदृक्कर्मसंस्कृतध्रुवको भवतीत्युपपन्नम्।

## अथ सशरस्य विषुवांशसाधने भानामिति श्लोकद्वयेन विशेषमाह।

ध्रुवकान्यक्रान्तिशरयोर्दिक्साम्ये परक्रान्तिविलोमछाया शरविलोमछायाघातः षष्टिभक्तः लब्धं यदा ध्रुवकज्यातोऽधिकं तदा लब्धचापं प्रथमपदे नवतौ योज्यं द्वितीयपदे नवतौ शोध्यं तृतीयपदे खभे योज्यं चतुर्थपदे खभे शोध्यं सर्वत्र भार्द्धांशाः क्षेप्याः विषुवांशाः भवन्ति।

## अत्रोपपत्तिरेकादशक्षेत्रेण




कखगघं आयनवृत्तं कमगं क्रान्तिवृत्तं खलसघं नाडीवृतं वंकदम्ब-स्थानं धं ध्रुवस्थानं तं ग्रहबिम्बस्थानं वतमसं कदम्बवृत्तं धतलनं ध्रुववृत्तं हं गोलसन्धिस्थानं मं क्रान्तिवृत्तभोग-स्थानं[1] मतं शरः तवधत्रिभुजं तमब त्रिभुजं ( च ) परस्परं सजातीयम् । तत्राऽनुपातः यदि तव तुल्यया शरकोटिज्यया कोटिरूपया धव तुल्याप क्रान्ति (विलोमऽ) छाया लभ्यते तदा तम तुल्यया शरज्यया किमिति ल मब तुल्यं क्रान्तिवृत्तखण्डछाया। अत्र परक्रान्तिछायायां एकं त्रिज्यातुल गुणकखण्डमधिकं निवेशितमस्ति । अत्र शरज्या यावत् त्रिज्यया गुण्यं शरकोटिज्यया भाज्यते तदा तावच्छाया भवति । तेन परक्रान्तिछाय शरछायया गुण्या पूर्वगुणके त्रिज्या निविष्टा स्थिता तेनात्र त्रिज्या ह कृतः । तेनोपपन्नं सूत्रम् ।

शा० ज्या
प० क्रा० छा०
श० को
————————
श० ज्या त्रि० १
श० क्रा० छा० १
श० को० १

इति सशरस्य विषुवांशसाधनम् ।

---

१. स्थाने इति पुस्तक द्व० पाठः ।

२. अत्राचार्येण स्वल्पान्तरतः साजात्यं स्वीकृत्य स्थूलानुपातद्वारा भ दृक्कर्मस्पर्शसाधनं कृतम् । वस्तुतो नेदं सिद्धान्तसम्मतम् ।

## अथ स्पष्टक्रान्तिध्रुवकज्ञाने आयनदृक्कर्मोच्यते ।

ग्रहर्क्षध्रुवकं तावत् कृत्वा राशित्रयान्वितम् ।
बिम्बस्पष्टक्रान्तिसमपलभागाङ्कपत्रतः ॥ १ ॥
उदयांशान्साधयित्वा नवतिं तेषु शोधयेत् ।
तेभ्यो निरक्षे यल्लग्नं सः स्यादायनदृग्ग्रहः ॥ २ ॥
इदं स्पष्टापमे सौम्ये ज्ञेयं दृग्ग्रहसाधनम् ।
याम्येऽपमेऽथ ध्रुवकं कृत्वा राशित्रयोनितम् ॥ ३ ॥
बिम्बस्पष्टक्रान्तिसमपलभागाङ्कपत्रतः ।
उदयांशान्साधयित्वा [1]नवतिं तेषु योजयेत् ॥ ४ ॥
तेभ्यो निरक्षे यल्लग्नं सः स्यादायनदृग्ग्रहः ।

## अथ शरध्रुवकयोर्ज्ञाने आयनदृग्ग्रहः ।

स्पष्टग्रहर्क्षध्रुवके नवत्यंशान् विशोधयेत् ।
शेषांशानुदयांशाश्च शरांशानक्षभागकान् ॥ १ ॥
प्रकल्प्य शरतुल्याक्षभागकोष्ठस्थितोदयैः ।
लग्नमानीय[2] तस्मिन् हि प्रक्षिपेत्खनवांशकान् ॥ २ ॥
भवेदायनदृक्कर्म संस्कृतोदयभागकः ।
तस्माल्लङ्कोदयैर्लग्नं साध्यमायनदृग्ग्रहः ॥ ३ ॥
इदं सौम्ये शरे ज्ञेयं याम्ये खेटर्क्षजं ध्रुवम् ।
नवत्यंशयुतं कृत्वा शेषांशानुदयांशकान् ॥ ४ ॥
शरांशानक्षभागांश्च कल्पयित्वा विचक्षणः ।
शरतुल्याक्षांशपत्रकोष्ठस्थोदयभागकैः ॥ ५ ॥
संसाध्यलग्नं तस्मिंश्च खनवांशान् विशोधयेत् ।
भवेदायनदृक्कर्म संस्कृतोदयभागकः ॥ ६ ॥
तस्मान्निरक्षजं लग्नं सः स्यादायनदृग्ग्रहः ।

---

१. नवति इति पु० द्वि० पाठः ।
२. मानीये इति पु० द्वि० पाठः ।

## अत्रोपपत्तिः ।

क्रान्तिवृत्तं नाडीवृत्तं शरः स्पष्टक्रान्तिः वित्रिभकदम्बवृत्तं याम्योत्तरवृत्तं, याम्योत्तरवृत्तं वित्रिभकदम्बवृत्तं कल्पनीयम् । ग्रहध्रुवकः दशमोदयः कल्पितः सौम्ये शरे नवतिस्तत्रातः शोधिता । यतः क्रान्तिवृत्तस्य नाडीवृत्तकल्पनायां याम्याक्षांशानां सौम्याक्षांशत्वं भवति । याम्याक्षांशानां ये मेषादिषड्राश्युदयास्ते सौम्याक्षांशानां तुलादिषड्राश्युदयाः भवन्ति। इत्युपपन्नं यथोक्तम् । इत्यायनदृक्कर्म ।

## अथाक्षदृक्कर्म ।

स्पष्टापमाच्चरलवानुदये विधाय तान् भस्य वैषुवलवेष्वपमांशगोलात् ।
कुर्याद्दृणं धनमतो विपरीतमस्ते स्यात्स्वोदयांशक इहास्तमयांशकश्च॥१॥
स्वीयोदयांशान् स्वपलांशपत्रे धनुर्भवेत्स्वोदयलग्नकं तत् ।
स्वास्तांशतो भार्द्धलवैरुपेतात्स्वास्ताख्यलग्नं खलु भोदयास्ते ॥ २ ॥

अथ श्लोकद्वयस्यार्थः । स्पष्टक्रान्तेश्चरमानीय आयनदृक्कर्मसंस्कृतोदये स्पष्टक्रान्तिः सौम्ययाम्यगोलयोः क्रमेण ऋणं धनं च कार्यम् । स आयनदृक्कर्मसंस्कृतस्योदयो भवति । अस्ते चरं विपरीतं दत्त्वा भार्द्धांशाश्च दत्त्वा लग्नं साध्यं तदस्तलग्नं भवति ।

## अत्रोपपत्तिः ।

उत्तरगोले क्रान्तौ सत्यां यस्य ग्रहस्य नक्षत्रस्य वा तद् बिम्बोपरिगतं क्षितिजवृत्तं नाडीवृत्ते यत्र लगति तच्चिह्नं आयनदृक्कर्मसंस्कृतोदयचिह्नात्स्पष्टक्रान्त्युत्पन्नचरांशैरुदये पश्चिमत एव भवति । दक्षिणक्रान्तौ पूर्वत एव भवति । अस्ते एतद् विपरीतं भवतीत्युपपन्नम् इत्याक्षदृक्कर्म।

## अथ दृश्यादृश्यत्वमुच्यते ।

ग्रहोदयांशानुदयांशकेभ्यो लग्नस्य संशोध्य यदत्र शेषम् ।
स्वाहर्दलांशानधिकं यदा स्यात्तदा ग्रहः स्वक्षितिजोपरिस्थः ॥ १ ॥
पूर्वे कपालेऽस्त्यध चेद् दिनार्द्धांशाः शेषतुल्याः खचरस्तु वृत्ते ।
याम्योत्तराख्ये स्वदिनार्द्धभागाधिकं दिनांशानधिकं यदा स्यात् ॥ २ ॥
शेषं तदा स्वक्षितिजोपरिष्टात्पश्चात्कपालेऽस्ति खगोऽथ शेषम् ।
स्वाहर्मितेरंशसमं तदास्तभूजे खगोस्तीति विनिश्चयोऽयम् ॥ ३ ॥

अथार्थः। ग्रहोदयांशा लग्नोदयांशेभ्यः शोध्याः शेषं दिनार्द्धांशेभ्यो यदि न्यूनं तदा ग्रहः क्षितिजादुपरि (पूर्व) कपालेस्तीति ज्ञेयम्। दिनार्द्धांशसमानाः शेषांशास्तदा खमध्येऽस्तीति। यदि दिनार्द्धांशाधिका दिमानांशेभ्यो न्यूनास्तदा क्षितिजादुपरि पश्चिमकपालेस्तीति वेदितव्यम्। दिनांशसमानाश्चेदस्तक्षितिजेस्तीत्ययं निश्चयोऽस्ति।

## अथ उन्नतांशेभ्यो दिगंशज्ञानम्।

दृगुन्नतज्याक्षभया विनिघ्नी सूर्योद्धृता शङ्कुतलं सदैव।
याम्यं भवेद् वोन्नतभागजीवा लम्बज्यकाप्ताक्षगुणेन निघ्नी ॥ १ ॥
तदग्रया संस्कृतमत्र दोः स्यादसौ त्रिभज्यागुणितो हृतश्च।
दृग्जीवयाप्तस्य धनुर्दिगंशा भुजांशदिक्काः सुधियावगम्याः ॥ २ ॥
यद्वा द्विधा[1] स्थापितलम्बभागा युतोनिताश्चोन्नतभागकैस्ते।
तज्जीवयोर्योगवियोगखण्डमाद्यान्यसंज्ञं क्रमशो विचिन्त्यम् ॥ ३ ॥
याम्या नभोगापमभागकाश्चेत्तज्यान्यसंज्ञेन युता विधेयाः।
यद्युत्तरः स्यादपमो ग्रहस्य क्रान्तिज्यकान्यान्तरमत्र कार्यम् ॥ ४ ॥
योगो वियोगस्त्रिभसिञ्जिनीघ्नश्चाद्योद्धृतो लब्धधनुर्दिगंशाः।

## अथ प्रकारान्तरम्।

द्युरात्रवृत्ते नतकालमौर्वी स्पष्टद्युजीवागुणिता विभक्ता।
नतांशमौर्व्याप्तफल (स्य) चापं खाङ्कांशशुद्धं च दिगंशकाः स्युः ॥

अथार्थः। उन्नतांशज्या पलभागुणा द्वादशभक्ता शङ्कुतलं सदैव दक्षिणं भवति।

अथवा उन्नतांशज्या अक्षांशज्यागुणा लम्बांशज्याभक्ता लब्धं शङ्कुतलं सदा दक्षिणमेव इदमग्रया संस्कृतं भुजो भवति। अयं त्रिज्यागुणो दृग्ज्या भक्तो दिगंशज्यास्याश्चापं दिगंशाः[2] भुजदिक्काः ज्ञेयाः।

---

१. विधो इति पु० द्व० पाठः।

२. अत्रात्त्रचेत्रानुपातेन $\frac{\text{शं० × पभा}}{\text{१२}}$ = शं० त।

वा; $\frac{\text{शं × अ० ज्या}}{\text{लं० ज्या}}$ = शं० त०। अग्रा ± शं० त = भुज।

$\frac{\text{भु × त्रि}}{\text{दृग्ज्या}}$ = दिग्ज्या अस्याश्चापं दिगंशाः।

अथ प्रकारान्तरम् । उन्नतांशाः लम्बांशैरूनयुताः कार्याः उभयोर्जीवे कार्ये ज्ययोर्योगार्द्धं प्रथमसंज्ञं ज्ययोरन्तरार्द्धं द्वितीयसंज्ञं भवति । यदि ग्रहस्पष्टक्रान्तिर्दक्षिणा तदा क्रान्तिज्या द्वितीयेन युता । यद्युत्तरा क्रान्तिस्तदा क्रान्तिज्याद्वितीयान्तरं कार्यम् । शेषं त्रिज्यागुणं प्रथमसंज्ञकेन भक्तं लब्धा दिगंशज्या तच्चापं दिगंशाः ।

पुनः प्रकारान्तरम् । वक्ष्यमाणप्रकारेणोन्नतांशेभ्यो नतकालमानीय तज्जीवा साध्या सा स्पष्टक्रान्तिकोटिज्यागुणिता नतांशज्याभक्ता लब्धं दिगंशकोटिज्यास्याश्चापं नवतिशुद्धं दिगंशाः ।

यद्वा द्विधा स्थापितलम्बभागा इत्यस्योपपत्तिः ।

## द्वादशक्षेत्रेण—




कखगघं याम्योत्तरवृत्तं रुघमुन्नतांशचापं कघं लम्बांशचापं करु अन्तरम् । रुनमन्तरज्या । बखमुन्नतांशचापं खगं लम्बांशचापं बगं योगः बपं योगजीवा लत तुल्या । [1]रुनलतयोर्योगार्द्धं सल संज्ञा जीवा प्रथमं रुन लतयोरन्तरार्द्धं [2]तस द्वितीयम् । स्पष्टक्रान्तिज्या [3]सच संज्ञा दक्षिणा ।

१. रुत इति पु० द्व० पाठः ।

२. ननं इति पु० द्व० पाठः ।

३. अत्र क्षेत्रस्य वास्तवस्वरूपेण दर्शनार्थं सच दक्षिणा क्रान्तिः तथ तुल्या कल्पिताऽस्ति ।

उत्तराक्रान्तिर्यशं अन्तरार्द्धं जशं [1]तचं क्रान्तिज्याद्वितीययोर्योगः। क्रान्तिज्याद्वितीययोरन्तरं [2]जयं [3]रुनमत्रिभुज सथमत्रिभुजयोः साजात्यं (अस्ति)। [4]यदि रुनेन रुमं कर्णः प्राप्यते तदा सथेन किमिति लब्धः [5]थमं [6]कर्णः। रुनम त्रिभुजं जयम त्रिभुजं च मिथः सजातीयं यदि रुनेन रुमं लभ्यते तदा जयेन किमिति लब्धं मयं पुनरनुपातः दृग्ज्या प्रमाणेन इदं तदा त्रिज्या प्रमाणेन किमिति लब्धा दिगंशज्या अस्याश्चापं [7]दिगंशाः भवन्तीत्युपपन्नम्। क्षेत्रं च। (द्यु) रात्रवृत्ते इत्यस्योपपत्तिः।

---

१. सथं, इति पु० द्व० पाठः।

२. नपं इति पु० द्व० पाठः।

३. भनभ इति पु० द्व० पाठः।

४. इतः परं पुस्तकद्वये पाठोऽयं नेरुक्रमित पधमन रुम कर्णः प्राप्यते, इति दृश्यते।

५. सम इति पुस्तक द्व० पाठः।

६. अनेन क्रान्तिज्याअन्ययोगेन प्रथमानुपातागतः थमं कर्णः भुजो दक्षिणगोले समायाति। द्वितीयानुपातेन मय कर्णः भुज उत्तरगोले।

७. सामान्यरूपेण क्षेत्रपरिचयो ग्रन्थाकारेण प्रदत्त एव विशेषोऽत्र दीयते। दल = रुद = लम्बांशाः। कद = उन्नतांशाः। अज = लम्बांशकोज्या = अक्षज्या। जदट $\triangle$ जअठ $\triangle$ यो साजात्यादनुपातेन $\frac{\text{शं} \times \text{अ० ज्या}}{\text{त्रिज्या}}$ = अठ = तस = अन्य = अन्तरार्द्धम्। कथमिति निरूप्यते। $\frac{\text{योगज्या} + \text{अंज्या}}{२}$ = $\frac{\text{णल}}{२}$ = णस = $\frac{\text{यो}}{२}$। रुन = णत = अं० ज्या — $\frac{\text{यो}}{२}$ अं० ज्या = $\frac{\text{यो} - \text{अं० ज्या}}{२}$ =

णस — णत = तस = अन्तरार्द्धम् = अन्य।

$\triangle$ असल $\angle$ अलस = उन्नतांश, $\angle$ सअल = नतांश, $\angle$ असल = ९०।

अल = लं० ज्या।

$$\frac{\text{आद्य} = \text{योगज्या} + \text{अं० ज्या}}{२} = \text{सल} = \text{णस} = \frac{\text{लं० ज्या} \times \text{नतज्या}}{\text{त्रि ज्या}}$$

यदि यश क्रान्तिः कल्प्यते तदा △ यरश ∠ यरश=लम्बांशाः। यर=अग्रा= $\frac{\text{क्रा० ज्या} \times \text{त्रि}}{\text{लं० ज्या}}$ । एवं यदि शज = अन्य = अन्तरार्धं कल्प्यते तदा शज = इम।

△ रमइ ∠ मरइ = लम्बांशाः अतः रम = $\frac{\text{इम} \times \text{त्रिज्या}}{\text{लं० ज्या}}$ । इम=अन्तरार्धं= $\frac{\text{शं} \times \text{अज्या}}{\text{त्रि०}}$ अस्योत्थापनेन रम = $\frac{\frac{\text{शं०} \times \text{अज्या} \times \text{त्रि}}{\text{त्रि०}}}{\text{लं० ज्या}} = \frac{\text{शं} \times \text{अ० ज्या}}{\text{लं० ज्या}}$ = शंकुतलम्।

भुज = अग्रा $\pm$ शं० त० प्रकृते रय − रम = मय = भुजः।

यदि अन्तरार्धं उज, क्रान्तिश्च जय कल्प्यते तदापि भुजः मय।

△ रुनम △ मजय, मय = $\frac{\text{रुम} \times \text{जय}}{\text{रुन}}$ । अत्र $\frac{\text{रुम}}{\text{रुन}} = \frac{\text{त्रिज्या}}{\text{लं० ज्या}}$ इत्यस्ति अतः

मय = $\frac{\text{त्रि} \times \text{जय}}{\text{लं० ज्या}}$ । परमत्र जय स्वरूपं = क्रां० ज्या $\mp$ अन्य।

जय = क्रां० ज्या $\pm \frac{\text{शं०} \times \text{अज्या}}{\text{त्रि०}}$ 'अस्योत्थापनेन मय = भुजः

$$\frac{\frac{\text{त्रि} \left( \text{क्रां ज्या} \mp \text{शं अज्या} \right)}{\text{त्रि०}}}{\text{लं० ज्या}}$$

## त्रयोदशक्षेत्रेण—

कगजरु क्षितिजवृत्तं रुसगं नाडीवलयं यतअं ध्रुववृत्तं हतवं दृग्वलयं कहजं याम्योत्तरवृत्तं गघतरु भसदृशवृत्तं तहं नतांशाः अतं स्पष्टक्रान्तिः तयं स्पष्टक्रान्तिकोटिः सअं नतकालः। यसअ त्रिभुजं यघत त्रिभुजं ( च ) सजातीयं यदि त्रिज्याभितेन अयेन असं नतकालज्या लभ्यते तदा द्युज्यामितेन यतेन किमिति लब्धं घतज्या।




---

$$\text{दिग्ज्या} = \frac{\text{भुज} \times \text{त्रि}}{\text{न ज्या}} = \frac{\text{त्रि}}{\text{नज्या}} \times$$

$$\left\{ \frac{\text{त्रि ( क्रा० ज्या − शं अज्या )} \; + \; \dfrac{}{\text{त्रि}}}{\text{लं० ज्या}} \right\} =$$

$$\frac{\text{त्रि ( क्रां० ज्या − शं०} \times \text{अ० ज्या )} \; + \; \dfrac{}{\text{त्रि}}}{\dfrac{\text{नज्या} \times \text{लं० ज्या}}{\text{त्रि०}}} =$$

$$\frac{\text{त्रि ( क्रां० ज्या − अन्य )} \; +}{\text{आद्य}} = \text{दिग्ज्या} =$$

अस्याश्चापं दिगंशाः।

इत्युपपन्नं ग्रन्थकारोक्तम्।

पुनः हतघ त्रिभुजं हवक त्रिभुजं च मिथः सजातीयं यदि हतेन नतांशज्यया घतज्या लभ्यते तदा हवेन किमिति लब्धं वकजीवा वा वज जीवा अस्याश्चापं दिगंशकोटि इदं नवतिशुद्धं दिगंशाः भवन्तीत्युपपन्नम्।

## अथ दिनमानार्द्धसाधनमुच्यते। तद्यथा।

खाङ्का ६० श्चरांशैः सहिता वियुक्ता दिनार्द्धमानं खलु गोलयोः स्यात्।
तदूनखाष्टेन्दुमितं निशार्द्धं तत्तर्कभक्तं घटिकादिकं स्यात्॥१॥

## अथ भावसाधनम्।

विलग्नजातं रजनीप्रमाणमेकद्विवेदेषु हतन्तु योज्यम्।
लग्नांशकानां विषुवांशकेषु साध्यास्ततः चेत्रलवाः पुरावत्॥ २॥
ते स्युर्द्विरामेषु रसास्तु भावास्तत्सप्तमाः षट्कयुता विचिन्त्याः।
षड्राशियुक्तं दशमं तुरीयं लग्नं सषड्भं खलु सप्तमं स्यात्॥ ३॥
दिनप्रमाणं रजनीप्रमाणं निरक्षदेशेषु समं सदैव।
लम्बांशका यत्र परापमांशास्तत्रापवृत्तं कुजसन्निभं स्यात्॥ ४॥
अथो कुपृष्ठोर्ध्वगचिह्नगानां दिनप्रमाणं कथयामि सूक्ष्मम्।
त्रिज्यार्ककर्णेन·हृता फलस्य चापं भवेद्भूपिहितं लवाद्यम्॥ ५॥
गर्भीयभूजादधरस्थितांशाः दृग्वृत्तगा भूपिहितेन युक्ताः।
तत्कोटिजीवा विहृता त्रिभज्या रूपेण हीना च भवेद्दृगौच्यम्॥ ६॥
यदा रविर्गर्भकुजः स्थितः स्यात्कुच्छन्नकोटयंशकजीवयाप्ता।
त्रिज्या फलं भूरहितं दृगौच्यं स्याद्योजनाद्यं क्षितिखण्डनिघ्नम्॥ ७॥
ध्रुवादधः संस्थितदेशगानामेकस्थितानां क्षितिपृष्ठतस्तु।
अश्वेन्दुभिर्बाणपयोधिभिश्च तथा च षड्गोमितयोजनैश्च॥ ८॥
मीनादि कुम्भादि मृगादिसंस्थो दृग्गोचरः स्यात्सविता क्रमेण।
दृगौच्यमाने विदिते प्रसाध्यं दृश्यांशकज्ञानमतो विलोमात्॥९॥

## अथ मध्यनतांशेभ्यो रविज्ञानम्।

क्रान्त्यक्षसंस्कारवशान्नतांशा तदूनखाङ्काश्च तथोन्नतांशाः।
पलांशनम्रांशकयोर्विलोमसंस्कारतः क्रान्तिलवाः भवेयुः॥ १॥
तज्ज्या त्रिभज्या गुणिता विभक्ता परापमांशज्यकया फलस्य।
चापं रविः स्याद्यदि नम्रभागा अक्षांशकाल्पः क्षयगामिनश्चेत्॥ २॥

वर्धिष्णवश्चेद्रसराशिशुद्धां पलांशकेभ्योऽनधिका नतांशाः।
वृद्धिं गता षड्भयुतं रविः स्यात् क्षयिष्णवश्चक्रविशोधितं वै ॥ ३ ॥
सौम्या नतांशा यदि वृद्धिगाः स्युराद्यं पदं स्यात् क्षयगामिनश्चेत्।
पदं द्वितीयं सवितुर्विचिन्त्यं यत्राक्षभागापमभागकालपाः ॥ ४ ॥
एवं विभायाः वशतोऽपि शङ्कोः पदं रवौ मध्यगतेर्विचिन्त्यम्।
किन्तु प्रभायाः वशतो नतांशज्ञानं भवेत्सान्तरकं हि किञ्चित् ॥ ५ ॥

## अथ दृक्क्षेपानयनम्।

खमध्यलग्नोन्नतभागजीवा खलग्नलग्नान्तरजीवयाप्ता।
त्रिज्यागुणा [1]दृग्गतिसंज्ञिता स्यात् त्रिभोनलग्नस्य नरश्च सोऽत्र ॥ १ ॥
यद्वा रवेरुन्नतभागजीवा विलग्नसूर्यान्तरजीवयाप्ता।
त्रिज्यागुणा वित्रिभजो नरः स्यात् दृक्क्षेपकस्तद्धनुषस्तु कोटिः ॥ २ ॥
खलग्नजाता विषुवांशका ये त्रिभोनलग्नस्य च ये भवन्ति।
तदन्तरांशज्यकया विनिघ्नी त्रिभोनलग्नापमकोटिजीवा ॥ ३ ॥
विलग्नकाग्रज्यकया विभक्ता दृक्क्षेपको वाप्तधनुर्लवाद्यम्।
पलांशजीवा गुणितात्रिभज्या लग्नद्युजीवाविहृताप्तचापम् ॥ ४ ॥
त्रिभोनजन्यापमसंस्कृतं वा दृक्क्षेपकः स्यादविशेषदिक्कः।
लग्नोदयांशापमकोटिजीवा गुण्या वियल्लग्ननतांशमौर्व्या ॥ ५ ॥
त्रिज्योद्धृताप्तस्य धनुर्लवाद्यं दृक्क्षेपको वा नतभागदिक्कः।

अथ खमध्यलग्नोन्नतभागजीवेत्यारभ्य दृक्क्षेपको वा नतभागदिक्कः इत्यन्तस्यार्थः।

दशमोन्नतांशजीवा त्रिज्यागुणा दशमलग्नजीवया भक्ता लब्धा दृग्गतिजीवा अस्याश्चापं दृग्गतिः इदं नवतिशुद्धं दृक्क्षेपः।

वा दशमनतांशजीवा लग्नविषुवांशद्युज्यागुणा त्रिज्याभक्ता लब्धं दृक्क्षेपजीवा अस्याश्चापं दृक्क्षेपः। दृक्क्षेपदिक् दशमनतांशदिक्का ज्ञेयाः।

वा अक्षांशज्या त्रिज्यागुणा लग्नद्युजीवाभक्ता फलचापं दृक्क्षेपवृत्ते खमध्यनाडीवलयोरन्तरं इदं दक्षिणं वित्रिभान्यक्रान्त्या संस्कृतं दृक्क्षेपो भवति।

---

१. इदं चा. त्रि. ग. ५ क्षेत्रानुमानेन कर्णकोटिज्या त्रिज्याघाते इत्यादिना सिद्ध्यति।

## अत्रोपपत्तिश्चतुर्दशक्षेत्रेण




कगरुदं क्षितिजं हं खमध्यः कतअरुं क्रान्तिवृत्तं सहब दृक्क्षेपवृत्तं दहगं याम्योत्तरवृत्तं लमन नाडीवलयं त दशमं दतं दशमोन्नतांशाः। हतं नतांशाः कं सप्तमं रुं लग्नं सअं दृग्गतिः अहं दृक्क्षेपः मं गोलसन्धिः कतं दशमसप्तमोरन्तरं। यदि कतेन दतं तदा अकेन असम्। मतं लग्नोदयः नयं उदयक्रान्तिः यथं क्रान्तिकोटिः तथं नवतिः। यदि तथेन [1]थयं लभ्यते तदा तहेन हअमिति।

## पलांशजीवेत्यस्योपपत्तिः। पञ्चदशक्षेत्रेण—




कगरुदं क्षितिजं हं खमध्यं गरुदं नाडीवलयं वतअं क्रान्तिवृत्तं कहरुं याम्योत्तरवृत्तं लहनं दृक्क्षेपवृत्तं अ लग्नं अय लग्नक्रान्तिः यथं क्रान्तिकोटिः सहं अक्षांशाः हत दृक्क्षेपः [2]मथं नवतिः। यदि यथेन [3]मथं लभ्यते तदा सहेन महं लभ्यते। [4]तममन्यक्रान्तिर्वित्रिभस्य अनया इमं संस्कृतं तहं दृक्क्षेपो भवति। शेषप्रकाराणामुपपत्तिस्तु [6]सुगमास्ति सुबुद्धीनां किं विस्तरेणेति।

---

१. ययं इति पु. द्व. पा.।

२. सथं इति पु. द्व. पा.।

३. सं इति पु. द्व. पा.।

४. तथं इति पु. द्व. पा.।

५. हयं इति पु. द्व. पा.।

६. सुगमोऽस्ति इति पु. द्व. पा.।

## अथ परमोन्नतांशपरमाधरांशलक्षणम् ।

वृत्ते याम्योत्तरे भूजाद् ग्रहर्क्षावधि येंऽशकाः ।
उन्नतांशास्त एव स्युः परमा दृश्यगोलजाः ॥ १ ॥
क्षितिजाधोऽथ खेटस्य बिम्बपर्यन्तमं ( श ) काः ।
परमाधरसंज्ञास्ते गोले ज्ञेयमिति स्फुटम् ॥ २ ॥
यस्य नित्योदयास्तौ स्तस्तस्य भस्य ग्रहस्य वा ।
उन्नतांशाधरांशाश्च परमाः संभवन्ति हि ॥ ३ ॥
सदोदितस्य भस्याथ परमाश्चोन्नतांशकाः ।
वारद्वयं भवन्तीह गोलेऽस्त्येवं परिस्फुटम् ॥ ४ ॥
ऊर्ध्वाधराख्यभावेन वृत्ते याम्योत्तरे यतः ।
तत्सम्बन्धिद्युरात्रस्य वृत्तं लगति सर्वथा ॥ ५ ॥
यस्यर्क्षस्य सदैवास्तस्तस्यैव परमाधराः ।
अंशा वारद्वयं गोले भवन्तीति परिस्फुटम् ॥ ६ ॥
सदोदितर्क्षस्य च यस्य वृत्तं द्युरात्रसंज्ञं क्षितिजेऽस्ति लग्नम् ।
तस्यैकवारं परमोन्नतांशाः भवन्ति गोलेऽस्ति परिस्फुटं त्विदम् ॥७॥
ऋक्षस्य यस्यास्तमितस्य नित्यं द्युरात्रवृत्तं क्षितिजेऽस्ति लग्नम् ।
तस्यैकवारं परमाधरांशाः भवन्ति चैषां कथयामि साधनम् ॥ ८ ॥
निरक्षदेशे ये स्पष्टाः क्रान्त्यंशास्ते नतांशकाः ।
नतांशाः खाङ्कशुद्धाः स्युः परमोन्नतभागकाः ॥ ९ ॥
तावन्त एव परमा अधरांशा भवन्ति हि ।
साक्षदेशे यदृक्षं नाडीवलयतो दिशि ॥ १० ॥
दक्षिणस्यां तदा तस्य स्पष्टा ये क्रान्तिभागकाः ।
लम्बांशशुद्धा ये शेषाः परमोन्नतभागकाः ॥ ११ ॥
साक्षदेशे यदृक्षं स्यान्नाडीवलयतो दिशि ।
उत्तरस्यां तदा तस्य स्पष्टा ये क्रान्तिभागकाः ॥ १२ ॥
लम्बांशसहिताः कार्याश्चेत् स्युर्नवतितोऽधिकाः ।
तदा भार्द्धांशशुद्धाः स्युः परमोन्नतभागकाः ॥ १३ ॥
पूर्वोक्तवैपरीत्येन परमाधरभागकाः ।
यस्य स्पष्टक्रान्तिभागाः लम्बांशेभ्योऽधिका यदि ॥ १४ ॥

बिम्बगोलस्तस्य भस्य दृश्यध्रुववशात्सदा ।
उदितो वा सदैवास्तं यातश्च भवति स्फुटम् ॥ १५ ॥
लम्बांशेभ्यः क्रान्तिभागाः स्पष्टा स्युर्यत्प्रमाणकाः ।
अधिकास्तेऽत्र विज्ञेया परमोन्नतभागकाः ॥ १६ ॥

इति परमोन्नतांशपरमाधरांशज्ञानम् ।

## अथ दिगंशोपरि नतांशानयनम् ।

दिग्भागकोटयंशकसिञ्जिनिघ्नी पलोत्क्रमज्या त्रिभजीवयाप्ता।
तदूनदिक्कोटिलव ( जऽ ) ज्यकाया कोदण्डकोटिः परसंज्ञकः स्यात् ॥१॥
लम्बज्यका दिग्लवकोटिमौर्व्या गुण्या त्रिभज्याविहृता फलस्य ।
कोदण्डकोटिः परसंज्ञको वा जीवा तदीया च हरो विचिन्त्यः ॥ २ ॥
स्वाक्षापमज्ये त्रिभसिञ्जिनीगुणो हारेण भक्ते च तदीयचापयोः।
योगे वियोगे समभिन्नकाष्ठयोः अभीष्टकाः स्युः क्रमशो नतांशकाः ॥३॥
सौम्यांशकश्चेदधिकोऽपमोऽक्षतः प्राग्दिग्लवज्यापचयं गता पुनः।
प्रवर्द्धते चापरदिग्लवज्यका न्यूनेऽपमेऽपि स्वपलात्तदा धनुः ॥ ४ ॥
द्वितीयमभ्राष्टकुतो विशोध्य वा ततो नतांशाः द्विविधाः क्वचिन्मताः।
नतज्यकावर्गविवर्जितायाः त्रिज्याकृतेर्मूलमिहोन्नतज्या ॥५॥
निरक्षदेशे क्रान्तिज्या त्रिज्याघ्नी दिग्ज्यकोद्धृता ।
फलचापं नतांशाः स्युरुन्नताः खाङ्कविच्युताः ॥ ६ ॥

अथैषां पद्यानां वाक्यार्थः । अक्षांशानां उत्क्रमज्या दिगंशकोटयंशजीवागुणा त्रिज्याभक्ता यल्लब्धं तेनोनायाः दिगंशकोटयंशज्यायाः चापकोटिः परसंज्ञः स्यात् ।

लम्बांशज्या दिगंशकोटिज्यागुणा त्रिज्याभक्ता फलस्य चापकोटिः परसंज्ञः स्यात् वा प्रकारान्तरेण । तज्जीवा हरो ज्ञेयः ।

स्वदेशीयाक्षांशज्या क्रान्तिज्या च त्रिज्यागुणा पृथक् हारेण भक्ता फलद्वयस्य चापद्वयं कर्त्तव्यम् । अक्षांशक्रान्त्योरेकदिक्त्वे चापयोः योगो नतांशाः अभीष्टा नतांशाः भवन्ति । अक्षांशक्रान्त्योः भिन्नदिक्त्वे फलचापयोरन्तरं क्रमशो नतांशा अभीष्टाः स्युः । स्पष्टाक्रान्तिरुत्तरगोलेऽक्षांशाधिका भवति।

अथ च पूर्वदिगंशा अपचिता भवन्ति। पश्चिमदिगंशा उपचिता भवन्ति। तदा आनीतस्पष्टक्रान्त्यंशान् भार्द्धांशकेभ्यः संशोध्य शेषेणानीतेष्टाक्षांशाः संस्कार्याः ते नतांशाः भवन्ति।

निरक्षदेशे क्रान्तिजीवा त्रिज्यागुणा दिग्ज्याभक्ता फलस्य चापं नतांशाः स्युः। ते खाङ्कच्युता उन्नतांशाः भवन्ति इति।

## अत्रोपपत्तिः षोडशेन शकलेन।

कखगं क्षितिजं खलघं [१]आयनवृत्तं कलगं नाडीवलयं ह चिह्नं खमध्यः वं ग्रहस्थानं जहवं दृग्वृत्तं धवं बिम्बोपरिगतं ध्रुववृत्तं धं ध्रुवः धजदं दृग्वृत्तं नाडीवृत्तसंपातात् त्रिभान्तरे ध्रुववृत्तम्। [२]खतं दिगंशकोटिः जधं फलं जदं फलकोटिः



वमं ग्रहबिम्बक्रान्तिः। अत्र बजद त्रिभुजं बहल त्रिभुजं बवम त्रिभुजं चैतानि सजातीयानि। यदि जदेन जबं लभ्यते तदा हलेन किमिति लब्धं हबं। पुनः जदेन यदि जबं लभ्यते तदा वमेन किमिति लब्धं बवंहबबव योगेऽन्तरं वा हवं नतज्या[३]।

## अथ [४]दिग्भागकोट्यंशकसिञ्जिनिघ्नीत्यस्योपपत्तिः खण्डन्यासेन।

सा यथा त्रिज्यया लम्बज्या लभ्यते तदा दिगंशकोटिज्यया

१. अत्रायनवृत्तं हि द्वृत्तनाडीवृत्तासम्पातान्नवत्यंशेन विहितं तयोर्परमान्तरवृत्तरूपम्।

२. कतं इति पु० द्व० पाठः।

३. स्वाचापमज्येत्यस्योपपत्तिरस्ति।

४. अत्रायमाशयः। हजध त्रिभुजे हध = लम्बांशाः। जकोणज्या=त्रिज्या। धहज कोणः दिगंशकोटिः। अत्रानुपातः जधचा० ज्या =

$$\frac{\text{लं० ज्या} \times \text{दिगंशकोज्या}}{\text{त्रि०}}$$

चापं = चा। ९०—चा० = जद = परः। अस्य ज्या = हारः।

किमिति अस्मिन्ननुपाते लम्बज्यास्वरूपमिदं त्रि–पलां०उ०ज्या अनेन दिक्कोटिजीवा गुण्या त्रिज्यया भाज्या। एवं कृते एकस्मिन् खण्डे दिक्कोटिजीवैवावशिष्टा। द्वितीयखण्डे पलोत्क्रमज्यादिक्कोटिजीवागुणा त्रिज्या भक्तेति सिद्धम्। अत इदं फलं दिक्कोटिजीवायां शोधितम्। शेषस्य धनुः कोटिः परसंज्ञः स्यादित्युपपन्नम्।

इति दिगंशोपरिनतां ( शा ) नयनं सोपपत्तिकं सम्पूर्णम्।

## अथोन्नतांशेभ्यो लग्नानयनम्।

तत्रादौ उन्नतांशेभ्यो नतकालः साध्यते। स यथा।

दिनार्द्धमानोत्क्रमसिञ्जिनी स्यान्मध्यान्त्यका तद् गुणितोन्नतज्या।
भक्ता तु मध्योद्भवशङ्कुनासौ स्वेष्टान्त्यका सन्मतिनावगम्या॥ १॥
स्वेष्टान्त्ययोना मध्यान्त्या नतकालोत्क्रमज्यका।
अस्या उत्क्रमचापं यन्नतकालः स एव हि॥ २॥
यदोत्क्रमज्या त्रिभसिञ्जिनीतोऽधिका तदा त्रिज्यकया विहीना।
शेषस्य चापं वियदङ्कयुक्तं नताख्यकालो भवति स्फुटोऽत्र॥ ३॥
स्फुटापमांशैरथ लम्बभागाः पृथग्युतोनास्त्वनयोरिह ज्ये।
तयोश्च योगार्द्धमितो हरः स्याल्लम्बांशकाः [1]क्रान्तिसमा यदि स्युः॥ ४॥
तदाहरः स्यात्परमोन्नतांशज्यार्द्धं यदा लम्बलवाधिका स्यात्।
क्रान्तिस्तदा चोन्नतभागकाश्च वारद्वयं यान्ति तयोर्ज्यके ये॥ ५॥

---

जध चापज्यास्वरूपे लम्बज्योत्थापनेन जातम्

$$\frac{(\text{त्रि}-\text{अं}\text{त्ता}\text{शो}\text{त्क्रमज्या})\ \text{दिगंशकोज्या}}{\text{त्रि०}}$$

$$\text{कोष्ठापगमे} = \frac{\text{त्रि} \times \text{दि० को० ज्या}}{\text{त्रि}} - \frac{\text{अ० उ० ज्या} \times \text{दि० को० ज्या}}{\text{त्रि}}$$

$$= \frac{\text{दि० को० ज्या} - \text{अ० उ० ज्या} \times \text{दि० को० ज्या}}{\text{त्रि}} = \text{जधचा० ज्या}$$

अयमेव खण्डन्यासः। सूत्रं चोपपन्नम्।

१. आंतिसमा इति पुस्तक द्व० पाठः।

तयोर्वियोगार्द्धमितो हरो वा स्पष्टापमज्याक्षलवज्यकाघ्नी ।
त्रिज्या हृताप्तं परमोन्नतांशज्यायामृणं स्वं क्रमतो विधेयम् ॥ ६ ॥
क्रान्त्योरुदग्याम्यगयोः हरः स्याद्वा क्रान्तिकोटिज्यकया विनिघ्नी ।
लम्बांशजीवा त्रिभजीवयाप्ता लब्धं हरः स्यादिति वेदितव्यम् ॥ ७ ॥
चतुर्भिः कालापकम् ।
परोन्नतांशोद्भवसिञ्जिनीतो संशोधनीयोन्नतभागजीवा ।
शेषं त्रिभज्यागुणितं हराप्तं नताख्यकालोत्क्रमसिञ्जिनी स्यात् ॥ ८ ॥
अस्याः भवेदुत्क्रमतो धनुर्यन्नताख्यकालो भवति स्फुटोऽयम् ।
पूर्वे कपाले दिनमानखण्डे नताख्यकालः परिशोधनीयः ॥ ९ ॥
शेषं भवेदुन्नतकालसंज्ञं पश्चात्कपाले दिमानखण्डे ।
नताख्यकालः खलु योजनीयो दिनस्य कालो गतसंज्ञकः स्यात् ॥ १० ॥
स आक्षदृक्संस्कृतभोदयांशयुक्तस्तनोस्तन्निजदेशभागाः[1] ।
भवन्त्यथो वायनदृष्टिकर्मयुतस्य लङ्कोदयके नताख्यः ॥ ११ ॥
कालो विशोध्यः खलु पूर्वसंज्ञश्चेत्पश्चिमस्तत्र युतो विधाय ।
शेषं खलग्नोदयकालमानं खाङ्कैर्युतं ते निजभोदयांशाः ॥ १२ ॥
भवन्ति लग्नस्य पुनर्विलग्नमेभ्यः प्रसाध्यं सुधियोक्तरीत्या । इति ।
अथार्थः श्लोकानां क्रमेण लिख्यते ।

उन्नतांशज्या दिनार्द्धोत्क्रमज्यया[2] मध्यान्त्यगुण्या मध्याह्नशङ्कुना भक्ता फलमिष्टान्त्या ।

अनया हीनान्त्या नतकालोत्क्रमज्या भवति । अस्या उत्क्रमचापं नतकालो भवति । यदा उत्क्रमज्या त्रिज्यातोऽधिका तदा तस्यां त्रिज्या-(यां) विशोध्य शेषस्य चापं नवतियुतं [3]नतकालो भवति ।

अथ प्रकारान्तरम् । स्पष्टक्रान्त्यंशाः लम्बांशेषु युतोनाः कार्या उभयोर्ज्ये साध्ये ज्ययोर्योगार्द्धं हरो भवति ।

यत्र स्पष्टक्रान्तिः लम्बांशसमा भवति तदा परमोन्नतांशज्यार्द्धं हरो भवति ।

---

१. तनोः स्तेन्निज—इति पु० द्व० पाठः ।

२. क्रमज्ययां इति पुस्तक द्व० पाठः ।

३. नतङ्कालो इति पुस्तक द्व० पाठः ।

यत्र लम्बांशेभ्योऽधिका क्रान्तिस्तत्रोन्नतांशाः वारद्वयं परमतां यान्ति ।

तत्रोन्नतांशद्वयज्यान्तरार्द्धं हरो भवति ।

अथवा स्पष्टक्रान्तिज्या अक्षांशज्यागुणा त्रिज्याभक्ता लब्धं परमोन्नतांशज्यायां शोध्यं यदा स्पष्टक्रान्तिरुत्तरा स्यात् ।

दक्षिणा चेत्तदा परमोन्नतांशजीवायां योज्यं वा हरो भवति ।

स्पष्टक्रान्तिकोटिज्या लम्बांशज्यागुणा त्रिज्याभक्ता वा हरो भवति। उन्नतांशज्या परमोन्नतांशजीवायां शोध्या शेषं त्रिज्यागुणं हरभक्तं फलं नतकालस्योत्क्रमज्या भवति । अस्या उत्क्रमचापं नतकालः । पूर्वकपाले नतकालो दिनार्द्धे शोध्यः शेषमुन्नतकालो भवति । पश्चिमकपाले दिनार्द्धे योज्यः दिनगतकालो भवति । स आक्षदृक्कर्मसंस्कृतग्रहोदयांशयुतो लग्नस्य विषुवांशाः भवन्ति ।

आयनदृक्कर्मसंस्कृतोदये[1] पूर्वनतकालः शोध्यः पश्चिमनतकाले योज्यः दशमोदयो भवति । अस्मिन्नवतियुता चेल्लग्नस्य विषुवांशा भवन्ति । एभ्यः पुनर्लग्नमानेयं उक्तप्रकारेणाऽत्र शोधं पत्रे ।

## स्फुटापमांशैरित्यस्योपपत्तिः सप्तदशशकलेन—



कखगघं आयनवृत्तं कगं नाडीवलयोर्ध्वाधरसूत्रं चछं ऊर्ध्वाधरस्वस्तिकसूत्रं चं खमध्यः खघं समचिह्नसूत्रं रुभं ध्रुवद्वयनिबद्धसूत्रं सधअं द्युज्यावृत्तसूत्रं कघं लम्बांशाः कसं क्रान्त्यंशाः लम्बांशक्रान्त्यंशान्तरं घसं इदमेव परमोन्नतांशचापं तज्जीवा तसम् ।

पुनः खगं लम्बांशाः गअं क्रान्त्यंशाः अनयोर्योगः खअ योगज्या अ योगज्यान्तरज्या योगो लसं तदर्द्धं लनं वा नसं हरो भवति । घमं इष्टोन्

1. स्कृदोये इति पु० द्व० पाठः ।

तांशाः तज्ज्या मघं मघसतयोरन्तरं सदं। सनध त्रिभुजं सदट त्रिभुजं च मिथः सजातीयं यदि सनेन सधं त्रिज्या लभ्यते तदा सदेन किमिति लब्धं सटं इदं नतकालोत्क्रमज्या भवतीत्युपपन्नम्। इदं दक्षिणक्रान्तौ ज्ञेयम्।

## उत्तरक्रान्तौ तु अष्टादशक्षेत्रेणोपपत्तिरूहनीया।

घ स ट द म रु न ध थ ख ल ज ग घ्र

अत्र सजल त्रिभुजं वृत्तान्तः पतितमस्ति। एतावान् विशेषः शेषं सप्तदशक्षेत्रवत् ज्ञेयम्।

## लम्बांशतुल्या यत्र [1]क्रान्तिस्तत्रोपपत्तिरेकोनविंशतितमक्षेत्रेण।

व स क न घ घ ख त न ग म

अत्रैतावान् विशेषः सखं द्युज्यावृत्तसूत्रं सतं लम्बांशक्रान्त्यंशयोगज्या इयमेव परमोन्नतांशज्यापि भवति। लम्बांशक्रान्त्यंशयोरन्तरज्याभावः अतः सतार्द्धमेव सनं हरो जातः। शेषं पूर्ववत् ज्ञेयम्। तदेवमुपपन्नं परमोन्नतांशज्यार्द्धं हरो भवतीति।

१. त्रोपमति—इति पुस्तक द्व० पाठः।

## लम्बांशकाधिका यत्र क्रान्तिसूत्रोपपत्तिः विंशतितमक्षेत्रेण।




अत्र लम्बांशाधिकक्रान्तौ सजं द्युज्यावृत्तसूत्रं सतं लम्बांशक्रान्त्यंशयोगज्या अन्तरज्या[1] जख, सतजखयोरन्तरं सलं भवति सत जखे च परमोन्नतांशज्येऽपि भवतः तदेवमुपपन्नं परमोन्नतांशज्यार्द्धं हरो भवति।

## अथ स्पष्टापमज्याक्षलवज्यकाघ्नीत्यस्योपपत्त्यर्थं एकत्रिंशतितमं क्षेत्रं।




अथ क्षेत्रं पूर्वोक्तमेव एतावान् विशेषः। सतं परमोन्नतांशज्या अधं क्रान्तिः भथं अक्षज्या अत्र अधम त्रिभुजं अभथ त्रिभुजं च मिथः सजातीयं यदि त्रिज्यया अक्षज्या लभ्यते तदा क्रान्तिज्यया किमिति लब्धं धमं उन्मण्डलशङ्कुः स यदि दक्षिणगोले मध्यशङ्कौ योज्यते उत्तरगोले शोध्यते तदा यष्टिर्भवति स एव हर इत्युपपन्नम्। अत्र सर्वत्र हरो यष्टिर्भवतीति बुद्धिमद्भिर्ज्ञेयम्।

## अथ क्रान्तिकोटिज्यकया विनिघ्नीत्यस्योपपत्तिः[2]।

त्रिज्याकर्णे लम्बज्या कोटिस्तदा द्युज्याकर्णे का कोटिः लब्धं यष्टिः स एव हरो भवतीत्युपपन्नम्।

---

१. इतः परं क पुस्तके राजं भवति सत जेखे च परमो—इति पाठोऽस्ति खपुस्तके च राजं भवतीति राज सतयोरन्तरं सलं भवति सत जेखे च पर—पाठोऽस्ति।

२. अत्रायमाशयः। लम्बज्या अक्षज्या त्रिज्येति, इत्येकमक्षक्षेत्रम्। अपरञ्च

## अथ लग्नादुन्नतांशानयने श्लोकमाह ।

ग्राह्यो ध्रुवश्चाक्षदृगाख्यकर्म सुसंस्कृतस्योदयभागकाः ये ।
तनोर्विशोध्या ह्युदयांशकेभ्यः शेषेण खेटस्य दिनार्द्धकेन ॥ १ ॥
सहान्तरं बिम्बनताख्यकालं ( सूऽ ) तस्योत्क्रमाख्यज्यकया विहीना ।
दिनार्द्धमानोत्क्रमसिञ्जिनीतच्छेषं दिनार्द्धोत्क्रमजीवयाप्तम् ॥ २ ॥
सन्ताडितं तत्परमोन्नतांशज्ययात्र लब्धोन्नतभागजीवा ।
अस्याः धनुश्चोन्नतभागकास्ते भवन्त्यथो वच्मि बहुप्रकारैः ॥ ३ ॥
अथो भवेयुर्विषुवांशकाः ( चऽ ) ये सुसंस्कृतस्यायनदृष्टिकर्मणा ।
खमध्यलग्नस्य च येऽन्तरं तयोर्नताख्यकालः सुधियावगम्यते ॥ ४ ॥
प्राक्साधितेनाथ हरेण निघ्नी नताख्यकालोत्क्रमसिञ्जिनी च ।
त्रिभज्ययाप्तात्फलस्य कार्यं मध्योन्नतांशज्यकयान्तरं च ॥ ५ ॥
शेषं भवेदुन्नतभागजीवा तच्चापमत्रोन्नतभागकास्ते ।
अथ प्रकारं कथयामि पूर्वैः संसाधितं चोन्नतभागकानाम् ॥ ६ ॥
बाणाभावो यत्र खेटस्य तत्र कार्या जीवा खेटतन्वन्तरस्य ।
सा त्रिज्याप्ता दृग्गतिध्न्यून्नतांशज्या स्यादस्याश्चापमत्रोन्नतांशाः ॥ ७ ॥
यत्रास्ति बाणः शरकोटिसिञ्जिनी त्रिभोनलग्नग्रहजान्तरज्यया ।
गुण्या त्रिभज्या विहृता फलस्य ( यत्ऽ ) चापं तदाद्यं खनवच्युतं भवेत् ॥८॥
अथाद्यचापज्यकया विभक्ता शरज्यका त्रिज्यकया वि ( नि ) घ्नी ।
लब्धस्य चापं भवति द्वितीयं दृक्क्षेपबाणो यदि भिन्नदिक्कौ ॥ ९ ॥
द्वितीयचापस्य च दृग्गतेश्च चापस्य योगः सुधिया विधेयः ।
ऐक्ये दिशोरन्तरमेतयोश्च तृतीयचापं भवतीति वेद्यम् ॥ १० ॥
तृतीयचापज्यकया विनिघ्नी त्रिज्याहृता चाद्यधनुर्ज्यका यत् ।
लब्धं फलं तद्धनुषस्तु भागा भवन्ति ते चोन्नतभागसंज्ञाः ॥ ११ ॥
भोगो ग्रहस्य यदि लग्नसमोऽथवास्ततुल्यो भवेदिह शरज्यकया विनिघ्नः ।
दृक्क्षेपचापजगुणस्त्रिभजीवयाप्तो लब्धं भवति चोन्नतभागसंज्ञम् ॥१२॥

---

यष्टि यष्टितल द्युज्येति अनयोः, साजात्याद्नुपातः त्रिज्या कर्णे लम्बज्या कोटिः लभ्यते तदा द्युज्या कर्णे का = यष्टिः = $\frac{\text{लं० ज्या} \times \text{द्युज्या}}{\text{त्रि}}$ ।

अयमेव हरपदवाच्यः ।

भोगो ग्रह ( स्य ) यदि वित्रिभलग्नतुल्य-

श्चेत्स्यात्तदात्र शर एव धनुर्द्वितीयम् ।

तद् दृग्गतौ च खलु संस्कृतमुन्नतांशास्ते

वा भवन्ति सुधियेति विचारणीयम् ।। १३ ।।

अथैतेषां पद्यानां व्याख्या । तत्रादौ ग्राह्यो ध्रुव इत्यादिश्लोकत्रयस्य व्याख्या । आक्षदृक्कर्मसंस्कृतध्रुवको ग्राह्यः । तस्य उदयांशाः लग्नोदयांशेभ्यः शोध्याः । शेषस्य ग्रहदिनार्द्धेनान्तरं कार्यं स बिम्बनतकालो भवति । तस्योत्क्रमज्या दिनार्द्धोत्क्रमज्यायां शोध्या । शेषं परमोन्नतांशज्यया गुणितं दिनार्द्धोत्क्रमज्यया भक्तं लब्धा उन्नतांशज्या अस्याश्चापं उन्नतांशाः ।। ३ ।।

अथान्यत्प्रकारान्तरं श्लोकत्रयेणाह । अथो भवेयुरिति । आयनदृक्कर्मसंस्कृतस्य विषुवांशाः ग्राह्याः । तेषां दशमविषुवांशैरन्तरं कार्यम् । स नतकालो भवति । अस्योत्क्रमज्या पूर्वानीतहरेण गुणिता त्रिज्याभक्ता लब्धस्य परमोन्नतांशजीवया सहान्तरं कार्यम् । शेषमुन्नतांशज्या अस्याश्चापमुन्नतांशा इति ।। ६ ।। अथान्यत्प्रकारान्तरमाह । बाणाभाव इत्यादिभिः सप्तश्लोकैः । यदा ग्रहस्य शराभावस्तदा लग्नग्रहान्तरज्या दृग्गतिगुणा त्रिज्याभक्ता लब्धमुन्नतांशज्या भवति । अस्याश्चापमुन्नतांशाः ।

यदा शरः स्यात्तदा शरकोटिज्या वित्रिभलग्नग्रहभोगान्तरज्यागुणा त्रिज्याभक्ता फलस्य चापं नवतिशुद्धं प्रथमचापसंज्ञं भवति । अथ शरज्या त्रिज्यागुणा प्रथमचापज्याभक्ता लब्धस्य चापं द्वितीयचापं भवति । शरदृक्क्षेपयोः भिन्नदिक्त्वे दृग्गतिचापं द्वितीयचापयोर्योगः कार्यः । दिगैक्येऽन्तरं कार्यं तृतीयचापं भवति । अस्य ज्या प्रथमचापज्यागुणा त्रिज्याभक्ता फलचापमुन्नतांशाः ।

यदि ग्रहः लग्नतुल्योऽथवा सप्तमतुल्यो भवति तदा शरज्या दृक्क्षेपज्यागुणा त्रिज्याभक्ता फलचापमुन्नतांशाः ।

अथ च ग्रहभोगः वित्रिभलग्नतुल्यो भवति तदा शर एव द्वितीय च

तत् दृग्गतौ संस्कार्यं उन्नतांशाः भवन्ति ।

## [1]यत्रास्तिबाण इत्यस्योपपत्तिर्द्वाविंशतितमक्षेत्रेण—




कवजदं क्षितिजं हं खमध्यः कबजं क्रान्तिवृत्तं रुं कदम्बः वहदं दृक्क्षेपवलयं जं लग्नं तं बिम्बं रुतलं कदम्बवृत्तं हतअं दृग्वलयं मतजं लग्नबिम्बोपरिगतचलवृत्तं तलः शरः रुतं शरकोटिः हतं नतांशाः अतमुन्नतांशाः हबं दृक्क्षेपः बवं दृग्गतिः बं वित्रिभं लं स्पष्टग्रहः लबमन्तरं यदि रुलज्यया लबज्या प्राप्यते तदा रुतेन तमं प्राप्यते। एवं नवतेः शोध्यं शेषं तजं प्रथमचापम्। प्रथमचापेन तजेन तलं प्राप्यते तदा मजेन त्रिज्यया मबं प्राप्यते अस्य बवस्य योगः मवसंज्ञं तृतीयचापं मजेन मवं प्राप्यते तदा तजेन तअं प्राप्यते। तअं उन्नतांशाः।

---

१. अत्रायमाशयः। तमज्या = $\frac{\text{लबज्या} \times \text{रुतज्या}}{\text{रुलज्या}}$ =

$$\frac{\text{वित्रिभलग्नग्रहभोगान्तरज्या} \times \text{शरकोज्या}}{\text{त्रि}}$$

अस्याश्चापं = चा। ९० − चा = प्रथमचा०।

मबज्या = $\frac{\text{तलज्या} \times \text{मजज्या}}{\text{तजज्या}}$ = $\frac{\text{श० ज्या} \times \text{त्रि}}{\text{प्रथ० चा० ज्या}}$ =

द्वितीयचापज्यास्याश्चापं=द्वि० चा०। द्वि० चा + बव=मव=तृतीयचापम्।

तअज्या = $\frac{\text{मवज्या} \times \text{तजज्या}}{\text{मजज्या}}$ = $\frac{\text{तृ० चा० ज्या} \times \text{प्र० चा० ज्या}}{\text{त्रिज्या}}$

अस्याश्चापमुन्नतांशाः सूत्रं चोपपन्नम्।

## भोगो ग्रहस्येत्यस्योपपत्तिः त्रयोविंशतितमक्षेत्रेण ।




कवजदं क्षितिजं ह खमध्यं दरुवं क्रान्तिवृत्तं बं कदम्बः कहजं दृक्चेप-वलयं अं बिम्बं बअवं कदम्बवृत्तं अलं दृग्वलयं वं लग्नं तदेव ग्रहध्रुवकः अवं शरः अलं उन्नतांशाः बजं दृक्क्षेपः कुतः [1]बरुं हजं च नवत्यंशमितं तुल्यमस्ति । उभयोस्तुल्ययोर्बहतुल्यं शोधितम् । (चेतऽ) शेषं हरुं बजं तुल्यं भवति । हरुं दृक्क्षेपो भवति बजमपि दृक्क्षेपः बवेन बजं प्राप्यते तदा अवेन अलं प्राप्यते त एवोन्नतांशाः ।

अथ यदि लग्नस्थाने ( [2]स्पष्टस्थाने आयनदृगाकर्मसंस्कृतस्यलग्नविषुवांशाः गृह्यन्ते स्पगृस्थाने आयनदृगाकर्मसंस्कृतस्य विषुवांशा गृह्यन्ते ) आयनदृक्कर्मसंस्कृतस्य विषुवांशा गृह्यन्ते शरस्थाने स्पष्टक्रान्तिः गृह्यते दृक्क्षेपस्थाने अक्षांशाः गृह्यन्ते तदाप्युक्तप्रकारेण उन्नतांशा आयान्ति ।

इति लग्नादुन्नतांशानयनम् ।

## अथ ग्रहयोरन्तरचापज्ञानमाह ।

नभोगयोश्चेच्छरयोरभावो विस्पष्टखेटोऽन्तरमन्तरं स्यात् ।
ग्रहस्य चैकस्य शरस्य सत्वेऽन्यस्याप्यभावे त्वथवोभयोश्च ॥ १ ॥
बाणस्य सत्वेऽन्तरचापमत्र खेचारिणोः पञ्चविधं ब्रवीमि ।
नभोगयोः स्याद् ध्रुवकस्य साम्यं यदा खनन्दाल्पकमन्तरं च ॥ २ ॥
खनन्दभागोन्मितमन्तरं वा भार्द्धांशकेभ्योऽनधिकं तथा च ।
खनन्दभागाधिकमन्तरं वा भार्द्धांशतुल्यं विवरं यदा वा ॥ ३ ॥

---

१. सहं हवं च इति पुस्तक द्व० पाठः ।
२. कोष्ठान्तर्गतस्याशयो न स्पष्ट इति विद्वद्भिर्विचारणीयम् ।

अथैकस्य शरासत्वे शरसत्वपरस्य च ।
द्वयोः समकलत्वं चेच्छर एवान्तरं भवेत् ॥ ४ ॥

भार्द्धांशतुल्यं ध्रुवकान्तरं चेद् बाणोनभार्द्धांशमितोन्तरं स्यात् ।
स्पष्टान्तरं खाङ्कमितं यदा स्याद् बिम्बान्तरं चापि तदेव वेद्यम् ॥५॥

यदा नवत्यूनकमन्तरं स्याद् विस्पष्टयोस्तच्छरकोटिजीवा ।
त्रिज्याहृता चान्तरकोटिजीवा गुणाप्तचापं नवतेर्विशोध्यम् ॥ ६ ॥

स्पष्टान्तरं स्याद्यदि खाङ्कतोऽधिकं फलस्य चापं नवतौ युतं भवेत् ।
विश्लेषचापं ग्रहबिम्बयोरथो पञ्चप्रकारा उभयोः शरे सति ॥७॥

स्पष्टध्रुवकयोः साम्ये दिक्साम्ये शरयोस्तथा ।
तत्र बाणान्तरं खेटबिम्बयोरन्तरं भवेत् ॥ ८ ॥

यदा बाणौ भिन्नदिक्कौ योगः स्याद् बाणयोस्तदा ।
बिम्बद्वयान्तरधनुर्गोलविद्भिरुदाहृतम् ॥ ९ ॥

यदि स्पष्टयोरन्तरं भार्द्धभागै समं स्याच्छरौ चैकदिक्कौ भवेताम् ।
तदा बाणयोगश्च भार्द्धांशशुद्धौ भवेदन्तरं बिम्बयोः शेषकं यत् ॥१०॥

यदा भिन्नदिक्कौ शरौ तत्र [1]बाणान्तरं भार्द्धभागेषु संशोधितं च ।
यदत्रावशेषं तु विश्लेषचापं [2]भवेत्खेटयोरन्तरे तारकाणाम् ॥ ११ ॥

तुल्यौ यदा शरौ स्यातां खेटयोरन्तरं तदा ।
भार्द्धभागसमं प्रोक्तं गोलागमविशारदैः ॥ १२ ॥

यदा खेटयोरन्तरं खाङ्कतुल्यं तदा चैकबाणस्य जीवाविनिघ्नी ।
द्वितीयस्य बाणज्यया त्रिज्ययाप्ता विलब्धस्य चापं खनन्दांशशुद्धम् ॥१३॥

द्वयोर्बाणयोरेकदिक्त्वेथ भिन्ने दिशौ बाणयोश्चेद्युतं तन्नवत्या
भवेत्खेटयोः स्पष्टयोरन्तरं तन्निरुक्तं च गोलागमज्ञैः पुराणैः ॥ १४ ॥

यद्यन्तरं स्पष्टखगद्वयस्य भवेन्नवत्यूनमथोऽधिकं च ।
एकस्य कार्या शरकोटिजीवा स्पष्टान्तरज्यागुणिता विभक्ता ॥ १५ ॥

त्रिभज्ययाप्तस्य फलस्य चापं संशोधितं तन्नवतौ च शेषम् ।
चापं भवेत्तत्प्रथमाभिधानं तस्यैव बाणज्यकया विनिघ्नी ॥ १६ ॥

---

१. बाणातरं इति पुस्तक द्व० पाठः ।

२. खंरे इति क पुस्तक पाठः ।

त्रिज्याद्यचापज्यकया विभक्ता फलस्य चापं भवति द्वितीयम् ।
स्पष्टान्तरं स्यात्खनवोनमेकदिक्कौ शरौ चेद् ग्रहयोर्भवेताम् ॥ १७ ॥
स्पष्टान्तरं वा खनवाधिकं स्याद् बाणौ यदा भिन्नदिशौ भवेताम् ।
द्वितीयखेटस्य च बाणकोटौ द्वितीयचापं खलु योजनीयम् ॥ १८ ॥
तेन[1] भवेत्तद्धि तृतीयचापं स्पष्टान्तरं चेन्नवतेरथोनम् ।
विभिन्नदिक्कौ च शरौ भवेतां स्पष्टान्तरं शून्यनवाधिकं च ॥ १९ ॥
बाणौ भवेतां यदि वैकदिक्कौ द्वितीयचापस्य सहान्तरं च ।
द्वितीयखेटस्य शरस्य कोट्या कार्यं भवेत्तद्धि तृतीयचापम् ॥ २० ॥
अथाद्यचापज्यकया विनिघ्नी तृतीयचापोद्भवसिञ्जिनी च ।
त्रिज्याहृताप्तस्य फलस्य चापं चतुर्थचापं भवतीति वेद्यम् ॥ २१ ॥

स्पष्टान्तरं भवति यत्र खनन्दतोनं
बाणं तथैव भवतो यदि चैकदिक्कौ ।
दिग्भिन्नता भवति वा शरयोस्तथ
चेत्स्याद्वाणकोटिरधिकाऽत्र द्वितीयचापात् ॥ २२ ॥

स्पष्टान्तरं स्यान्नवतेरथोधिकं बाणौ तथैकां दिशिमाश्रितौ यदा ।
द्वितीयचापं शरकोटितोऽधिकं तदा तुरीयं नवतेर्विशोधयेत् ॥ २३ ॥
यदत्र शेषं ग्रहबिम्बयोस्तद्[2] विश्लेषचापं भवतीति वेद्यम् ।
स्पष्टान्तरं स्यात् खनवोनमत्र बाणावुभौ भिन्नदिशि स्थितौ वा ॥ २४ ॥
स्याद्वाणकोटेरधिकद्वितीयचापं तथा स्पष्टखगान्तरं च ।
खाङ्काधिकं भिन्नदिशिस्थबाणौ वा भिन्नदिक्कौ शरकोटिरत्र ॥ २५ ॥
द्वितीयचापादधिका तदा तु चतुर्थचापं नवतौ तु योज्यम् ।
यदत्र शेषं ग्रहबिम्बयोस्तद् विश्लेषचापं भवतीति वेद्यम् ॥ २६ ॥

## अथैषां श्लोकानामर्थो लिख्यते ।

यद्युभयोः शराभावस्तदा स्पष्टयोरेवान्तरमन्तरचापं भवति। अथैकस्य शरसत्वेऽन्यस्य शराभावे अथोभयोः शरसत्वे चापान्तरस्य

---

१. तेमो इति कपुस्तके पाठः ख पुस्तके च तोर्नो इति ।

२. बिम्बयस्तद् इति पु० द्व० पाठः ।

ज्ञानं पञ्चप्रकारैः[1] तद्यथा उभयध्रुवकसाम्यमित्येकः। (स्पष्टयोरन्तरं नवत्यूनमिति द्वितीयः)। स्पष्टयोरन्तरं नवतिरिति तृतीयः। स्पष्टयोरन्तरं नवत्यूर्ध्वंभार्द्धांशोनमिति चतुर्थः। भार्द्धांशस(म)मिति पञ्चमः।

## एकस्य शरसत्वेऽन्यस्य शराभावे तावल्लिख्यते।

उभयोः[2] समकालत्वे तयोः शर एवान्तरचापम्। यदि स्पष्टयोरन्तरं १८० तदा शरं भार्द्धांशेषु संशोध्य शेषं तयोरन्तरं भवति।

यदि स्पष्टयोरन्तरं नवतिस्तदा तयोः सशरविशरयोरन्तरं नवतिरेव। यदि नवत्यूनमधिकं वा स्पष्टयोरन्तरं तदा शरकोटिज्या [3]अन्तरकोटिज्यागुणा त्रिज्याभक्ता फलचापं नवतिमध्ये शोध्यं यदि स्पष्टान्तरं नवत्यूनम्। यदि स्पष्टान्तरं नवत्यधिकं तदा फलचापं नवतियुतं उभयोरन्तरचापं भवति।

## उभयोः सरसत्वे पञ्चप्रकाराः प्रदर्श्यन्ते।

उभयोः स्पष्टसमत्वं उभयोः शरावेकदिक्कौ तदा शरान्तरमेव तयोरन्तरचापम्। यदि भिन्नदिक्कौ तदा शरयोग एव ग्रहान्तरचापम्।

उभयोः स्पष्टयोरन्तरं १८० शरावेकदिक्कौ भवतस्तदा शरयोगो भार्द्धांशशुद्धः शेषं तयोः ग्रहयोरन्तरम्।

यदि भिन्नदिशौ शरौ तदा शरान्तरं भार्द्धांशशुद्धं शेषं ग्रहयोरन्तरम्। यदि शरौ तुल्यौ तदा भार्द्धांशमितमेवान्तरम्।

यदि स्पष्टान्तरं नवतिमितं तदा एकशरज्या द्वितीयशरज्यया गुण्या त्रिज्याभक्ता फलचापं नवतिशुद्धं कर्त्तव्यं यदि शरावेकदिशौ भवतः। भिन्नदिशौ चेन्नवतियुतं तद् ग्रहयोरन्तरं भवति।

अथ स्पष्टान्तरं न (व) न्यूनमधिकं वा भवति (तदा) एकस्य शरकोटिज्या स्पष्टान्तरज्यागुणा त्रिज्याभक्ता फलचापं नवतिशुद्धं शेषं प्रथमचापम्। तस्यैव शरज्या त्रिज्यागुणा प्रथमचापज्याभक्ता फलचापं द्वितीयचापम्।

---

१. प्रकारः इति पुस्तक द्व० पाठः।

२. कलत्वे इति पुस्तक द्व० पाठः।

३. अन्तरं कोटिज्या त्रिज्याभ—इति क पुस्तके पाठः।

अथ स्पष्टान्तरं नवत्यूनं शरावेकदिशौ स्पष्टान्तरं नवत्यधिकं शरौ भिन्नदिशौ तदा द्वितीयस्य शरकोटौ द्वितीयफलचापं योज्यं इदं तृतीय-चापम् ।

यदि स्पष्टान्तरं नवत्यूनं शरौ भिन्नदिशौ भवतः स्पष्टान्तरं नवत्य-धिकं शरावेकदिशौ तदा द्वितीयचापस्य द्वितीयशरकोटेरन्तरं कार्यं इदमपि तृतीयचापम् । तृतीयचापज्या प्रथमचापज्यागुणा त्रिज्याभक्ता फलचापं चतुर्थचापम् । यत्र स्पष्टान्तरं नवत्यूनं शरावेकदिशौ वा भिन्नदिशौ शर-कोटिरधिका द्वितीयचापात् ।

अथ स्पष्टान्तरं नवत्यधिकं शरावेकदिशौ द्वितीयचापमधिकं शरकोटे-स्तदा चतुर्थचापं [1]नवतिशुद्धम् । शेषमुभयोर्ग्रहयोरन्तरम् । स्पष्टान्तरं नवत्यूनं ( शरौ ) उभौ भिन्नदिशौ द्वितीयचापमधिकं शरकोटेः। स्पष्टान्तरं नवत्यधिकं उभौ भिन्नदिशौ वा एकदिशौ द्वितीयचापाच्छर-कोटिरधिका तदा चतुर्थचापं नवतियुतं तद् ग्रहयोरन्तरं भवति ।

## यदा खेटयोरित्यस्योपपत्तिर्चतुर्विंशतितमक्षेत्रेण ।




कखगघं कदम्बवृत्तं वं ग्रहस्थानं हं ध्रुवस्थानं द्वितीयग्रहस्य रुं ग्रहस्थानं घहखं क्रान्तिवृत्तं कगौ कदम्बौ कहफ[2] कदम्बवृत्तं वरुतं ग्रहान्तरवृत्तं घह चापं नवतिमितं स्पष्टान्तरं व स्थानं ध्रुवं प्रकल्प्य नवत्यंशान्तरे वृत्ते कृते वफं घग चापे नवतिमिते भवतः घक चापमपि नवतिभागमिति । घव चापं व ग्रहस्य शरः अयं गफ तुल्यः। हरु चापं द्वितीयग्रहस्य शरः । हरुत त्रिभुजं हगफ त्रिभुजं च सजातीयम्। यदि गहे ( थे ऽ ) न गफं लभ्यते तदा रुहेन किमिति ( लब्धं ) रुतं रुत तवे शोध्यं वा योज्यं ( तथा ऽ ) तदा वरुं उभयोरन्तरचापं भवति। इत्युपपन्नम् ।

---

१. भवतीति पुस्तक द्व० पाठः ।

२. बहग इति पुस्तक द्व० पाठः ।

## ग्रहान्तरं नवत्यूनमधिकं वा इत्यस्योपपत्तिः । पञ्चविंशदादिक्षेत्रत्रयेणेति[1] ।




कखगघं कदम्बवृत्तं वं ग्रहः हं ध्रुवः कतगं कदम्बवृत्तं द्वितीयग्रहस्य तं ग्रहः खहघं क्रान्तिवृत्तं कगं कदम्बौ। व ध्रुवं कल्प्य नवतिमितं वृत्तं लहनसंज्ञं कार्यम्। वलं वनं उभौ नवत्यंशमितौ वतयं ग्रहान्तरवृत्तं वतमन्तरचापं हतअ वृत्तं प्रथमकदम्बवृत्तध्रुवात् द्वितीयग्रहोपरि गतं कार्यम्। घं स्पष्टस्थानं व ग्रहस्य। घवं शरो व ग्रहस्य मं स्पष्टः त ग्रहस्य मतं शरः त ग्रहस्य। घमग त्रिभुजं अतग त्रिभुजं उभे सजातीये घमं स्पष्टयोरन्तरम्। नवतिमितेन गमेन मघं लभ्यते तदा गतेन शरकोट्या किमिति लब्धं तअं इदं नवतिशुद्धं शेषं तह संज्ञं प्रथमचापम्। घअह त्रिभुजं तमह त्रिभुजं उभे सजातीये हतेन तमं प्राप्यते तदा हअेन अघमिति द्वितीयचापम्।

अघ घले संयोज्य [2]तृतीयचापं अल संज्ञं भवति। हअल त्रिभुजं हतय त्रिभुजं उभे सजातीये यदि (ह) अेन अलं प्राप्यते तदा हतेन तयमिति चतुर्थचापम्। तयं नवतिशुद्धं शेषं त (व) संज्ञमन्तरं ग्रहयोः।

हतं प्रथमचापं घकं वकं द्वितीयचापं घकं घलयोर्योगान्तरं वा फल संज्ञं तृतीयचापं वफ वनयोर्योगोन्तरं [3]फनसंज्ञमपि तृतीयचापम्। हफलं हतयं हफनं एतानि सजातीयानि त्रिज्यया फलजीवा वा फनजीवा तृतीयचापस्य प्राप्यते तदा हत प्रथमचापज्यया किमिति तय जीवा चतुर्थचापस्य प्राप्यते। तय संज्ञं चतुर्थचापं वयमित नवतौ युतमूनितं वा तव संज्ञमन्तरचापं भवति ग्रहयोः।

## अथ यदा ग्रहयोः शरयोः समत्वं तदान्तरचापानयनमाह।

समशरौ समदिक्कौ तदा अन्तरार्द्धज्या शरकोटिज्यागुणा त्रिज्या भक्ता फलचापं द्विगुणं अन्तरचापं भवति।

---

१. त्रयेति इति पुस्तक द्व० पाठः।
२. द्वितीयचापमीति इति पुस्तक द्व० पाठः।
३. फल इति पु० द्व० पाठः।

यदि समशरौ भिन्नदिक्कौ तदा ग्रहान्तरार्द्धकोटिज्या शरकोटिज्या गुणा त्रिज्याभक्ता फलचापं द्विगुणं भार्द्धांशशुद्धं अन्तरचापं भवति ।

## अत्रोपपत्तिः

( अष्टाविंशतितम क्षेत्रेण— )



कगजं क्रान्तिवृत्तचापं दहौ कदम्बौ वतौ अभीष्ट-ग्रहौ एकदिक्समशरौ । अ चिह्नं ग्रहः भिन्नदिक्सम-शरोऽस्ति । तत्रान्तरचापज्ञानम् । वतमन्तरचापं एक-दिक्समशरग्रहयोरस्ति । भिन्नदिक्समशरयोस्तु वअं संज्ञं अन्तरचापमस्ति । कज चिह्नचापं स्पष्टग्रहान्त-रार्द्धचापमस्ति । दवहं प्रथमकदम्बवृत्तं दगहं स्पष्टान्तरार्द्धकदम्बवृत्त-चापम् । दतहं अत ग्रहयोः कदम्बवृत्तम् । कहग त्रिभुजं वहरु त्रिभुजं च सजातीयम् । कहजीवया कग जीवा लभ्यते तदा हव जीवया किमिति लब्धा वरु जीवा तस्य चापं द्विगुणं वत संज्ञम् ।

कगव त्रिभुजं जगअ त्रिभुजं ( च ) सजातीयम् । त्रिज्यया कग कोटिज्या लभ्यते तदा वक कोटिज्यया किमिति लब्धा गव कोटिज्या तस्याश्चापं द्विगुणं भार्द्धांशशुद्धं अव संज्ञमन्तरचापं भवति ।

## अथ प्रकारान्तरमन्तरचापानयने[1] ।

स्पष्टग्रहस्थाने आयनदृक्कर्मसंस्कृतोदयांशाः ग्राह्याः । शरस्थाने स्पष्टक्रान्तिग्राह्या उक्तवत् क्रिया कार्या अन्तरचापं भवति ।

## अथाभीष्टनगरान्तरचापानयनमाह ।

देशान्तरं स्पष्टग्रहान्तरं कल्पनीयं अक्षांशान् शरांशान् प्रकल्प्य पूर्वोक्तप्रकारेण क्रियायां कृतायां सत्यां नगरान्तरचापज्ञानं भवति ।

## अथाक्षज्याक्रान्ति ( ज्या ) ज्ञाने नतांशेभ्यो नतकालानयनमाह ।

गुणः खत्र्यंशगुणितः शङ्कुः सैकः समन्वितः ।
गुणवर्गेण तद्भक्ता नतांशज्या कृतिस्ततः ॥ १ ॥

१. चापनयने इति पु० द्व० पाठः ।

पदमिष्टापमज्यासौ गुणघ्नीष्टपलज्यका ।
इष्टाक्षज्याक्षसिञ्जिन्योर्वर्गान्तरपदं हतम् ॥ २ ॥
त्रिज्यया [1]लम्बया भक्तं नतांशज्यागुणं हृतम् ।
इष्टाक्षज्यकया निघ्नं त्रिज्यया द्युज्यया हृतम् ॥ ३ ॥
तच्चापं [2]षट्हृतं [3]नाड्यो नतकालसमुद्भवाः ।

अथैतेषां श्लोकानामर्थो लिख्यते ।

अक्षज्या क्रान्तिज्यया भाज्या फलं गुणो भवति । गुणकस्य त्रिंशदंशेन गुणितः शङ्कुः सैकः गुणवर्गेण समन्वितश्च कार्यः । तद्भक्ता नतांशज्याकृतिः कार्यः, अस्याः पदं इष्टापमज्या भवेत् । असौ इष्टापमज्या गुणघ्नी इष्टाक्षज्या भवति । इष्टाक्षज्यावर्गअक्षज्यावर्गयोरन्तरस्य मूलं त्रिज्यागुणं लम्बज्याभक्तं पुनर्नतांशज्यागुणं इष्टाक्षज्यकया भक्तं पुनस्त्रिज्यागुणं द्युज्याभक्तं कार्यम् । फलस्य चापं षड्भक्तं नतकालसमुद्भवा नाड्यो भवन्ति ।

## [4]अस्योपपत्तिरेकोनत्रिंशत्तमेन क्षेत्रेण ।




[5]कखगघं दृग्वृत्तार्द्धं कघं व्यासः कचं व्यासार्द्धं कखं इष्टक्रान्तिः दृग्वृत्ते कगं दक्षिणगोले नतांशाः खजं इष्टक्रान्तिज्या छगं नतांशज्या । खथं इष्टाक्षज्या इयं साध्यास्ति । चगं त्रिज्या अस्यां जरु लम्बोऽस्ति । अस्मिन् खथं लम्बो भवति । चगछ त्रिभुजं जरुच खयज त्रिभुजं एतानि त्रिभुजानि सजातीयानि सन्ति । अक्षज्या भुजः खमध्यात् दृग्वृत्ते इष्टाक्षज्या तुल्यं नतांशखण्डं कर्णः याम्योत्तरवृत्तान्नाडीवृत्तखण्डं कोटिः इदमेकम् ।

---

१. लम्बज्यया इत्यर्थः ।
२. हृता इति पु. द्व. पा. ।
३. नाथो इति पु. द्व. पा. ।
४. त्रिंशेन चे—इति पु. द्व. पा. ।
५. खखगघं इति पु. द्व. पा. ।

अथ द्वितीयं नाडीवृत्तात्क्रान्तिज्या भुजः नाडीवृत्तखण्डं कोटिः इष्टक्रान्तिज्या कर्णः इमे सजातीये। अत्र क्रान्तिज्याक्षज्ययोर्निष्पत्तिः सैवेष्टक्रान्तिज्येष्टाक्षज्ययोर्निष्पत्तिर्भविष्यति। तस्मादक्षज्या क्रान्तिज्यया भाज्या फलं गुणसंज्ञं भवति। तेनेष्टक्रान्तिज्या गुणिता इष्टाक्षज्या भवति दक्षिणगोले इष्टक्रान्तिज्येष्टाक्षज्ययोर्योगेन। उत्तरगोलेऽन्तरेण नतांशो भवति। तत्रेष्टक्रान्तिज्या अज्ञाताऽस्ति। अस्याः प्रमाणं १ या।

अथ चापान्तरज्यानयनप्रकारेणेष्टाक्षज्या दक्षिणगोले साध्यते।

तत्र [1]पूर्वोक्तक्षेत्रे गचं ६० कर्णे चछं उन्नतज्या लभ्यते तदा यावत्तावता किमिति लब्धं जयं। या० १ उ० १। इदं गुणगुणितयावद्रूप खथ
―――――
त्रि

रेखा तुल्य रुय रेखा युतं जातं जरु (कऽ) रेखा [2]प्रमाणम् = (या × उ० १ + या० त्रि० गु) अथास्याः वर्गः (यावर्ग० उन्न० व० १
――――――――
त्रि

याव० उ० त्रि गु० २)[3] प्रकारान्तरेण जरु वर्गः साध्यते। [4](या० व०
―――――
त्रि० व० गु० व० १) गचत्रिज्यावर्गेण गछरूपनतज्या लभ्यते तदा
――――――
त्रि० व० १

१. पूर्वोक्तिक्षेत्रे इति पु. द्व. पा.।

२. अत्रायमाशयः। जय = $\frac{\text{शं} \times \text{या}}{\text{त्रि०}}$। जय + खथ = जरु = $\frac{\text{या०} \times \text{शं} +}{\text{त्रि}}$

या० गु = जरु = $\frac{\text{या०} \times \text{श} + \text{या०}\ \text{गु०}\ \text{त्रि}}{\text{त्रि}}$। $\text{जरु}^2$ =

$\frac{\text{या}^2 \times \text{श}^2 + 2\ \text{या}^2 \times \text{श०}\ \text{गु०}\ \text{त्रि} + \text{या०}^2\ \text{गु०}^2\ \text{त्रि}^2}{\text{त्रि}^2}$।

३. कोष्ठान्तर्गतपाठोऽशुद्धः। शुद्धस्वरूपन्तु उपरिलिखितमस्ति।

४. कोष्ठान्तर्गतपाठो निरर्थकः।

जचरूपेष्टक्रान्तिकोटिज्यावर्गेण किमिति लब्धं [1]जरुवर्गः [2]$\text{त्रि}^{2} \times \text{नज्या}^{2}_{\circ} - \text{नज्या}^{2}_{\circ} \text{ या}^{2}$ एतौ जरुवर्गौ समौ। अत्रोपरितनपक्षे उन्नतज्यावर्गस्य स्वरूपसिद्धं[3] $\text{त्रि}^{2} - \text{नज्या}^{2}$ एतौ त्रिज्यापर्वर्तितौ जातौ पक्षौ [4]$\left(\dfrac{\text{या}^{2} + \text{शं या}_{\circ}\text{ गु}_{\circ} + \text{या}^{2}\text{ गु}^{2}}{३०}\right)$। अत्र उपरितनपक्षे गुणत्रिंशांशेत्यादिना हर $\dfrac{}{\text{नज्या}^{2}}$ उत्पन्नः तेन रूपशेषे भक्ते फलमूलं यावत्तावन्मानं [5]इष्टापमज्या भवति। इत्युपपन्नम्।

---

१. $\text{जरु}^{2} = \dfrac{\text{गछ}^{2} \times \text{जच}}{\text{गच}^{2}} = \dfrac{\text{नज्या}^{2} \times \text{इ}_{\circ}\text{ द्युज्या}^{2}}{\text{त्रि}^{2}} = \dfrac{\text{नज्या}^{2}(\text{त्रि}^{2} - \text{या}^{2})}{\text{त्रि}^{2}} = \dfrac{\text{नज्या}^{2} \times \text{त्रि}^{2} - \text{नज्या}^{2} \times \text{या}^{2}}{\text{त्रि}^{2}}$।

२. $\dfrac{\text{या}_{\circ}\text{ व}_{\circ}\text{ न}_{\circ}\text{ व १ न}_{\circ}\text{ व}_{\circ}\text{ त्रि}_{\circ}\text{ व}_{\circ}\text{ १}}{\text{त्रि}_{\circ}\text{ व}_{\circ}}$। इति पु० द्व० पाठः।

३. न० व० त्रि० व० १ इति पु. द्व. पा.।

४. $\dfrac{\text{या}_{\circ}\text{ व गु}_{\circ}\text{ व}_{\circ}\text{ १ या}_{\circ}\text{ व १ या}_{\circ}\text{ व}_{\circ}\text{ उ}_{\circ}\text{ गु}_{\circ}\text{ १ ३०}}{\text{नच १}}$ इति पु. द्व. पा.।

$\dfrac{}{२}$

५. अत्र पूर्वोक्त जरु मानाभ्यां समीकरणेन इष्टापमज्या साध्यते। यतो हि इयं अज्ञाताऽस्ति। अस्याः प्रमाणं या इति कल्पितमस्ति।

$$\text{जरु}^{2} = \frac{\text{श}^{2}_{\circ}\text{ या}^{2} + २\text{ शं}_{\circ}\text{ या}^{2}_{\circ}\text{ त्रि}_{\circ}\text{ गु}_{\circ} + \text{त्रि}^{2}_{\circ}\text{ या}^{2}_{\circ}\text{ गु}^{2}}{\text{त्रि}^{2}}$$

[१]पुनरियं इष्टामज्या गुणगुणिता सतीष्टाक्षज्या भवतीति पूर्वं प्रतिपादितमेव। [२]इष्टाक्षज्याक्षज्यावर्गान्तरपदं तु लम्बज्याग्रे भवति। अपेक्षितन्तु त्रिज्याग्रे। तदर्थमनुपातः लम्बज्याग्रे इदं त्रिज्याग्रे किमिति फलचापं नाडीवृत्त-दृग्वृत्तसंपातादायनवृत्तपर्यन्तं नाडीवृत्त [३]खण्डं भवति। इदन्तु

$$= \frac{\text{नज्या}^2 \circ \text{त्रि}^2 - \text{नज्या}^2 \times \text{या}^2}{\text{त्रि } २}$$

$$= \text{या}^2 (\text{श}^2 + २\text{शं}\circ \text{त्रि} \times \text{गु} + \text{त्रि}^2 \circ \text{गु}^2 \circ + \text{नज्या}^2) = \text{नज्या}^2 \circ \text{त्रि}^2$$

$$\text{या}^2 = \frac{\text{नज्या}^2 \circ \text{त्रि}^2}{\text{श}^2 + २\ \text{शं}\circ\ \text{त्रि} \times \text{गु} + \text{त्रि}^2 \circ\ \text{गु}^2 + \text{नज्या}^2}$$ । अत्र $\text{शं}^2 = \text{त्रि}^2 - \text{नज्या}^2$ उत्थापनेन

$$\text{या}^2 = \frac{\text{नज्या}^2 \circ \text{त्रि}^2}{\text{त्रि}^2 - \text{नज्या}^2 + २\ \text{शं}\ \text{त्रि} \times \text{गु} + \text{त्रि}^2 \circ\ \text{गु}^2 + \text{नज्या}^2}$$ । त्रिज्यावर्गेण भक्ते सति

$$\text{या}^2 = \frac{\text{न}\circ\ \text{ज्या}^2}{\frac{१ + २\ \text{शं}\circ\ \text{त्रि} \times \text{गु}\circ}{\text{त्रि}^2} + \frac{\text{गु}^2 \times \text{त्रि}^2}{\text{त्रि}^2}}$$ । अत्र त्रिज्या = ६०

$$\text{या}^2 = \frac{\text{नज्या}^2}{\frac{१ + \text{शं} \times \text{अज्या}}{३० \times \text{क्रांज्या}} + \frac{\text{अज्या}^2}{\text{क्रां}\circ\ \text{ज्या}^2}}$$

$$\text{या} = \sqrt{\frac{\text{नज्या}^2}{\frac{१ + \text{शं} \times \text{अज्या}}{३० \times \text{क्रांज्या}} + \frac{\text{अज्या}^2}{\text{क्रां}\circ\ \text{ज्या}^2}}} = \sqrt{\frac{\text{नज्या}^2}{\frac{१ + \text{शं} \times \text{गु}}{३०} + \text{गु}^2}}$$ ।

१. इति अ० ज्या = इ० क्रा० × गु ।

२. लं० ज्याकोटौ परिणतनाडीवृत्तीयचापज्या $= \sqrt{\text{इ}\circ\ \text{अ}\circ\ \text{ज्या}^2 - \text{अज्या}^2}$

३. नाडीवृत्तीयचापज्या =

$$\sqrt{\frac{\text{इ}\circ\ \text{अ}\circ\ \text{ज्या} - \text{अज्या}^2}{\text{लं}\circ\ \text{ज्या}}} \times \text{त्रिज्या}$$ ।

इष्टाक्षांशज्याग्रेऽस्ति । नतांशज्याग्रे करणार्थं [४]पुनरनुपातः इष्टाक्षज्याग्रे इदं तथा नतांशज्याग्रे किमिति लब्धं [५]भसदृशवृत्तखण्डस्य बिन्दा (वा) यनवृत्तपर्यन्तं स्थितस्य ज्यारूपं भवति । [६]पुनरहोरात्रवृत्तेऽस्य चापकरणार्थमनुपातः द्युज्या प्रमाणेनेदं तदा त्रिज्या प्रमाणेन किमिति फलस्य चापं नतकालो भवतीति उपपन्नम् ।

गुणत्रिंशांशेति उत्तरगोले चापैक्यज्या प्रकारेणोपपत्तिर्ज्ञेया । श्रीमहाराजाधिराजमहाराजजयसिंहदेवकृतमक्षज्याक्रान्तिज्याज्ञाने सति नतांशेभ्यो नतकालानयनम् ।

## अथ प्रकारान्तरेण अक्षांश–क्रान्त्यंशज्ञाने नतांशेभ्यो नतकालानयनमाह ।

नतांशानामक्षांशानां च योगः कार्यः । एकत्रान्तरं च कार्यम् । योगान्तरयोर्ज्ये कार्ये । ज्ययोर्योगार्द्धं प्रथमसंज्ञम् । ज्ययोरन्तरार्द्धं द्वितीयसंज्ञम् । दक्षिणगोले द्वितीयेन क्रान्तिज्या योगः कार्यः । उत्तरगोलेऽन्तरं कार्यम् । तृतीयसंज्ञं भवति । तृतीयनतज्यागुणं प्रथमेन भक्तं फलं भुजो भवति । भुजवर्गनतांशज्यावर्गान्तरपदं त्रिज्यागुणं द्युज्याभक्तं फलचापं नतकालो भवति ।

---

४. अहोरात्रे चापज्या

$$\frac{\text{नज्या}\sqrt{\text{इ० अज्या}^2 - \text{अज्या}^2} \times \text{त्रिज्या}}{\text{इ० अ० ज्या} \times \text{लं० ज्या}} = \text{फलम्}।$$

५. नाडीवृत्तसदृशवृत्तम् ।

६. नाडीवृत्ते नतकालज्या $= \dfrac{\text{फल} \times \text{त्रिज्या}}{\text{द्यु}}$ ।

$$\text{न० का० घ०} = \frac{\text{नतकालांश}}{६}।$$

## अस्योपपत्त्यर्थं क्षेत्रम् ।




कखगघं याम्योत्तरवृत्तं छजं नतांशचापं छकं अक्षांशचापं करुं योगचापं तजमन्तरज्या चरुं योगज्या जलं ज्ययोर्योगः जनं ज्या योगार्द्धं प्रथमम् । तन ज्यान्तरार्द्धं द्वितीयम् । सवं दक्षिणगोले क्रान्तिः सथं तृतीयम् । ( शयं उत्तरगोले क्रान्तिः सथं तृतीयं ऽ ) शयं उत्तरगोले क्रान्तिः पयं तृतीयम् । जमं नतांशज्या द्विगुणा । छधं खमध्यसूत्रं कगं नाडीवलयसूत्रम् । यदि जनेन जमं लभ्यते तदा सथेन किमिति लब्धं समं [1]भुजः ।

पुनर्यदि जनेन जमं लभ्यते तदा पयेन किमिति लब्धं [2]मयं अयमेव भुजः । भुजनतांशज्यावर्गान्तरपदं [3]उन्नतवलये कोटिः भवति । इयमहोरात्रवृत्तखण्डस्यापि जीवा भवति । इयं यदा त्रिज्यया गुण्यते द्युज्यया भाज्यते तदा नतकालज्या भवति ।

अथवा दक्षिणगोले अन्तरज्याक्रान्तिज्ययोरन्तरं कार्यम् । उत्तरगोले

---

१. $\text{समज्या} = \dfrac{\text{जमज्या} \times \text{सथज्या}}{\text{जनज्या}} = \dfrac{\text{नज्या} \left( \dfrac{\text{क्रां० ज्या} \times \text{शं} \times \text{अ० ज्या}}{\text{त्रि}} \right)}{\dfrac{\text{न० ज्या} \times \text{लं० ज्या}}{\text{त्रि}}}$

$= \dfrac{\text{त्रि} \times \text{क्रां० ज्या}}{\text{लं० ज्या}} + \dfrac{\text{शं} \times \text{अ० ज्या}}{\text{लं ज्या}}$ । सम=अग्रा + शं० त०=भुज दक्षिणगोले ।

२. सयं इति पु० द्व० पाठः ।

३. $= \sqrt{\text{नज्या}^2 - \text{भु}^2}$ = कोटि अहोरात्रवृत्तीयनतकालज्या ।

योगज्याक्रान्तिज्ययोरन्तरं कार्यम्। दक्षिणगोले जभं भवति। उत्तरगोले रहं भवति।

यदि जनेन जमं लभ्यते तदा जभेन किमिति लब्धं जसम् अथवा [1]लम्बज्यया त्रिज्या लभ्यते तदा जभेन किमिति लब्धं जसं इदं नतज्यायां शोध्यं भुजो भवति। भुजवर्गनतज्यावर्गान्तरपदं अयनवृत्ताद् बिम्बपर्यन्तं द्युरात्रवृत्तखण्डस्य जीवारूपं भवति। परं त्विदं द्युज्याप्रमाणेनास्ति त्रिज्या प्रमाणेन करणार्थमनुपातः। द्युज्याप्रमाणेन इदं तदा त्रिज्या प्रमाणेन किमिति फलस्य चापं नतकालो भवतीत्युपपन्नम्।

अथवा उन्नतांशज्या [2]भुजकोटिज्या गुणा त्रिज्याभक्ता फलस्य चापं नवतौ शोध्यं शेषस्य ज्या भुजकोटिज्यागुणा द्युज्याभक्ता फलस्य चापं नतकालो भवति।

अथ भुजज्ञानमपि दिगंशज्ञानेन भवति। तद्यथा। त्रिज्यया [3]दिग्ज्या लभ्यते तदा नतज्यया किमिति फलं भुजो भवति। अथवा अग्रा शङ्कुतल-संस्काराद्पि भुजो भवति इत्यलं पल्लवितेन।

इत्यक्षज्याक्रान्तिज्याज्ञाने नतांशेभ्यो नतकालानयनम्।

## अथ विषुवांश स्पष्टक्रान्त्योः ज्ञाने शरानयनमाह।

ग्रहस्य विषुवांशेभ्यः साध्या क्रान्तिर्द्वितीयका।<br>
अस्या उदग्दक्षिणत्वं विषुवद्भागगोलतः॥ १॥<br>
स्पष्टापमान्यापमयोर्दिगैक्ये विवरं तयोः।<br>
दिग्भेदेन तयोर्योगः कार्यो यच्चात्र शेषकम्॥ २॥<br>
अस्य ज्या विषुवांशानां कोटिद्युज्यागुणा हृता।<br>
त्रिज्ययाप्तस्य यच्चापं पृषक्तः शेषदिग्भवेत्॥ ३॥<br>
अन्यक्रान्तिर्यदा वा स्यात्स्पष्टक्रान्त्यधिका तदा।<br>
शरस्य दिग् विलोमत्वं ज्ञेयं गोलविशारदैः॥ ४॥

---

१. जभस त्रिभुजे ज कोणः अक्षांशः अतः सकोणः लम्बांशः। अत्र कोणानुपातेन जस साधनमस्ति।

२. अत्रानुपाते हरभाज्ययोः परिवर्त्तनमस्ति, इति दोषः प्रतीयते।

३. द्युज्या इति पु० द्व० पाठः।

अथवा शेषकस्य ज्या विषुवांशज्यया गुणा ।
विहृतायनदृक्कर्मसंस्कृतस्य ज्यया फलम् ॥ ५ ॥
यल्लब्धं तस्य यच्चापं शरो भवति गोलदिक् ।

## अथ श्लोकानामर्थो लिख्यते ।

ग्रहस्य विषुवांशेभ्यः अन्यक्रान्तिः साध्या । क्रान्तेरुदग् दक्षिणत्वं विषुवांशगोलवशात् ज्ञेयम् । अन्यक्रान्तेः स्पष्टक्रान्तेश्च दिगैक्ये अन्तरं दिग्भेदे योगः कार्यः । शेषं विषुवांशकोटिद्युज्यागुणं त्रिज्याभक्तं फलचापं शरो भवति । शरदिक्शेषवशात् ज्ञेया । अन्यक्रान्तिः स्पष्टक्रान्त्यधिका चेत्तदा शरो विपरीतदिग् ज्ञेयः । अथवा शेषस्य ज्या विषुवांशज्यागुणा आयनदृक्कर्मसंस्कृतस्य ज्यया भक्ता फलस्य चापं वा शरो भवति ।

## अस्योपपत्तिर्ज्ञानार्थं एकत्रिंशत्तमं क्षेत्रम् ।




कखगघं कदम्बवृत्तं आयनदृक्कर्मसंस्कृतस्य सत्रिभस्य । हं आयनदृक्कर्मसंस्कृतः तदेव कृतवृत्तस्य पृष्ठकेन्द्रं भवति । कगं नाडीवलयं खघं क्रान्तिवृत्तं तं बिम्बस्थानं धं ध्रुवः दं कदम्बः सं गोलसन्धिः धतहमं बिम्बीयध्रुववृत्तं दतवं कदम्बवृत्तं वं ध्रुवकः वतं शरः तमं स्पष्टक्रान्तिरुत्तरगोले मसं विषुवांशाः महं बिम्बांशान्यक्रान्तिः हतं स्पष्टशरः गघं सत्रिभायनदृक्कर्मसंस्कृतस्य अन्यक्रान्तिः अथवा सत्रिभविषुवांशाद्यक्रान्तिः । कदम्बवृत्ते [1]धघं सत्रिभविषुवांशद्युज्या ।

अथानुपातः यदि हघेन [2]घधं [3]लभ्यते तदा हतेन किमिति लब्धं वतं शरः अयमेवास्माकमभीष्टम् ।

## इति विषुवांशस्पष्टक्रान्त्योर्ज्ञाने शरानयनम् ।

१. घथं इति पु० द्व० पाठः ।
२. हथेन इति पु० द्व० पाठः ।
३. घथं इति पु० द्व० पाठः ।

# श्लोकानुक्रमणिका

अभिनव-प्रकाशनम्

# आधुनिक-संस्कृत-नाटक ( हिन्दी में )

( नये तथ्य : नया इतिहास )

कतिपयवर्षैः सागरिका-सम्पादकः, सागर विश्वविद्यालयस्य प्राचार्यो डा० रामजी उपाध्यायः संस्कृत-नाटकस्य बृहदितिहासं हिन्दी-भाषया प्रस्तावयितुं व्यापृतो वर्तते।

प्रथमो भागः अश्वघोषतो भवभूतिपर्यन्तः
४७५ पृष्ठानि मूल्यं १० रुपकाः

द्वितीयो भागः अष्टमशतकात् पंचदशशतकं यावत्
५०५ पृष्ठानि मूल्यं २५ रुपकाः

तृतीयो भागः षोडशशतकात् १९७५ ई० यावत् प्रायः
१००० पृष्ठानि मूल्यं ५० रुपकाः

भागद्वयं प्रागेव प्रकाशितम्। तृतीयो भागः सम्प्रति यन्त्रस्थः शीघ्रमेव प्रकाशमेष्यति। अत्र संस्कृतनाटकानां साहस्रं नाट्यशास्त्रीय-विवेचनपुरस्सरमैतिहासिकक्रमेण परिशीलितम्।

प्रकाशनात् प्राक् केवलं २५ रुप्यकप्रदातृभ्यो ग्रन्थोऽयं वितरणीय इति प्रचार-योजना प्रकाशकेन संस्कृत-परिषदानुगृहीता। एतदर्थमधो लिखितेन संकेतेन धनराशिः प्रेषणीयः।

मन्त्री, संस्कृत-परिषद्
**सागर-विश्वविद्यालय**
सागर ( म० प्र० )

# सागरिका

पञ्चदशवर्षे अङ्कः तृतीयः



प्रकाशकः

**सागरिका-समितिः, सागरविश्वविद्यालयः**

सागरम् ( म० प्र० )

# सागरिका

पञ्चदशवर्षे अङ्कः तृतोयः

सम्पादकः
**डॉ० रामजी उपाध्यायः**
सागरविश्वविद्यालये
संस्कृतविभागस्य प्राध्यापकाध्यक्षः

प्रकाशकः
**सागरिका-समितिः, सागरविश्वविद्यालयः**
सागरम् ( म० प्र० )

प्रकाशिका
सागरिका–समितिः
सागरविश्वविद्यालयः
सागरम् ( म० प्र० )

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ३–०० रूप्यकाणि |
| वार्षिकम् | १०–०० रूप्यकाणि |
| आजीवनग्राहकस्य | २००–०० रूप्यकाणि |
| अङ्कप्रकाशः | प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र-<br>[ जून-सितम्बर-दिसम्बर-मार्च- ] मासेषु |

सूच्यम् : आजीवनग्राहकेभ्यः सागरिकायाः प्राचीना अपि सर्वेऽङ्काः सवस्त्र-पुटबन्धा निश्शुल्कमुपह्रियेरन् ।

मुद्रकः
विद्याविलास प्रेस
के. ३७/१०९, गोपालमन्दिर लेन
वाराणसी–२२१००१ ( उ० प्र० )
फोन ५२९३९

# विषय-सूची





# कालिदासरूपकेषु वस्तुविभागः

*रेवाप्रसादद्विवेदी*

वस्तुत्वमत्र कथानकत्वसतत्त्वम् । [1]सूच्यत्वं दृश्यत्वं चेति रूपकेषु तस्य द्वे व्याप्ये जाती । एतयोराद्यं पञ्चविधैरर्थोपक्षेपकैः सूच्यत इति नाट्यवेदविदः ।[2] विष्कम्भ-चूलिकाऽङ्कास्याऽङ्कावतार-प्रवेशकत्वैश्च कथा-रूपस्य 'अर्थस्य' उपक्षेपकाणामपि पञ्चविधत्वम् । तत्रापि विष्कम्भक-प्रवेशकयोरेव प्रामुख्यम् । अनयोरपि विष्कम्भकस्य द्वैविध्यम् ( १ ) शुद्ध-त्वेन[3] ( २ ) मिश्रत्वेन च ।

कालिदासरूपकेषु अष्टौ प्रवेशकाः, त्रयश्च विष्कम्भकाः प्रतीताः,[4] ऋतेऽस्माकं [5]कालिदासग्रन्थावल्याः पाठम् । प्रवेशकेषु शाकुन्तलसप्तमा-ङ्कारम्भकस्य प्रवेशकस्य साहित्याकादमीप्रकाशिते कश्मीर-पाठ एव लाभः । अन्यत्र सर्वेषामपि संस्कर्तॄणां सम्पादकानां चाविसंवादः । विष्कम्भकेषु पुनः मिश्रविष्कम्भकस्य स्थाने केवलमपि 'विष्कम्भक'-पदं क्वचन लभ्यते ।

अत्र विचारः

( १ )

## ( क ) सूच्यत्व-व्याप्तिनिश्चयः

अस्माकं संस्करणं विहाय सर्वेष्वपि संस्करणेषु कालिदासरूपकाणां वस्तुनः सूच्यत्वस्याऽसमाप्तावपि प्रवेशकादिः समाप्यते । तथा हि—

( १ ) विक्रमोर्वशीयस्य तृतीयाङ्कारम्भकेऽर्थोपक्षेपके भरतशिष्ययोः पेलव-गालवयोर्निष्क्रमणं यावदेव मिश्रविष्कम्भकं मन्वानास्ततः परं कञ्चुकिप्रवेशमारभ्य अङ्कम् अवतारयन्ति, प्रवदन्ति च पेलवोक्तेः

---

१-३. दशरूपकस्य १।५६-६२ कारिकाः, तासाम् अवलोकश्च.

४. प्रवेशकाः—मालविका० ३, ५; विक्रमो० २, ४, ५; शाकु० ४, ६, ७.
विष्कम्भकाः—मालवि० १; विक्रमो० ३; शाकुन्त० ३,

५. प्रकाशकः काशीहिन्दूविश्वविद्यालयः, १९७६ ।

प्राकृतमयत्वेऽपि विष्कंम्भकत्वमेवार्थोपक्षेपकस्य। वस्तुतस्तु, तत्र कञ्चुकिनोऽप्युक्तिः सूचनात्मिकैव—'अये! इत एव प्रस्थितो देवः, परिजनवनिता०, यावदेनमवलोकनमार्गे स्थितः प्रतिपालयामि'—इत्येवम् एवं च सूच्यत्वस्य कञ्चुक्युक्त्यवधिकत्वमेव स्वीकर्त्तव्यम्, स्वीकर्त्तव्यं चार्थोपक्षेपकस्यास्य मिश्रजातीयत्वम्।

(२) शाकुन्तलस्य चतुर्थेऽङ्के वेलोपलक्षणाय प्रविष्टस्य कण्वशिष्यस्य प्रवेशात् पूर्वं यावद् शकुन्तलासख्योः दुर्वासःशाप-शबलितं संवादं यावदेवार्थोपक्षेपको निर्दिश्यते, उद्दिश्यते चासौ मिश्रविष्कम्भक इति नेपथ्यगतत्वेऽपि शापवाक्यस्य। वस्तुतस्तु सख्योः यः पुनः प्रवेशस्ततः परं नायिकाप्रवेशात् पूर्वं यावच्च सूच्यत्वमेव कथार्थस्य। ततश्च तस्यापि वस्तुनः सूच्यत्व-व्याप्य-जाति-कत्वमेवाभ्युपेयम्।

(३) शाकुन्तलस्यैव षष्ठेऽप्यङ्के तदारम्भकस्यार्थोपक्षेपकस्य धीवर-वृत्तान्तावधिकत्वमेवाभिसन्धते सर्वेऽपि। सूच्यत्वं पुनस्ततः परमपि सानुमती-पारिचारिका-कञ्चुकिनां वक्तव्यं यावद् दृश्यप्रसरम्।

(४) मालविकाग्निमित्रस्य पञ्चमाङ्कारम्भकस्याप्यर्थोपक्षेपकस्य समाहितिका-मधुकरिकावधिकत्वमेवोपजिगमिषन्ति विद्वांसः, सूच्यत्वं च तत्रापि वैतालिकोक्ति यावत् स्थितम्।

एवं कालिदासरूपकेषु सूच्यत्वस्याखण्डितत्वेऽपि, अनारम्भेऽपि च दृश्यत्वस्य याविमावर्थोपक्षेपकविराम-अङ्कारम्भौ तावतर्कसहौ।

## (ख) नामनिश्चयः

कालिदासो भरतमेवोद्दिशति तेषु तेषु सन्दर्भेषु[२]। ततश्च भरतस्य नाट्यशास्त्रमेव संभवेन्नाट्य-सिद्धान्तनिर्णये तस्यादर्शः। कालिदाससमयं यावदन्यस्य नाट्यशास्त्रीयस्य ग्रन्थस्याप्रसिद्धिरत्र साधकं प्रमाणान्तरम्। भरतस्य नाट्यशास्त्रे पुनः प्रवेशकमेव भूम्ना[३] लभामहे, न विष्कम्भकम्। विष्कम्भकस्य निवेशः प्रकरणनाम्नो रूपकस्य प्रकरणे

१. निर्णयसागरस्य १९१४ खीष्टाब्दीये रङ्गनाथटीकोपेते संस्करणे।

२. विक्रमो० २।१७, ३–अङ्कारम्भकार्थोपक्षेपके, भरतवाक्येषु च।

३. नाट्यशास्त्रस्य बड़ौदासंस्करणे १८।२८-५६ कारिकासु।

दृश्यते षड्भिरनुष्टुप्पादैः ।[1] नास्ति च कालिदासस्य रूपकेषु कस्यचनापि प्रकरणत्वम् । एवं च सूच्यस्य वस्तुनः प्रवेशकत्वमात्रं कालिदासरूपकेषूपनिबन्धनीयम् , न तु विष्कम्भकत्वम् । ततश्च कालिदासनाटकेषु योऽयं विष्कम्भकस्य मिश्रविष्कम्भकस्य वा योगः सोऽपि गवेषणीयसङ्गतिकः ।

कालिदासपूर्ववर्त्तिनि भासरूपकजातेऽपि प्रवेशकानां[2] न्यूनत्वाभावात् , सूच्यासूच्यवस्तु-विभागाय क्वचन प्रवेशकादि-शब्द-रूप-विभाजकाभावाच्च कालिदासे भासानुहरणमप्यशक्योत्प्रेक्षम् ।

## ( ग ) शीर्षकस्थाननिश्चयः

तृतीयं चात्रेदं विचार्यं यत् सूच्य-दृश्ययोर्वस्तुनोर्विभाजकानि शीर्षकाणि कुत्र देयानि, कथं वा देयानि । सर् मानियरविलियम्ससमहोदयं विहाय सर्वैरपि कालिदासरूपकसम्पादकैः सूच्यस्य वस्तुनः पूर्वमेव 'अमुकः अङ्क' इति अङ्कशीर्षकमेव दीयते, प्रस्तूयते च सूच्यमपि वस्तु ततः परम् । विजातीयत्वमनुभवन्तः सहृदयाः पुनरर्थोपक्षेपकत्वेनाङ्कस्य अङ्कत्वेनार्थोपक्षेपकस्यानुवेधं न सहेरन् ।

ता एतास्तिस्रो विप्रतिपत्तयः प्रेक्षावदनुवीक्षासापेक्षाः ।

( २ )

### अत्र समाधिमुत्पश्यतां स्युरिमाः प्रतिपत्तयः—

( क ) *१. अर्थोपक्षेपकपात्राणां निष्क्रान्तिः* अङ्कमारम्भयतीति—

( अ. ) मालविकाग्निमित्रे प्रथम-तृतीय-पञ्चानाम्

( ब. ) विक्रमोर्वशीये चतुर्थस्य

( स. ) शाकुन्तले च तृतीयस्य

---

१. नाट्यशास्त्रस्य बड़ौदासंस्करणे १८।५४-५५ । तत्रापि प्रवेशकः प्रकृतिभूतः, विष्कम्भकः पुनस्तद्विकृतिः । १९।१०९-११७-मध्ये पञ्चानामप्यर्थोपक्षेपकाणां लक्षणानि प्रक्षिप्तानि, तत्राभिनवभारत्या अभावात् अप्रस्तुतप्रायत्वात् , १८ अध्यायेऽलाभाच्च ।

२. भासे प्रवेशकाः ११, मिश्रविष्कम्भकाः ४, शुद्धविष्कम्भकाश्च ७ = आहत्य २२ ।

अङ्कस्य अर्थोपक्षेपकेभ्यः प्रतीतचरम्। एवं गते 'सत्यपि सूच्यत्व-स्यापरिसमापने सूचकानां पात्राणां यत्र दृश्ये वस्तुनि निर्व्यवधि प्रवेश-स्तत्र दृश्यत्वमेवाभ्युपेयमि'ति। यदि वा,

२. *अभिनयाभावो* हि सूच्यतावच्छेदकः। विप्रतिपत्तिस्थलेषु स्थलेषु पुनः शाकुन्तलस्य चतुर्थेऽङ्के नायिकासख्योः, षष्ठेऽङ्के च चेट्यादीनां सर्वेषां पात्राणामभिनय एव कविनोपनिबध्यते न तु तदभाव इत्यवच्छेद-कस्याभावात् सूच्यताया अपि तत्राभावः। यत्राभिनयस्तत्र दृश्यत्वमिति कीदृशी तत्र सूच्यता? अथवा,

३. *पाण्डुग्रन्थानां बाहुल्ये* यादृशी योजना सैव परिपालनीया। तत्तत्संस्करणकर्त्तृभिर्दृष्टचरेषु हस्तलेखेषु यादृशो वस्तुविभागस्तादृश एव स तैस्तेषु तेषु संस्करणेषूपनिबद्ध इति नास्ति पर्यनुयोगावसरः। किं वा,

४. *निरङ्कुशाः कवयः* इति न ह्येव ते निगडनीया लक्षणैकचक्षुष्कतया। भास इव कालिदासोऽपि सूच्येऽपि दृश्यत्वं दृश्येऽपि च सूच्यत्वं स्वैरमुपनिबध्नीयादित्यालङ्कारिकैरेव तत्र लक्ष्यैकचक्षुष्कैर्भाव्यं शाब्दि-कैरिव। इति।

( ३ )

अत्र ब्रूमः—[ [1]चूलिकान्यायेन ]—

१. कवेर्निरङ्कुशत्वकल्पनायां जोषमास्महे। कविश्चेदनङ्कुशः स्वैर-वृत्तिश्च तर्हि विमर्शका एव कथं न मन्दाः, अलब्धवैकटिकभावाश्च सारासारविवेके शिल्परत्नानाम्? नीरसस्य वस्तुनः परित्यागे परिवर्त्तने वा स्यान्नाम कविः स्वतन्त्रः, न तु तस्य सरसे वस्तुनि निरवधानं व्यामिश्रणे। सूच्यं हि नीरसप्रायमेव। सरसं च दृश्यम्। ततो नीरसस्य, ततश्चार्थोपक्षेपकैकविषयस्य अङ्कमात्रविषये सरसे वस्तुनि संमिश्रणं कालिदाससदृशमहाकविव्यामोहौपयिकमिति नास्ति विदग्धजननेदीयान् पक्षः।

---

१. चूलिका = चूडी, ता हि येन क्रमेण धार्यन्ते ततो विपरीतेनैव क्रमेणावतार्यन्ते। सोऽयं क्रमव्यत्यास एव चूलिकान्यायः शास्त्रेषु प्रसिद्धः।

२. पाण्डुग्रन्थानां बाहुल्ये प्रामाण्यबुद्धिः पुनर्विवाहविडाल-न्याय-विडम्बनम्। गुरुणा उपद्रवन्तं विडालं विवाहे यदृच्छयैव प्रतिबद्धं वीक्ष्य 'समुदाचार एष यद् विवाहे विडालस्य प्रतिबन्ध' इति जातग्रहाणां शिष्याणां प्रतिविवाहमनुपद्रवतोऽपि विडालस्य सान्वेषणं प्रतिबन्धनमिव गड्डरिकाप्रवाह एष निमीलित-तर्क-नेत्राणां प्राकृतानाम्। अपि च कालिदासहस्तलेखाः कालिदासहस्तलिखिता एवालप्स्यन्त चेदभविष्य-दपि कथञ्चित् समाधिः। नास्ति चैषा स्थितिः। सन्ति च निदर्शनानि सूच्यदृश्ययोर्वस्तुनोर्निर्विभागं[1] लेखस्यापीति विभागानामेषां लिपि-कृन्मात्रशेमुपीकल्पितत्वमेव निश्चितम्। ततश्चासति नाट्यशास्त्रविरोधे तत्र साम्प्रतिकमपि परिवर्त्तनं न ह्येव नोचितम्। लभ्यन्ते च हस्तलेखे-ष्वपि महान्तोऽवकाशा विप्रलम्भस्य। तत्र मूलशुद्धेरेकमेव शरणम्, स च संपादकस्य मतिविभवः, विवेकापरपर्यायः। एवं च परिदुर्बलमेव पाण्डुग्रन्थानामपि प्रामाण्यम्।

३. अभिनयोऽपि सूच्य-दृश्यत्वविभागेऽकिञ्चित्करः। भारतीवृत्ति-रूपस्याभिनयस्य सर्वत्राव्यभिचारात्, तदितरस्याङ्गिकादेरप्यभिनयस्य शाकुन्तल-चतुर्थ-षष्ठाङ्कारम्भकयोरर्थोपक्षेपकयोर्विद्यमानत्वात्। चतुर्थेऽङ्के सख्यौ कुसुमावचयं नाटयत एव, षष्ठेऽङ्के पुनर्धीवरवृत्तान्तस्याभिनयः स्वतन्त्रमेकमङ्कमेव प्रयोजयति। एवं चाभिनयाभावस्य सूच्यतावच्छेदत्व-कल्पनं मानाभावकलुषितम् अव्याप्तिप्रसक्तिप्रत्युपस्थापकं चेति न ह्येव क्षमेत विनिगमने।

४. पात्राणां निष्क्रमणेऽपि न युज्यते विनिगमकत्वम्। अस्ति तत्रापि प्रतिपक्षः। विक्रमोर्वशीयस्य पञ्चमाङ्कारम्भकोऽर्थोपक्षेपकविशेषश्चात्र प्रमाणम्। तत्र पण्डितमहाशयस्य संस्करणे प्रवेशसमाप्तावपि विदूषको मञ्च एव तिष्ठति प्रतिपालयति च सपरिजनस्य नायकस्य पार्श्वपरिवृत्तये-ऽवसरम्। संस्करणान्तरेष्वतथाभावेऽपि तर्कः पण्डितैकपक्षपाती। अत्र हि नायकः सपरिजनः। ततस्तस्य मञ्चप्रवेशे एकाकित्वपरिहारोऽत्रा-

१. भासस्य बालचरिते प्रथमाङ्कारम्भकस्य विष्कम्भकस्य नास्ति शीर्षबन्धः, नास्ति च समाप्तिपुष्पिका (द्र० B. O. B. A-1951)

लब्धप्रसरः। एवं चास्य प्रवेशो मञ्चस्थितेनापि विदूषकेण शक्यप्रतिपालः। नास्ति च तस्य मञ्चस्थितावनौचिती, अस्ति चौचिती, मञ्चशून्यतायाः परिहारात्। नास्ति चौचिती निर्गम एव, तस्य व्यर्थत्वात्। अस्ति च निर्गमः सार्थकः विक्रमोर्वशीयस्यैव द्वितीयेऽङ्के। तत्र नायकस्य मञ्चप्रवेशावसरे एकाकित्वमेव। मा भूदस्य निष्परिजनस्य प्रवेश इति विदूषकस्य मञ्चतः पलायनमुचितमेव। यद्यपि तत्रापि मञ्चत एव प्रवेशद्वारं यावत् पलाय्यापि विदूषकेण नायकस्य सपरिजनत्वं शक्यसम्पादम्। एवं चार्थोपक्षेपकपात्राणां मञ्चत्यागस्यैकान्तिकत्वे त्रयो दोषाः—

१. प्रमाणाभावः
२. सत्प्रतिपक्षता
३. तर्कविरोधश्चेति।

अस्ति चात्र प्रतिबन्द्यपि। तथाहि यदि विक्रमोर्वशीयस्य पञ्चमेऽङ्के मञ्चस्थितोऽपि विदूषको राजानं प्रतिपालयन्नर्थोपक्षेपकपात्रमेव तर्हि मालविकाग्निमित्रस्य पञ्चमेऽङ्के नायकप्रवेशात् पूर्वं मञ्च एव स्तम्भान्तरितायाः प्रतीहार्या अपि कथं नार्थोपक्षेपकपात्रत्वमेव, कथं च तत्र स्यात् सर्वसम्पादकसंमतमङ्कपात्रत्वमेवास्मद्विप्रलम्भकम्।[1]

किमुच्येत च शाकुन्तलस्य चतुर्थेऽङ्के यत्रार्थोपक्षेपकपात्राण्येव भूयोऽप्यङ्कारम्भे मुख्यपात्रत्वेन प्रविशन्ति, प्रविशति च शिखामञ्जिता शकुन्तला बहोः कालात् परम्। तत्र ह्यखण्डितमेव सूच्यत्वं वस्तुनः शकुन्तलायाः प्रवेशात् पूर्वं यावदव्यवधानेन। ननु वेलोपलक्षणार्थं प्रविष्टः कण्वशिष्यस्तत्र व्यवधानमिति नास्ति दोष इति चेत् कण्वशिष्यस्यापि कथं न्वङ्कपात्रत्वम्, तस्यापि सूचनामात्रप्रयोजनकत्वात्। एवं च शकुन्तलायाः प्रवेशात् पूर्वं यावद् अर्थोपक्षेपकत्वमेव नास्त्यवस्तुनः। कण्वशिष्यस्याङ्कपात्रत्वे पुनरयमपरो दोषो यद् अनसूयायाः कण्वशिष्यवाक्यशेष एवापटीक्षेपेण प्रियंवदोचितोऽनवसरः प्रवेशः। कण्वशिष्यो हि 'यावदुपस्थितां होमवेलां गुरवे निवेदयामी–'ति केवलं न व्याजहार प्रविवेश चानसूया। प्रविष्टमात्रैव सा सुदीर्घमालपति। ततः परमेवावसरो

१. अस्माभिरन्यत्र विहितपरिवर्त्तनैरप्यत्रापराद्धमेव तथाऽनाचरद्भिः।

दीयते वाक्यशेषाय वराकाय। असम्बद्धयोर्द्वयोर्यौगपद्येन प्रस्तुते वाग्व्यवहारे रससमाहितायाः प्रेक्षकबुद्धेर्दोलाधिरोहविडम्बनस्यापरिहारोऽपि महान् रसदोषः।[1]

एवं सर्वेषामर्थोपक्षेपकपात्राणां मञ्चतो निष्क्रमणं नास्ति नियतम् अङ्कारम्भाय। ततश्च नास्ति सूच्यदृश्यत्वयोर्विभागेऽर्थोपक्षेपकपात्रनिष्क्रान्तिरपि विनिगमिका।

एवं सति मुख्यानां पात्राणां प्रवेशेभ्यः पूर्वं यावत्, यदवधि वस्तुनः सूच्यत्वं तदवधि तस्यार्थोपक्षेपकत्वमेवाभ्युपेयम्, सत्यपि सूच्यवस्तुपात्रस्य दृश्ये वस्तुनि निरर्गलं प्रवेशे, सत्यप्यभिनये, सत्यपि च तत्समर्थके पाण्डुग्रन्थबाहुल्ये। सेयं व्यवस्था तर्कशुद्धा, अशास्त्रविरुद्धा च।

एवं सति यथा विक्रमोर्वशीयस्य द्वितीयाङ्कार्थोपक्षेपके वैतालिकविदूषकोक्त्योरपि समाहारस्तथैव मालविकाग्निमित्रस्य पञ्चमाङ्कारम्भकेऽर्थोपक्षेपकेऽपि व्यवस्थाप्यम्। तत्रापि नायकप्रवेशात् पूर्वं यावदर्थोपक्षेपकत्वमेवाऽऽस्थेयम्।

(ख) सति वस्तुविभागनिर्णयविनिगमके वस्तूनां नामान्यपि निर्धार्येरन्। तत्र भरतनाट्यशास्त्रे प्रवेशकस्यैव भूम्ना प्रपञ्चात् सूच्येषु वस्तुखण्डेषु 'प्रवेशक' इत्येवैका संज्ञा प्रयोक्तव्येति प्रथमः कल्पो भासवत् कालिदासरूपकेभ्योऽपि।

अत्रेदमवधेयम्। प्रवेशकस्य नीचमात्रपात्रप्रयोक्तृत्वं परवर्त्तिषु दशरूपकादिषु प्रतीतमिति प्रथमाङ्कारम्भकार्थोपक्षेपकभिन्नतायै प्रवेशकान्तरेभ्यस्तस्मिन् भेदकं किञ्चिदाधेयमिति स्यादेव भासकालिदासयोः मनसि विकल्पः। ऊरुभङ्गे बालचरिते च भासः, मालविकाग्निमित्रे च कालिदासः प्रथमाङ्कारम्भकमर्थोपक्षेपकमुपनिबध्नन्तौ प्रतीतावेव। तत्र कालिदासस्य प्रथमाङ्कारम्भकार्थोपक्षेपके प्राकृतमपीति विशेषः। प्रवेशकान्तरेभ्यः प्रथमाङ्कारम्भके प्रवेशके भेदमुपनिबिभन्त्सू इमौ तत्र

---

1. अस्माभिस्त्वत्र शकुन्तलाप्रवेशात् पूर्वं यावदर्थोपक्षेपकत्वमेव दर्शितं स्वकीयायां कालिदासग्रन्थावल्याम्।

प्रकरणोचितां विष्कम्भकसंज्ञामादधतुरिति कथञ्चिदुत्प्रेक्षितुं न न शक्यम्। अन्यत्र पुनर्वक्ष्यमाण–रीत्या प्रवेशकत्वमेव तर्कशुद्धम्।

(ग) भासकालिदासयोः प्रवेशका अङ्कात् पूर्वमेव स्थिता इति प्रवेशकेभ्यः पूर्वम् 'अमुकः अङ्क' इति शीर्षकमशास्त्रानुमोदितमेव। इदं चापरं 'प्रवेशक'–संज्ञासमर्थकं तत्त्वम्।

शीर्षकोल्लेखेऽप्यत्र द्विविधः क्रमः

१. अन्तमात्रे नामसमुद्देशः २. आरम्भेऽपि च स इति।

तत्र प्रथमस्यैव भूयसा प्रचारः। शास्त्रं पुनस्तत्र तूष्णीं स्थितम्। अयमत्र विशेषो यत् पण्डितमहाशयो विक्रमोर्वशीये अङ्कमप्यन्त एव समुद्दिशति नारम्भे। तत्र शीर्षकस्थापने नास्ति शास्त्रविरोध इति तत्परित्यागं हस्तलेखकालोचितं स्थानहानिपरिरक्षणनिमित्तकमेवोत्पश्यामः। अत्र गतानुगतिकता तातकूपजलन्यायानुवृत्तिरेव।

( ४ )

अयमत्र निष्कर्षः—

कालिदासरूपकेषु—

१. मालविकाग्निमित्रस्य पञ्चमाङ्कारम्भकोऽर्थोपक्षेपको नायकप्रवेशात् पूर्वं यावत् प्रसारणीयः, मिश्रविष्कम्भकनाम्ना चाभिलप्यः।

२. विक्रमोर्वशीयस्य द्वितीयेऽङ्के, शाकुन्तलस्य चतुर्थषष्ठयोरङ्कयोश्च सूच्यत्वं नायकप्रवेशावधि प्रसार्य प्रवेशकत्वेन चानभिमत्य मिश्रविष्कम्भकत्वेन यदि समुद्देश्यम्।

३. सूच्यवस्तूनां पृथक् प्रत्यभिज्ञायै आरम्भेऽपि शीर्षकाणि देयानि समाप्ताविव, कामं तत्र शीर्षकं कोष्ठकपतितं स्यात्।

४. अङ्कारम्भे पुनरङ्कसंख्यासहितं शीर्षकमवश्यमेव देयमङ्कान्त इव[1]।

---

१. निबन्ध एषोऽखिलभारतीयप्राच्यविद्यापरिषदः २८. शेऽधिवेशने पठितः।

# [1]कालिदासभारती–८

## [ कालिदाससाहित्ये 'प्रथम-शब्दार्थः ]

रेवाप्रसादद्विवेदी

कालिदासेन स्वसाहित्ये प्रायेण ५७वारं प्रथमशब्दः प्रयुक्तः[2] । तत्र 'मेघदूतेऽभिव्यक्तिदोषा'[3] इत्यमुना निबन्धेनास्माभिः 'तस्मिन्नद्रौ'-इति पद्यस्य 'प्रथम'-पद निहतार्थकत्वमुद्भावि तस्य प्रधानत्वपरतया विवक्षितत्वात्। कालिदासो हि निम्नोद्धृतेष्वपि स्थलेषु 'प्रथम'-पदं प्रधानत्वपरतयैव नयति—

१. एकैव मूर्त्तिर्बिभिदे त्रिधा सा सामान्यमेषां *प्रथमावरत्वम्* ।<br>विष्णोर्हरस्तस्य हरिः कदाचिद् वेधास्तयोस्तावपि धातुराद्यौ[4] ॥

२. *प्रथमो*पकृतं मरुत्वतः प्रतिपत्त्या लघु मन्यते भवान् ।<br>गणयत्यवदानतोषितो भवतः सोऽपि न सत्क्रियागुणान्[5] ॥

३. दिष्टान्तमाप्स्यति भवानपि पुत्रशोका-<br>दन्त्ये वयस्यहमिवेति तमुक्तवन्तम् ।<br>आक्रान्तपूर्वमिव मुक्तविषं भुजङ्गं<br>प्रोवाच कोसलपतिः *प्रथमापराद्धः* ॥ [ र० ९।७९ ]

४. राम इत्यभिरामेण वपुषा चापि चोदितः ।<br>नामधेयं गुरुश्चक्रे जगत्*प्रथम*मङ्गलम् ॥ [ र० १०।६७ ]

५. तमभ्यगच्छत् *प्रथमो* विधाता श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।<br>जयेति वाचा महिमानमस्य संवर्धयन्तौ हविषेव वह्निम्[6] ॥

---

१. अस्याः १-७ लेखेभ्यो द्र० शेषाशब्दाय रघुवंशदर्पणभूमिका, २-७-८ शब्देभ्यश्च सागरिकायाः ४।२, ५।१, ५।३, ५।४, ६।३, ९।१ अङ्काः ।

२. अत्रैव निबन्धान्ते टि. २ ।  ३. सागरिकाया १०।४ अङ्के ।

४. कु. ७।४४ ।  ५. शा. ७।१ ।  ६. कु. ७।४३ ।

६. आत्मनो वधमाहर्त्ता क्वासौ विहगतस्करः।
येन *तत्प्रथमं* चौर्यं गोप्तुरेव गृहे कृतम्॥ [ विक्र० ५।१ ]

७. मखांशभाजां *प्रथमो* मनीषिभि-
स्त्वमेव देवेन्द्र निगद्यसे यदा।
अजस्रदीक्षाप्रयतस्य मद्गुरोः
क्रियाविघाताय कथं प्रवर्त्तसे॥ [ र० ३।४४ ]

८-१०. '*प्रथमः* कल्पः'—[ [1]माल० २६७, शाकु० ५०५, ५४४ ]

एषु स्थलेषु

*प्रथमे*ऽवरत्वसाचिव्यादर्थान्तरमनुत्थानपराहतमेव ऋते प्राधान्यात् प्रमुखत्वश्रेष्ठत्वाद्यपरपर्यायात्। यच्चात्र चतुर्थे चरणे आद्यपदं तत्समभिव्याहारादपि नास्त्यत्र पर्याकुलत्वम्, आद्यशब्दस्यापि 'आदौ भव' इत्यस्मिन्नर्थे दिगादित्वात् (४।३।५४) यति निष्पन्नस्य प्रमुखत्वं विना प्रथमत्वाभावात् प्राधान्यस्यैव मूलभूतप्रवृत्तिनिमित्तत्वात्। 'अमंस्त कण्ठार्पितबाहुपाशां विदर्भराजावरजां वरेण्यः' [ र० ६।८४ ] इत्यत्र 'यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे' [ र० ११।५४ ] इत्यत्र चावरशब्दस्य पश्चात्तनत्वपरत्वेन प्रसिद्धावपि त्रिमूर्त्यो अस्या अजन्मत्वेन प्रसिद्धायाः पूर्वपश्चाद्भावनियामकत्वे प्राधान्यमेव प्रमाणम्। अतश्चाद्यपदस्याप्यत्र नास्ति च्चेमः प्राधान्यं प्रवृत्तिनिमित्तमविधाय।

*द्वितीये* लघुशब्दसान्निध्यादलघुत्वमेव प्रथमपदेनोपकृतौ विवक्षितम्। 'दुष्यन्तेन वासवस्य प्रथम उपकारः कृतः, वासवेन पुनर्दुष्यन्ते तादृशी प्रतिपत्तिर्दर्शिता ययाऽसौ प्रथममप्युपकारं लघु मेने। प्रतिपत्तिश्च सा 'अर्धासनोपवेशनम्, जयन्तलक्षणस्वपुत्रप्रेप्सित–मन्दार–माला–रूपशेषाप्रदानञ्चे' ति सुरेन्द्रस्य संभावनद्वयेन स्फुटमाहात्म्या। एवमत्रालघुनोऽप्युपकारस्य लघूकरणमेव मरुत्वत्प्रतिपत्तावातिशय्यमादधातीति प्रथमशब्दस्य महत्त्वपरत्वमेव स्थितम्।

*तृतीये* शूद्रमुनेः पुत्रं शब्दपातिना बाणेन हतवतो दशरथस्यापराधे यत् प्रथमत्वं तत्रापि महत्त्वपरतैव स्वारसिकी। न हि निरपराधनरवधादतिरिक्तो मनुष्यसमाजे कश्चनापि गरिष्ठोऽपराधः। अतएव दशरथ

१. पृष्ठसंख्येयमस्मत्कालिदासग्रन्थावलीगता।

आत्मानं 'वध्य' इति प्रतिशृणोति—'इत्थङ्गते गतघृणः किमयं विपत्तां वध्यस्तवेत्यभिहितो वसुधाधिपेन, एधान् हुताशनवतः स मुनिर्ययाचे' [ र० ६।८१ ]—इति समनन्तरपद्येन। एवं च प्रथमशब्दस्य गरिष्ठत्व-परत्वे प्रकरणलभ्यतामीक्षमाणास्तूष्णीं स्थितयोर्हेमाद्रौ, नन्दर्गीकरे च तथा न क्षुभ्यामो यथा 'मुनिशाप औचित्यं दिदर्शयिषौ ततश्चादौ दशरथेनैवापराधः कृत इति नास्ति शापं दत्तवतोऽपि मुनेर्दोष' इति विवक्षौ सञ्जीविनीकथाप्रसङ्गे मल्लिनाथे।

चतुर्थे लोके मङ्गलान्तराणामपि सत्त्वात् तदपेक्षया रामनाम्नो वैलक्षण्यस्य प्रतिपत्तये प्रथमशब्दस्य प्राधान्यैकनिष्ठत्वमेव चमत्कृति-भूमिः। एवं च युक्तवागेव शब्दकल्पद्रुमकार इममेवार्थं प्रमाणयितुं पद्यमिदमुद्धरन्। 'पश्चाद् रावणवधादिरूपाणि मङ्गलान्तराण्यपि भविष्य-न्तीति प्रथमोक्तिरि'-ति प्रथमशब्दस्यात्रादिपरत्वमुपयन्तो मल्लिनाथः, हेमाद्रिः, चरित्रवर्धनः, नन्दर्गीकरश्चेति सर्वेऽप्यहृदयङ्गमनीयवचनाः।

पञ्चमे विधातरि यत् प्राथम्यं तत्र 'विधाता वेधसामपी' [ कु० २।१४ ]—ति

अमंस्त चानेन परार्ध्यजन्मना
स्थितेरभेत्ता स्थितिमन्तमन्वयम्।
स्वमूर्त्तिभेदेन[1] गुणाग्र्यवर्त्तिना
पतिः प्रजानामिव सर्गमात्मनः॥ [ र० ३।२७ ]

इति,

सर्गशेषप्रणयनाद् विश्वयोनेरनन्तरम्।
पुरातनाः पुराविद्भिर्धातार इति कीर्त्तिताः॥ [ कु० ६।९ ]

इति च दक्षादिभ्यः सप्तर्षिभ्यश्च पितामहतया ख्यातस्य भगवतो ब्रह्मणः प्राधान्यमेव द्योतयति, आदित्वस्यात्र नान्तरीयकत्वात्।

षष्ठे विहगतस्करस्य चौर्यगतं यत् प्राथम्यं तत्राप्रतिमत्वम् अतश्चातीव गुरुत्वमेव विवक्षाविषयः। यथैतत् तद् 'गोप्तुरेव गृहे' इति 'सावधारण-गोप्तृसम्बन्धपरिवर्धितातिशय्यगृहाधिकरणकत्वेन, आत्मवधरूपणेन च

१. विष्णुनेति मल्लिनाथो हेमाद्रिश्च। विष्णुश्च न प्रजापतिः। ये च ते ते कु० ६।९ पद्यतः स्फुटाः।

स्पष्टम् । आहृतवस्तुमाहात्म्यमप्यत्र साधकम् । तथा च येन राजर्षि-रुर्वश्या योजितस्तस्य प्राणाधिकमहिम्नो गौरीचरणरागसंभवस्य सङ्गम-नीयाख्यस्य मणिरत्नस्य हरणं यत्सत्यम् असदृशमेव । एवं चात्र स्फुटमेव प्रथमपदं गुरुतमत्वपरम् ।

*सप्तमे* स्थले प्रथमपदं प्रमुखार्थपरमेव । श्राद्धादिषु प्रथमा आहुतिः प्रजापतये दीयते, पराश्च वासवादिभ्य इति आदित्वपरता प्रथमशब्दस्य कल्प-पराहतैव ।

*अवशिष्टेषु त्रिषु* 'प्रथमः कल्प' इति वाग्योगेष्वपि प्रामुख्यमेव महत्त्वापरपर्यायमत्र विवक्षास्पदम् । 'अस्मिन्नवसरे किन्नु करणीयमि'ति प्रश्ने यदा केनचिद् उचितं प्रस्तूयते तदा प्रहृष्टेन प्रष्ट्रा वाक्यमिद-मुच्यते ।' अत्रात्युत्तमत्वमेव हृदयम् । भासोऽपि वाक्यमिदं पञ्चशः प्रायुणक् 'बाढम् । प्रथमः कल्प' इति[1] । कालिदासे पाठान्तरमप्यस्य लभ्यते 'उदारः कल्प'[2] इति । ततोऽपि प्रथमशब्दस्यौदार्यपरत्वं स्पष्ट-भूयिष्ठमेव ।

एवमेव मेघदूतस्य 'प्रथमविरहोदग्रशोकां सखी'मि [ २।५० ] ति 'प्रथमविरहे' [ २.३१ ] इति प्रयोगयोः मालविकाग्निमित्रस्य च 'आर्द्रालक्तकमस्या०' [ ३।१३ ] इति पद्ये च ये प्रथमशब्दास्तेषामादि-त्वपरत्वेऽपि प्रधानत्वपरत्वं सुखेनैवोत्प्रेक्षितुं शक्यम् , प्रथमविरह एव वस्तुतः प्रधानं विरहः, प्रथमसंप्रयोग एव च प्रधानं संप्रयोग इति कृत्वा ।

भारवेः

> प्रणतिप्रवणान् विहाय नः
> सहजस्नेह-निबद्ध-चेतसः ।
> प्रणमन्ति सदा सुयोधनं
> *प्रथमे* मानभृतां न वृष्णयः ।। [ किरा० २।४४ ]

---

१. स्वप्नवासवदत्ते ४।९, अविमारके २।८, प्रतिमानाटके ६।५, मध्यम-व्यायोगे १।५२, बालचरिते च ४।१३ पद्यसंवादेषु 'बाढम् । प्रथमः कल्प' इति प्रयोगः सुलभः ।

२. कालिदासग्र० पृ० ५०५ पं० ९

इति पद्ये मल्लिनाथोऽपि प्रथमशब्देऽग्रेसरत्वमेव पश्यति प्रमुखत्वापरपर्यायम् ।

'प्रथमे हि विद्वांसो वैयाकरणाः'—[1] इत्यानन्दवर्धनोक्तावपि प्रधानत्वमेव प्रथमशब्दस्याभिप्रायभूमिः । कामं तत्राभिनवस्तूष्णीं स्थितस्तथापि विदग्धा अत्र तत्त्वदृश एव । अतएव कृष्णमूर्त्तिरत्र[2] Foremost इत्यनुवदति, दर्शयति च [3]विष्णुपदभट्टाचार्योऽत्र जयन्तभट्टस्य न्यायमञ्जरी-प्रमाणप्रकरणान्ते निबद्धं व्याकरणबहुमानम्, भामहस्य च काव्यालङ्कारगते षष्ठपरिच्छेदारम्भे समुपनिबद्धं तमेव । जयन्तभट्टो हि न्यायमञ्जर्यां व्याकरणस्य निरर्थत्वं प्रत्याख्यायेकविंशत्या पृष्ठैः[4] सार्थकत्वं प्रतिपादयन्नन्ते 'कामं जायेय वैयाकरणभणितिभिस्तूर्णमापूर्णकर्ण' इति मनुष्यत्वं प्रतिपत्स्यमानस्य देवयोनिविशेषस्य मुखादुदीरयते । भामहोऽपि षष्ठे परिच्छेदे—

> धीरैरालोकितप्रान्तममेधोभिरसूयितम् ।
> सदोपभुक्तं सर्वाभिरन्यविद्याकरेणुभिः ॥ २ ॥
> नापारयित्वा दुर्गाधममुं व्याकरणार्णवम् ।
> शब्दरत्नं स्वयं गम्यमलं कर्त्तुमयं जनः ॥ ३ ॥
> तस्य चाधिगमे यत्नः कार्यः काव्यं विधित्सुना ॥ ४ ॥

इति भूम्ना व्याकरणे बहुमानं दर्शयति ।

प्रथमशब्दस्य व्युत्पत्त्यापि प्रधानत्वमेव प्राथम्यं भजते । 'प्रथेरमच्' [ ५।६८ ] इत्यनेनौणादिकेन सूत्रेणामचि प्रत्यये कृते विस्तरार्थकात् प्रथधातोः 'प्रथम'–शब्दस्य शरीरसिद्धिरिति भानुजिदीक्षितप्रभृतयः । विस्तरश्च नान्तरेण प्रसिद्धिम्, प्रसिद्धिश्च नान्तरा प्राधान्येन परिणमतीति गुणादिषु प्राधान्यमेव व्युत्पत्तिलभ्यः प्रथमशब्दार्थः ।

भगवता वेदे पुनः प्रतमशब्दः प्राथम्याय प्ररूढः । तत्र प्रतमस्या-

---

१-२. ध्वन्यालोक १।१३ वृत्त्यन्ते । एवमेव विश्वेश्वरोऽपि स्वहिन्दीभाष्ये 'सबसे प्रमुख' इत्यनुवदति ।

३. K. L. Mukhopadhyaya–1956 ।

४. पृ० ३७२-३९२ ।

दित्वपरकत्वं क्लिष्टम्। प्रतमस्यैव च रूपान्तरं प्रथममिति मॉनियर-विलियम्समहोदयप्रभृतयः। इदमप्यत्र ध्यातव्यं यत् प्राकृते प्रयुक्तः 'पडम'-शब्दः, 'प्रतम'-शब्दस्यैव रूपान्तरमस्ति। यथा—प्रतम > प्रथम > पढम > पडम—( द्र० पास० कोश )।

इत्थं 'प्रथम'-शब्दः प्राक् प्रधानार्थपरतया प्रवृत्तः, पश्चाद्यार्थे निरूढः, प्रधानस्यैव प्रथमगणनीयत्वात्। अत एव च 'प्रथमतरविटः' [ चतुर्भाणी १३१।८ पादता० ] इति 'प्रथमतरवैयाकरण' इत्यादयः प्रयोगाः। अत हेमचन्द्राचार्योऽनेकार्थसंग्रहे 'प्रथमः स्यात् प्रधानाद्यो'-रिति प्राधान्यमेव प्रथमं गणयति। इत्थञ्च ते

*'आषाढस्य प्रथमदिवसे'* [ मे० १।२ ] इत्यत्रापि प्रथमशब्दो दिवस-गतं प्राधान्यमेव मुख्यतया प्रतिपादयितुं सुकविना तादृशीं तत्प्रसिद्धि-मभिवीक्ष्य, उपजीव्य वाऽऽत्मनोऽभ्यासं प्रायोजि। तत्र मल्लिनाथादीना-मिवास्माकमपि योऽन्यथाभावस्तत्र शब्दस्यास्यार्थगतो विपर्यास एव निदानम्, न तु कवेरविवेकः। सहकारवाचकम् आम्रवाचकं वा चूतशब्दं कालिदासो रारटीतीव। साम्प्रतमस्माभिर्हिन्दीभाषिभिर्मीमांसकानां 'चोदनालक्षणोऽर्थो धर्म' इति धर्मलक्षणमिव शब्द एष सहसोदीरयितुं न शक्यते 'रुचिङ्कुरु' इत्यत्रेवाश्लीलार्थप्रत्यायकत्वमनुभवद्भिः। अनार-कलीप्रभृतिषु राघवप्रभृतिभिर्दाक्षिणात्यैः पुनः शब्द एष निर्विचिकित्सं प्रयुज्यते, तेषां देशभाषासु शब्दस्यास्य तथा प्रसिद्धेरभावात्। पेलवादि-शब्देभ्योऽप्यालङ्कारिका जुगुप्सन्ते। नात्र कालिदासस्य देवानां प्रियता। एष हीतिहासपूरुषस्य परीवर्त्तः। अत्र वैदिकेष्विव शब्देष्वाधुनिकैरिव कालिदाससाहित्यपिपठिषुभिरेवावहितैर्भवितव्यम्। एवं च प्रथमशब्दा-दत्राषाढमासस्य प्रमुख एव दिवसो ग्राह्यः, न तु प्रतिपदादिरूप आरम्भिकः। विनिगमकं चात्र 'शेषान् मासान् गमय चतुरो लोचने मीलयित्वा'—इति कविना कण्ठरवेणैवोदीरितस्य मासचतुष्टयावधेर-विपर्ययः। आषाढे हि प्रधानं दिनं हरिशयनपर्वयुतं दिनम्। तच्चैकादशं द्वादशं पूर्णिमासंज्ञकं पञ्चदशं वा भवेदिति भिन्ना कथा। हरिशयनपर्वणि च मेघदर्शनं हरिशयनानुष्ठानस्याङ्गमिति विक्रमे[1] 'मेघदूत में शापावधि

---

१. ई० १९६७—कालिदासविशेषाङ्के।

और चातुर्मास्य' इति नाम्ना [1]सागरिकायां च 'मेघदूते तिथिनिश्चय' इति नाम्ना प्रकाशिताख्यामस्माकं निबन्धाभ्यां प्रमाणितचरमेव—

'निद्रां भवान् भजतां लोकनाथ
वर्षास्विमं पश्यतु मेघवृन्दम् ॥'

इत्यनेन [2]वराहपुराणवचनेन। प्रबोधपर्वण्यपि मेघा न न स्मर्यन्ते तथा हि शब्दकल्पद्रुमे प्रबोधपर्वप्रतिपादनावसरे वचनम्—

मेघा गता निर्मलपूर्णचन्द्रः
शारद्यपुष्पाण्यपि लोकनाथ।
अहं ददानीति च पुण्यहेतो-
र्जागृष्व जागृष्व च लोकनाथ ॥ इति

अत्र लोकनाथपदस्यावृत्तिरपि हरिशयनमन्त्रैकवाक्यतां साधयन्ती भूम्नोपकरोति भावकानाम्।

एवम् 'आषाढस्य प्रथमदिवस' इत्यत्र प्रथमशब्दस्य प्राधान्यपरकत्वमेव कालिदाससमये प्ररूढं पश्यद्भिराद्यार्थैकतानमतिभिराधुनिकैर्निहतार्थत्वमनुभूयापि कविशिल्पे सौस्थ्यमेवानुशीलनीयम्[3] ॥

---

१. व० ६।२ अङ्के।

२. कालिकातासंस्करणे

३. प्रथमशब्दस्य कालिदाससाहित्ये प्रयोगाः

प्रथम कु० २।२७, ४।३९, ५–प्र–२४, ३० ४१,–प्र–६६–प्र–६।३५, ७–२४, ४३, प्र–४४, ८४,

र० ३–४, प्र–२५, ४४, ६८, ४।२४, २८, प्र–७।७१, ८।२८, ५८ ९–३४, प्र–५३, ६१, प्र–७९, १०–प्र–३८, ७६, प्र–११।२२, १२।३९, १३।६,–प्र–१५।३३, प्र–१८।५३, प्र–१९।५६,

मे० १–प्र–२, प्र–१७,–प्र–२१, २–प्र–१८, प्र–३१, प्र–५०,

शा० २।१६, ४–१, ११, १४, ५–प्र–१९, ३१, ३२, ६–२, ३ × ३, ५, ७, १०, प्र–१०, ७–१०, १५, १६, १७, २१ × ४,

मा० १–प्र–३, ४ × १०, १३ × २, २–१, ११, ३।११, ५–१, ५, १० × २, १२, १४,

वि० १।२१, २।६, ३–१ × ७, १७, ४।६८, ५-१, प्र० १६, २१.

सूच्यम् :

यत्रैकस्मिन् सर्गे भागेऽङ्के वा एक एव प्रयोगस्तत्र मध्ये ऊर्ध्वरेखा, यत्र पुनरनेके तत्र '५—प्र–२४, ३०' इत्येवं सर्गाङ्कतः परं तिर्यग् रेखा। शब्दस्य समासगतत्वेऽपि प्रथममक्षरं तिरश्चीनया तिरश्चीनाभ्यां वा रेखाभ्यामङ्कितम्। तत्रापि रेखायाः प्राक् प्रयोगः शब्दस्य समासघटकेषु शब्देष्वन्त्यत्वम्, पश्चात् प्रयोगः पूर्व्यत्वम् उभयतः प्रयोगः पुनर्मध्यगतत्वमुन्मीलयति[1] ॥

१. निबन्ध एषोऽखिलभारतीय-कालिदास-समारोह-शोधपरिषदि उज्जयिन्यां २.११.७६ तिथौ पठितो विचारितश्च विद्वद्भिः।



# षोडशशतकस्य संस्कृतनाट्यसाहित्यम्

*श्री रविनन्दन-त्रिपाठी*

यथापूर्वं बहवः श्रेष्ठकवयः खीष्टीये षोडशशतकेऽपि भारतभारतीं सम्भृतवन्तः। तेषु रूपगोस्वामी अनन्य एव शोभते।

तस्य समयः पञ्चदशशतकं षोडशशतकं च विद्यते। अस्यानुवंशिकः परिचयो जीवगोस्वामिना सनातनगोस्वामिनिर्मिते लघुभागवतस्य लघुतोषिण्यां व्याख्यायामेवं प्रदत्तम्—कर्णाटकस्य राजा सर्वज्ञ-जगद्गुरुर्भारद्वाजगोत्रीय आसीत्। अस्य पुत्रस्य राज्ञोऽनिरुद्धस्य द्वाभ्यां भार्याभ्यां द्वौ तनयौ रूपकेश्वर-हरिहरनामानौ बभूवतुः। हरिहरो दुष्ट आसीत्। स रूपकेश्वरं राज्यान्निःसारयामास। रूपकेश्वरस्य पुत्रः पद्मनाभो गङ्गायास्तटे नवहट्टग्रामे सुप्रतिष्ठितो बभूव। तस्य पञ्चपुत्रेषु कनीयान् मुकुन्दो नाम नवहट्टग्रामं परित्यज्य फतेहाबादमधिवसति स्म-मुकुन्दस्य पुत्रश्श्रीकुमारोऽभवत्। श्रीकुमारस्य त्रीन् पुत्रान् अमर-सन्तोष वल्लभनामकान् चैतन्यः सनातन-रूपानुपमनामभिर्दीक्षितवान्। तेषु अमर-सन्तोषौ गौडराजहुशेनशाहेन रामकेलिनाम्नि ग्रामे राजकीयाच्चपदनियुक्तावास्ताम्। रूपस्तु दीक्षायाः पश्चात् प्रायेण गोकुलमेवाध्युवास।

रूपगोस्वामी भूरिलेख आसीत्। तल्लिखितानां ग्रन्थानां नामानि जीवगोस्वाम्यनुसारेणैवं सन्ति—(१) हंससन्देशम् (२) उद्धवसन्देशम् (३) अष्टादशलीलाछन्दः (४) उत्कलिकावल्लरी। (५) गोविन्दविरुदावली (६) प्रेमेन्दुसागरम् (७) विदग्धमाधवम् (८) दान- (९) ललितमाधवम् (१०) भक्तिरसामृतसिन्धुः (११) उज्ज्वलनीलमणिः (१२) मथुरामहिमा (१३) नाटकचन्द्रिका (१४) पद्यावली (१५) संक्षिप्तभागवतामृतम् (१६) आनन्दमहोदधिः (१७) मुकुन्दमुक्तावली। एतेषु विदग्धमाधवं, दानकेलिकौमुदी, ललितमाधवं च रूपकाणि सन्ति।[1]

---

१. इमानि रूपकाणि प्रकाशितानि सन्ति, काश्यां सरस्वतीभवने प्राप्याणि च।

# विदग्धमाधवम्

विदग्धमाधवस्य नाटकस्य रचना गोकुले १५८६ विक्रमीयवत्सरेऽभूत्। तद्यथा ग्रन्थस्यास्य पुष्पिकायां लिखितमुपलभ्यते—

नन्दसिन्धुरबाणेन्दुसंख्ये संवत्सरे गते।
विदग्धमाधवं नाम नाटकं गोकुले कृतम्॥

कथासारः

राधा गोकुलेषु काचिदपूर्वा सुन्दरीति कंसः शुश्राव। तां कंसस्य कूटपाशाद्रक्षितुं भानुतीर्थे स्वजना तां निह्नूय गोपयामासुः। ततश्च योगमायाया अनुकूलतया गोकुलमानीय राधाया जटिला-पुत्रेणाभिमन्युना सार्धमलीको विवाहः सम्पादितः। राधा तु वस्तुतः कृष्णस्यासीत्। परन्तु तस्याः कृत्रिमः पतिरभिमन्युः तस्या उपरि स्वकीयमधिकारं दर्शयितुमारब्धवान्। तदर्थं स राधां कृष्णस्य सन्निधेर्दूरीकर्तुमियेष।

राधा-कृष्णयोरनुरागविधावीदृशमन्तरायं दृष्ट्वा नारदनिर्देशानुसारेणोज्जयिन्या महर्षेः सान्दीपनेर्जागतिकप्रेमप्रपञ्चे नदीष्णा माता तत्सेविका पूर्णमासी च गोकुलमागत्य राधा-कृष्णसङ्गमे साहाय्यमाचरताम्। स्वतनयं मधुमङ्गलं सान्दीपनिः कृष्णस्य गोकुले सहचरं व्यधात्।

पौर्णमासी अभिमन्युमनसि विश्वासमुत्पादयामास यदहं तथाचरिष्यामि यथा राधा तवाधिकाराद् बहिर्गन्तुं न प्रभवेत्। नान्दीमुखीमपि पौर्णमासी कर्मण्यस्मिन् नियुक्तवती। राधापि ललिताविशाखयोः सहायतया कृष्णमिलनस्य नव-नवां योजनां निर्माति स्म।

कृष्णस्य वेणुवादनं श्रुत्वा चराचरं जगद् आनन्दातिरेकं लेभे। ब्रह्मादयो देवा वेणुरवं श्रोतुमागच्छन्। समग्रं विपिनं मङ्गलमयमासीत्। अस्मिन्नेवावसरे पौर्णमासी मोदकान् आदधती तत्रागात्। सा तत्र उद्घोषयामास यद् मुखरा स्वस्या नप्त्या विवाहमभिमन्युनाम्ना गोपयुवकेन सह निश्चिनोति स्म। तदुत्सव एव मोदका वितीर्यन्ते। कृष्णो राधाया नामग्रहणं श्रुत्वा विलक्षो बभूव।

समग्रेऽप्यस्मिन् नाटकेऽभिमन्युजननी जटिला स्वपुत्रेण सह राधाकृष्ण-समागमेऽन्तरायभूता दृश्यते। अन्ततश्च विविधैः कूटैरुपायैरभि-

मन्युर्मथुरागमनविचारमुज्झति। जटिलाप्यनुकूला सञ्जायते। राधा-कृष्णयोः समागमो निर्बाधो भवति।

## ललितमाधवम्

ललितमाधवं रूपगोस्वामिनो द्वितीयं नाटकं वर्तते। अस्य रचना १५३७ ईशवीये संवृत्ता। अस्मिन्नपि नाटके कृष्णस्य राधाचन्द्रावली-प्रभृतिभिर्नायिकाभिः समं प्रणयस्य वर्णनं विद्यते।

कथासारः

सन्ध्यासमये कृष्णो गोभिः समं वनभूमेर्गृहमागच्छन्नासीत्। नभसि चन्द्रोदयो विलसति स्म। भारुण्डा-जटिलाप्रभृतिभिर्वृद्धाभिश्चन्द्रावली-नाम्नी प्रेयसी गर्भगृहे वन्दीकृतासीत्। यतो हि सा कृष्णं मिलितुं न शक्नुयात्। चन्द्रावली भारुण्डातनयेन गोवर्धनेन सह परिणीतासीद्, राधा च जटिलापुत्रेणाभिमन्युना। कुन्दलता नाम्नी चन्द्रावल्याः सखी स्वबुद्धिकौशलेन तां कृष्णेन सह समगमयत्। तयोः प्रेमवार्ताप्रारम्भ एव भारुण्डा तत्राजगाम। चन्द्रावली पद्मानाम्न्या स्वसख्या सह ततः प्रणष्टा। कृष्णश्च मातुरुत्सङ्गे शिरो निधाय 'देहि मे मणिमण्डनम्' इति ययाचे।

अस्मिन्नेव समये 'अशोकनिकुञ्जे राधा त्वां प्रतीक्षते। तां कृतार्थां विधेही'ति कुन्दलता संदिदेश। कृष्णो राधा च परस्परम् अमृतानन्दनिस्यन्दावास्ताम्। राधा-कृष्णौ क्षणायैव मिलितौ, तदैव जटिला कृष्णं शपन्ती तत्राजगाम।

राधा स्वगृहे निरुद्धासीत्। तस्याः श्वश्रूर्जटिला सुविदितराधाकृष्ण-प्रेमवृत्तान्ता राधां गृहाद् बहिर्गन्तुं निषिषेध।

एकस्मिन् दिवसे राधया सविता पूजयितव्य आसीत्। कृष्णो विप्रवेशो भूत्वा मधुमङ्गलादिभिर्मित्रैः समं पूजास्थले समागतः। जटिला कृष्णं परिचेतुं न शशाक। अतः साकथयत्—अयमेव वटू राधया सूर्यमर्चयतु। राधा तु तं परिचिनोति स्म। तदा कृष्णो मन्त्रं पपाठ—

> निभृतमरतिपुञ्जभाजि राधे,
> त्वदधरवर्धितचापले चलाक्षि।

चटुलय चपलां दृगन्तलक्ष्मीं,
मयि कृपणे क्षणमो ३ न्नमः सवित्रे ॥ २. १३

पूजान्ते वटूयतः कृष्णस्येच्छानुसारेण राधा सायं रत्नसिंहासने नीयते स्म। तदा कंसप्रेषितश्शङ्खचूडो नाम राक्षसो राधां जहार। कृष्णस्तं हत्वा सर्वान् ररक्ष।

कंसोऽक्रूरद्वारा बलरामं कृष्णञ्च मथुरामानिनाय। ताभ्यां सह पौर्णमास्यपि मथुरां ययौ। गोकुलं विषादान्धकारे निमग्नं बभूव। राधाया अवस्था नितरां शोचनीयासीत्। सा कृष्णवियोगे मुक्तकण्ठं रोदिति स्म। अर्धोन्मत्तेव राधा चक्रवाकीं, वायसं, शारिकां, हरिणीं, गुञ्जावलीं, चन्द्रावलीं, जलधरं, गिरिवरं गोवर्धनं, कदम्बञ्च कृष्णप्रवृत्तिं पृच्छति स्म। तदन्ते सा मूर्च्छिताऽभवत्। तस्या नासिकाशिखरे कृष्णस्य निर्माल्यमालागन्धेन सा पुनर्दृगञ्चलमुन्मिमील। सा कृष्णस्य मिलनस्थलं खेलातीर्थमगच्छत्। विशाखया समं राधा यमुनाजलेऽवतीर्णा। ते द्वे अपि जलप्रवाहे निमग्ने सञ्जाते। केनापि तयोर्जलादुत्तरणं न दृष्टम्। राधाया अपरा सखी ललिता राधाया जलगतिमसहमाना गिरिशिखरादधो निपपात।

मथुरायां सबलरामः कृष्णश्चाणूरादीन् मल्लान् निहत्य कंसं जघान। ततः तत्रैव मथुरायां कृष्णस्य व्रतबन्धसंस्कारः सम्पादितः। तस्मिन् संस्कारे सम्मिलितुं यशोदारोहिण्यौ गार्ग्या सार्धं तत्र जग्मतुः। गोपीभिः समं चन्द्रावलीमानेतुमुद्धवो गोकुलमगच्छत्, परन्तु तामादाय रुक्मी प्रथमत एव कुण्डिनपुरं जगाम। स शिशुपालादिदमधिजगाम यदियं चन्द्रावली रुक्मिण्येव।

राधाऽस्मिन् नाटके सत्यभामारूपेण माधवस्य पुनः पत्नी भवति। नाटकेऽस्मिन् चन्द्रावली-रुक्मिण्योः तथा च राधासत्यभामयोरैक्यं सम्पादितम्।

चन्द्रावलीं रुक्मिणीमिति कृत्वा कृष्णः स्वयंवराद्धरति। राधा च सत्यभामारूपेण चिरं रुक्मिणीसंरक्षणे उषित्वा पश्चात् कृष्णं पतिं प्राप्तवती।

## दानकेलि-कौमुदी

रूपगोस्वामिना दानकेलिकौमुदी नाम भाणिका १५४६ ईशवीयाब्दे विरचिता। भाणिकां परिभाषयन्तः, शारदातनयो रामचन्द्रगुणचन्द्रौ च कथयाम्बासुर्यद् भाणिकाया उपजीव्यं हरिचरितं भवति, प्रयोगस्य चास्मिन् सुकुमारता भवेत्। साहित्यदर्पणानुसारेण भाणिकानाम्न्युपरूपके मुख-निर्वहणनामानौ द्वौ सन्धी भवतः। भाणिकाया नायिकोदात्ता भवति। उपन्यास-विन्यास-विबोध-साध्वस-समर्पण-निवृत्ति-संहारनामकानि सप्ताङ्गानि भवन्ति। इमानि च सप्ताङ्गानि दानकेलिभाणिकायामुपलभ्यन्ते। परिभाषानुसारेणास्यां कैशिकी-भारत्योर्वृत्त्योः प्रयोगः प्राप्यते। अस्याः कथावस्तुनि हरिचरितस्य गानं विद्यतेऽतोऽस्य कथावस्त्वपि शास्त्र-दृष्ट्या समीचीनं वर्तते। अत्र विष्कम्भकम् अशास्त्रीयम् भवति।

कथासारः

मधुपुरं विहायानकदुन्दुभिर्गोविन्दकुण्डस्य तटे यज्ञस्यानुष्ठानमकरोत्। मथुरायां कोऽपि कंसशासनाद् यज्ञं कर्तुं न शक्नोति स्म। अस्मिन् यज्ञे बलरामकृष्णयोरनिष्टनिवारणं समीहितमासीत्। यज्ञश्चायं गोपीभिः प्रदत्तेन नवनीतेन सम्पाद्यमान आसीत्। राधा सखीभिः समं नवनीतसम्भृतं घटं शिरसि निधाय तत्र प्रचलिता सखीभिः समं गच्छन्तीं राधां कृष्णस्य वयस्या वर्णयन्ति—

शोणे मण्डितमूर्ध्नि कुण्डलतया क्लृप्ते दुकूलोत्तमे,
न्यस्तां स्वर्णघटीं वहन्त्यचटुलां हैयङ्गवीनोज्ज्वलाम्।
दूरे पश्य तथाभिधाभिरभितः स्मेरा सखीभिर्मिथः,
राधा माधव ! जाह्नवीतटभुवं स्वैरं परिक्रामति ॥

राधापि कृष्णं प्रति पूर्वत एवाकृष्टासीत्। कृष्णो सुबल-मधुमङ्गलाभ्यां सार्धं राधायाः रूपमाधुर्यं व्यलोकयत्। ततः स वेणुं वादयामास। सर्वे मुग्धाः सञ्जाताः। कृष्णो राधा च परस्परं मोहितावास्ताम्।

तद् दृष्ट्वा राधां ललिताऽकथयत् कृष्ण इत एवागच्छति। अतो वयमितः शीघ्रं चलाम। ततस्ता गच्छन्तीरवलोक्य सुबल उवाच—

घट्टचत्वरनाथममिलित्वैव, अप्रणम्यैव भवत्यः क गच्छन्ति ? विशाखा उवाच—भगवतीवचनाद् वयं ब्राह्मणेतरं न प्रणमामः। अर्जुनो बभाण-घट्टपालोऽपि व्रती विद्यते। अमुं प्रणम्य शुल्को दातव्य एव। चित्रोवाच-शुल्कप्रदानेन नवनीतमशुद्धं जायते। इदं च हैयङ्गवीनं यज्ञाय नीयते। वयं सपादाणकप्रदाने न प्रभवामः। एवं हासपरिहासानन्दं सर्वेऽगृह्णन्।

राधिकादिभिः शिरोनिहिता घटा अवरोपिताः। सर्वाभ्यः ताम्बूलं प्रदीयतामिति कृष्णो वयस्यानादिदेश। सुबलः शुल्काय निर्बन्धं चकार स्म। कृष्णस्तस्मै परिष्वङ्गदानं ददौ। तद्दृष्ट्वा राधा पुलकाञ्चिता सञ्जाता।

राधा ललितामकथयत्—किं नावलोक्यतेऽस्य निकुञ्जराजस्य धाष्टर्यं पतिव्रताः प्रति ? चम्पकलता सुस्पष्टमवदत्—एष तु कश्चन लुण्टाको वर्तते। राधोवाच—त्रिलोक्यां कस्य साहसं यो गोकुलबालाभ्यो दानस्य नामापि गृह्णातु ? पुनश्च वयं सूर्योपासिकाः। कृष्णः समुदीरितवान्—नाद्य भवत्य एवमेवेतो गन्तुं पारयन्ति। राधा ललितामुवाच-अद्य अनेन धृष्टेन सङ्गताः स्मः। तदा कृष्णो राधामवादीत्—

'त्वं राधे शिवमूर्तिरित्युरसि मां भोगीन्द्रमङ्गीकुरु।'

ततश्च कृष्णः स्वश्रृङ्गारव्रतं विवृणोति स्म-

'अस्मिन्नद्रौ कति नहि मया हन्त हारादिवित्तं,
हारं हारं हरिणनयना ग्राहिता जैनदीक्षाम् ॥'

वृन्दोवाच—काणं कपर्दमपि तुभ्यं न दास्यते। कृष्णो राधाभणितानि श्रुत्वा तां प्रार्थयामास—

घट्टशुल्कप्रदानाय गुहातिथ्यग्रहाय च।
स्पृहा ते हेमगौराङ्गी गिरस्तां गोचरीकुरु ॥ ४६ ॥

अरविन्ददृशामपश्चिमा,
त्वमपूर्वा बहुरूपलीलया।
कपटोद्घटनाददक्षिणा,
न कथं वा भवितास्यनुत्तरा ॥ ४७ ॥

तदानीमेव नान्दीमुखी भगवती-सन्देशं गृहीत्वाऽऽगच्छत् यदिमा राधादयो गोपबालिका नवनीतमादाय यज्ञवाटं गच्छन्ति। आभ्यो

घट्टशुल्कादाने कोमलं व्यवहर्तव्यम्। श्रुत्वैतत् कृष्ण उवाच—चतुर्लक्ष-स्वर्णटङ्कमितं शुल्कं प्रदेयम्। चित्रोवाच—पञ्चघटमितं तु नवनीतमस्ति। तस्योपरि इयच्छुल्कं कुतः ?

नान्दीमुखी उवाच—कुत एता एतादृशं शुल्कं प्रदास्यन्ति ? कोऽपि सरल उपायश्चिन्तनीयः। कृष्णोऽब्रवीद्—उपाय एक एवास्ति यदेतासु कामप्येकां गृह्णामि। ललिता झटित्यकथयत्—

'एतत्खलु मनोरथमात्रेण द्राक्षाभक्षणम्, अदक्षस्य लोलुपकीरयूनः।'

वृन्दोवाच—इमां ललितामेव रक्षतु भवान्। इयमाभूषणभूषिता वर्तते। राधायाः पार्श्वेऽलङ्कारा न सन्ति। तदा तु कृष्णो राधाया अलङ्कारान् निर्दिशति स्म—

सेयं मुग्धे शिखरदशना पद्मरागाधरोष्ठी,
राजन्मुक्ता स्मितमधुरिमा चन्द्रकान्तस्य बिम्बा।
उद्दीप्तेन्द्रोपलकचरुचिः पश्य ही राधिकेति,
त्यक्तुं युक्ता न किल तरुणीरत्नमाला महिष्ठा ॥ ४६ ॥

इत्युक्त्वा कृष्णो राधां ग्रहीतुमचलत्। राधा साध्वसातिरेकाद् विशाखे! त्राहि मां त्राहि मामित्यब्रवीत्। परन्तु शीघ्रमेव सा कृष्णाभिमुखी भूत्वा परिहसति स्म। सोवाच—तव सन्निधौ मम कावश्यकता ? त्वं तावद् 'गह्वरं गत्वा मुरलिकानागिनीं चुम्बस्व'। कृष्णोऽब्रवीत् तत्त्वं त्विदमस्ति—

गव्यभारभरभुग्नकन्धरां त्वद्विधां विधुरगात्रि मद्विधः।
स्प्रष्टुमप्यहह लज्जते पदा दैन्यमाचर न हासदम्भतः॥

ततो राधा वदति स्म—एषाहं गच्छामि। पश्यामि तावत् कथमिव भवान् शुल्कं ग्रहीष्यति ? तदा कृष्णस्तां ग्रहीतुमैच्छत्। राधोवाच—किं किमये किमिदं करोषि ? अहं पतिव्रतास्मि। मम स्पर्शान्न बिभेति भवान् ?

राधां शुल्कदानोद्यतां वीक्ष्य कृष्णोऽकथयत्—

अयि सुकलेवरमधुना शुल्कं त्वां दातुमुद्यतां प्रेक्ष्य।
परमोत्सवचटुलेयं कुरुते भ्रूनर्तकी नृत्यम्॥

विशाखोवाच—शुल्करूपेण वृन्देयं भवते प्रदीयते। सुबल उत्तरं ददौ—

वृन्द-पञ्चतये युक्तमेकवृन्दार्पणं कथम्।
संख्याविदां न नः शक्यं गोसंख्यानां प्रतारणम्॥ ६२॥

कृष्णो मधुमङ्गलमाचख्यौ—

'तदेषा राधिकाख्यां गता भ्रमरी शुल्कार्थमादेया'।

ततश्च राधामाख्यातवान्—

दातुमिच्छसि न काञ्चनानि चेत्,
चातुरीं मनसि काञ्चनाश्रिता।
गौरि! गैरिकविचित्रितोदरीं,
त्वं ततो प्रविश भूभृतोदरीम्॥ ७२॥

राधा कृष्णं परिहसन्त्युवाच—

वक्रस्त्रिधा त्वमादौ मध्ये चान्ते च वंशिकारसिक।
कलकृतजगतः प्रलयो वक्रेश्वर एव देयोऽसि॥ ८५॥

कृष्णश्च हसन् राधायामष्टधा वक्रतां समर्थितवान्—

वाचि कचे भ्रुवि दृष्टौ स्मिते प्रयाणेऽवगुण्ठने हृदि च।
त्वामित्थमष्टवक्रामष्टावक्रायितां वन्दे॥ ८६॥

चम्पकलतोवाच—वक्रेण सह वक्रा क्रीडतु, वयमन्यत्र यामः।

अन्ततः पौर्णमासी समागता। ललिता तामुवाच—शुल्करूपेणास्मै राधिकाया हारः समर्पितः। ततोऽपि गतिर्नास्ति। पौर्णमासी कृष्णोचितं समादधौ—

या पञ्चसु सरोजाक्षि! परमाराधिका भवेत्।
धरा सैवास्य विज्ञेया धुरीणाराधने भवेत्॥ ६४॥

राधिकोक्तवती—अलं मामस्मै कातरां कठोराय घट्टपालाय समर्प्य। अयं तु—

भ्राम्यत्येष गिरेः कुरङ्गकुहरे कृष्णो भुजङ्गाग्रणीः,
स्पृष्टो येन जनः प्रयाति विषमां कामप्यसाध्यां दशाम्।
नाभद्रं न च भद्रया कलयितुं शक्तास्मि दृष्टिच्छटा-
मात्रेणास्य हृताहमिच्छसि कुतः प्रद्वेप्तुमत्रापि माम्॥ ६५॥

इति कथयित्वा स कृतकं रोदिति स्म। पादयोर्निपपात। सर्वं सुखोदर्कं भविष्यतीति पौर्णमासी राधामाश्वासयामास।

पौर्णमासी कृष्णाय न्यवेदयत्—राधेयं सायं त्वया लभ्यताम्। सम्प्रतीयं यज्ञं प्रति प्रयातुमर्हति। ततश्च सा (पौर्णमासी) कृष्णं प्रशंसति स्म—

सहचरीकुलसङ्कुलया गुणै-
रधिकया सह राधिकयाऽनया।
तमिह नर्मसु ह्यन्मिलितः सदा,
घटय माधव ! घट्टविलासिताम् ॥ १७ ॥

रूपगोस्वामिनः शैली श्लेषनिर्भरा विद्यते। परिहासात्मकेषु प्रकरणेषूच्चस्तरीयः श्लेषो दृश्यते। संवादेषु प्रायशः स्वाभाविकता विलसति। लोकोक्तीनां प्रचुरः प्रयोगो नात्योचित आस्ते। कवेरस्य वाङ्मयोपरि परिपूर्णोऽधिकार आसीत्।

## वल्लीपरिणयः

वल्लीपरिणयस्य[1] रचयिता भास्करयज्वा महाकवेः शिवसूर्यस्यात्मजो, डिण्डिम(द्वितीय)स्य च जामातासीत्। भास्करयज्वनो रचनाकालः षोडशशतकस्य प्रथमचरणो विद्यते।

भास्करस्य चरित्रं समुज्ज्वलमासीत्। असौ स्वभावेन विनयशीलश्च बभूव। तच्च नाटकान्ते कवेरुक्त्या प्रकटितम्—

स्वल्पोऽपि वाग्विभव एष तनोतु मोदं,
भूयांसमेव विदुषां हृदये मदीयः।
बालोक्तिरादरभरात् सवनेन किं वा,
कुर्यान्मुदं शिथिलवर्णपदापि पित्रोः ॥

### कथावस्तु

विष्णोस्तेजः कस्याञ्चिन्मृग्यां समाहितम्। तत्तेजसा कन्यारत्नमेकं मृगी सुषुवे। शबरराजः कश्चन तां कन्यकां स्वात्मजामिव पुपोष। यदा

---

१. पुस्तकस्य हस्तलिखिता प्रतिः सागरविश्वविद्यालये वर्तते।

सा कन्या शनैः शनैर्ववृधे, तदा शूरपद्मनामा दानवः तां लब्धुमियेष। शिवकुमारः कुमारोऽपि तामिच्छति स्म।

कुमारो विदूषकेण सहोद्यानं ययौ। तत्र तौ मालतीमण्डपे तस्थतुः। तत्रैव सन्निकट एव सखीभिः परिवृता वल्ली समागता। तासां वार्तां नायकः ( कुमारो ) निभृतः सन् शृणोति स्म।

वार्ताया विषय आसीत्—

अव्याजशोभनस्यास्या रूपस्य सदृशो वरः।
लोकेषु दुर्लभं नूनं कुतो वा वेधसा कृतः॥

श्रुत्वैतत् कुमारो वल्ल्याः पार्श्वं गच्छति। वल्ली तु तस्य रूपमाधुरीमवलोक्य मुमोह। तत्सखी व्यञ्जनया नायकमाचख्यौ—अपहरणविधिनेमां प्राप्नुहीति।

नायकश्च सामुद्रिकपरीक्षणाय नायिकायाः करं ददर्श मनसि च तत्करस्पर्शप्रमोदमनुभवन् चिन्तयामास—

सन्ततं प्रसभमिदं मनो ममायं,
स्पर्शोऽस्याः करकमलस्य पद्मलाद्याः।
संसिञ्चन्नमृतरसैरिवातिमात्रं,
किन्त्वेतन्मदयति विस्मृतान्यभावम्॥

ततश्च सुस्फुटमकथयद्—यदस्य करग्रहणं केनापि महाभागेन करिष्यते। एतस्मिन्नेव काले पिता वल्लीमाकारयामास। वल्ली सखीभिः सममगच्छत्।

ततो वल्लीकुमारौ कुसुमशरपीडया व्यथितावभूताम्। यन्त्रधारागृहे नायको नायिकां विरहविधुरामवलोक्याकथयत्—अहं तव समागमाशयैव धृतजीवनोऽस्मि। तयोः प्रेमसंलापं श्रुत्वा तयोः शुभाकाङ्क्षिणो जनाद् अन्यत्र गतवन्तः। नायिकापि गन्तुकामा बभूव। नायकस्तामाश्वास्याकथयत्—

जितकाञ्चने तवास्मिन् कुचयुगले चारुदाडिमप्रख्ये।
रचयन्तु तरुणि ! नखराश्शुकमुखलीलां ममाद्य ललिताङ्गि !॥

नायकः परिष्वङ्गं नायिकां प्रार्थयत। तदानीमेव कश्चन हस्ती ततो

निःसरति स्म। तदा भयान्नायिका नायकमालिङ्गति स्म। तदनन्तरं विदूषको वल्ल्याः सख्यश्च आजग्मुः। सख्यो नायिकां गृहमानाययामासुः।

ततश्च चूलिकया सूच्यते यद् विष्णुकन्या वल्ली कुमारं वरीतुमिच्छति किन्तु शूरपद्मनामा दानवस्तां बलाद् हर्तुकामोऽस्ति। अतः सा तिरस्करिण्या शचीसान्निध्यं प्रापिता। कुमार-दानवयोः महायुद्धं बभूव। युद्धस्य वर्णनं नारदचित्ररथौ कृतवन्तौ। प्रथमं शूरपुत्रः यमपुरीं प्रेषितः। भानुकोपो दानवनगरीं सन्दीपयामास। दैत्याङ्गना भृशं चुक्रुशुर्विलेपुश्च। गणेशः शुण्डादण्डेन रिपूणामागमनमार्गं रुरोध। शूरपद्मः कुक्कुटस्य मयूरस्य च रूपं विधाय षडाननशरणमाययौ।

कुमारः पार्वतीशङ्करयोः प्रेमभाजनं समपद्यत। शिवयोरनुमत्या शची मण्डितां वल्लीं कुमाराय ददौ। सर्वे तां 'सौभाग्यभाजनं भूयाः' इत्याशिषा वर्धयाञ्चक्रुः॥

## धर्मविजय-नाटकम्

धर्मविजयनाटकस्य प्रणेता भूदेवशुक्लोऽस्ति। भूदेवरचिते रसविलासे लेखकस्य परिचय एवमस्ति—

जम्बूसरःस्थितिजुषः शुकदेवसूरेः,
भूदेवपण्डितकविः प्रथमस्तनूजः।
तन्निर्मितो रसविलासपदाभिधेयः,
सन्दर्भ एष कविता-मुदमादधातु॥

धर्मविजयनाटकस्य बडोदाप्राप्त हस्तलिखिते ग्रन्थे १७६३ विक्रमसंवत्सरस्योल्लेखो विद्यते। तस्मात् यस्य रचना १७६३ विक्रमसंवत्सरात् प्राक् प्रतिभाति। अस्य पुष्पिकायां श्रीकण्ठदीक्षितोऽस्य गुरुरिति निर्दिष्टम्। नाटकस्य प्रस्तावनानुसारेण दिल्लीदयितवेतनदानामात्यस्य राजर्षेः केशवदासस्याज्ञानुसारेणास्याभिनयोऽनुष्ठितः। राजापत्वान्नायं ब्राह्मणोऽपितु कश्चिदपरजातीयः क्षत्रिय एव केशवदासः सम्भवतः सम्राजोऽकबरस्य समकालिकः षोडशशताब्द्यामवर्तत। कविरसौ हरिहरयोरुपासक आसीत्।

भूदेवस्य वसतिः सम्भवतो गुर्जरप्रदेशो विद्यते। गुर्जरप्रदेशे जम्बू-

सरोऽस्ति, यन्नाम कवी रसविलासपुष्पिकायां स्ववसतिरिति समुल्लिलेख । कवेर्मध्यदेशं प्रति सातिशयः पक्षपातः—

अधर्म इव धर्मेण भूभारक्षमबाहुना ।
मध्यदेशक्षितिभुजा जितो दक्षिणभूपतिः ॥

कथानकम्—

सत्ययुगे धर्मोऽधर्मं धर्षितवान् । यथा—

ज्ञानं तपो यज्ञविधिः प्रदानमेते कृतादौ सुकृतावताराः ।
एतैः समाकृष्य जगन्ति धर्मः सन्तापयामास बलादधर्मम् ॥

त्रेतायां ज्ञानं विनष्टं द्वापरे च तपः । कलौ केवलं, विष्णोरवलम्बोऽवशिष्टः । धर्मराजः सेनापतिं पुराणश्रवणादिकं तु तीर्थं पुरं पत्तनमरण्यमायतनं पर्वतादिकं च विजयाय प्रेषितवान् ।

नाटकेऽस्मिन् व्यभिचारः परस्परप्रीतिं वृद्धधनपालस्य युवत्याः कामाचारं पृच्छति । अनाचारश्च तीर्थयात्रायाः प्रतिनिवर्त्य स्वकीयां कामकथां प्रकटयति । विविधप्रदेशानाञ्चानुभवं वदति—

खादन्तीज्यामन्तरेणापि मांसं,
विन्ध्यस्याद्रेरुत्तरस्यां द्विजेन्द्राः ।
आवृद्धं चाबालमास्वादयन्ति,
प्रायः प्रीत्या दाक्षिणात्याः पलाण्डुम् ॥ २.२३

द्वितीयेऽङ्के पौराणिकोऽधर्मश्च वार्तालापं कुरुतः । येन चारित्रिकह्रासक्रमः प्रकाशमायाति ।

तृतीयाङ्के पण्डितसङ्गतिर्मृतिं कामयमाना परीक्षां ब्रूते—विद्याया अभाव एव मां तथा—चरितुं नोदयति । ततः परीक्षा-पण्डितसङ्गती अनुगृहं विद्यामन्विष्यतः । भ्रमित्वा च वैद्यपार्श्वं गच्छतः । वैद्यराज उपचारं समर्थयति—

चूर्णं कषायो गुटिकावलेहः पाकश्च सन्दिग्धचिकित्सितानि ।
आरोग्यकारि ज्वरितस्य शीघ्रं तन्नायसेनाङ्कनमेकमेव ॥ ३.६

परीक्षा-पण्डितसङ्गतिभ्यां गणक उपलब्धः ।

तेनात्मपरिचयो दत्तः—

'आजन्मसिद्धप्रमादपरवशतया मुहूर्तमपि न जानीमः ।'

ततः ताभ्यां स्मार्तः समुपलब्धः । तस्यात्मपरिचयः—

'विक्षेपस्यासङ्गसेविना मया न कोऽपि दृष्टो निबन्धः ।'

ततः परीक्षा-पण्डितसङ्गती वैदिकगृहं स्मार्तेन सह यातः । तद्विषये स्मार्तो ब्रूते—

पत्न्या नितम्बमभिमृश्य शिरोभ्रमेण,<br>
किं केशपाशविकला मृतभर्तृकेयम् ।<br>
इत्थं विषण्णहृदयः शयने निषण्णो,<br>
हा पुत्र मातरिति रोदिति वैदिकोऽयम् ॥ ३.२६

चतुर्थाङ्के महापातकं न्यायाधिकरणेन दण्ड्यते—

'प्रथमतश्छिन्नशिश्नमेनं तप्तसुरां पाययित्वा स्वर्णमुसलेन कृतक्षतमश्वत्थकाष्ठे प्रज्वालयन्तु ।'

प्रयागे धर्माधर्मयोः ससैन्ययोर्युद्धं भवति । तत्राहिंसा हिंसां, दया क्रोधं, शौचोऽशौचञ्च जयन्ति । ततो धर्मो महाविद्यामवलोकयितुं दशाश्वमेधं गच्छति ।

पञ्चमेऽङ्के राजा, कविता, परिवारश्च रङ्गपीठे समुपस्थिता भवन्ति । कविता राजानं कथयति—प्रजा समुन्नता विद्यते । सम्प्रति किमपि चारित्रिकं दूषणं नावलोक्यते । यथा—

हिंसा यज्ञे संस्कृतानां पशूनां<br>
स्पर्धा विद्याकामुकानां वटूनाम् ।<br>
क्रोधः क्रीडद्बालकानां, गुरूणां,<br>
शिष्याणां चाध्यात्ममार्गे विवादः ॥ ५.२१

## भावनापुरुषोत्तमम्

भावनापुरुषोत्तमनाटकस्य रचना षोडशशतकस्य मध्यभागे श्रीनिवासदीक्षितेन कृता[1] । तञ्जौरमण्डलस्य अद्वितीयरत्नेष्वस्य गणना विधीयते । श्रीनिवासस्य जन्म विद्वत्कुलेऽभवत् । अस्य पिता भवस्वामी-

१. सागरविश्वविद्यालये हस्तलिखित नाटकमिदं लभ्यते ।

भट्टः, पितामहः श्रीकृष्णार्यः, प्रपितामहः कुमारभवस्वामी अभूवन्। नाटकस्य प्रस्तावनानुसारं श्रीनिवासः राज्ञा सूरपनायकेन प्रतिष्ठापितेऽस्मिन् सूरसमुद्राग्रहारे निवसति स्म। यथा—

सूत्रधारः—

अस्ति खलु कश्चित्तोण्डीरेषु श्रीसूरसमुद्राभिधानो महानग्रहारः,

तत्रास्ति कश्चित्तरुणाग्निहोत्री,
षड्दर्शनी सागरपारदृश्वा।
शतावधानीत्यपराभिधानः,
श्रीश्रीनिवासाध्वरिसार्वभौमः॥

कथानकम्—

भावनापुरुषोत्तमनाटके योगविद्यानाम्नी परिव्राजिका भावनानाम्नीं नायिकां पुरुषोत्तमेन सङ्गमयति। भावना जीवदेवस्य कुमारी वर्तते। सा पुरुषोत्तमं प्रति समासक्तास्ति। पुरुषोत्तमोऽपि भावनानुरागाविष्टो मृगयापदेशेन गरुडमारुह्य निष्क्रान्तः। ततो नायकः तत्रोद्याने, तुलसीं प्रपूज्य सखीभिः समं संलपन्तीं, भावनामपश्यत्। तस्या अनुपमां रूपसम्पदमवलोक्य नायकः तन्मयो बभूव। भावनापि पुरुषोत्तमं वीक्ष्य तदनुरागमयी भवति।

भावनायाः कामसंतप्तायाः तत्सखीभिः तस्याश्शीतोपचारः क्रियते। पुरुषोत्तमोऽपि भावनागतां स्वां मानसिकीं प्रवृत्तिं गरुडविदूषकस्य पुरो विश्लेषयति—

तन्मुखं स च दृगञ्चलक्रमः,
सा च वाक्यरचना चमत्क्रिया।
तानि तानि हसितानि सुभ्रुवः,
सन्ततं मनसि सञ्चरन्ति मे॥

किञ्च—

तदपाङ्गबाणकृतरन्ध्रवर्त्मना,
तरसा प्रविश्य विषमायुधो मनः।

विविधैर्भिनत्ति विशिखैर्विश्रृङ्खले,
विधिचातुरीयमिति मन्महे वयम् ।।

अथ च—

उत्तानितं कचभरग्रहणेन तस्या-
स्स्विद्यत्कपोल-विलसत्पुलकप्ररोहम् ।
किञ्चार्धकुड्मलित-दृष्टिमुखं कदा नु,
स्मेरं निरूढकिलकिञ्चितमापिबेयम् ।।

काञ्चीपुर्यां भावनायाः स्वयंवरो भवति । तत्र चार्वाक-सिद्धान्तो नास्तिकशिष्येण सह सर्वप्रथमं समायाति । स च वेदान्, स्मृतीः ऐकान्तिकत्वेन निराकरोति । जैनसिद्धान्तं विनिन्द्यापि तस्य दीक्षां ग्रहीतुमना जायते । तत्रापि केशलुञ्चनाद् भीतस्तं परित्यजति । ततो बौद्धसिद्धान्ताय स्पृहयति । तस्य दृष्टौ बौद्ध सिद्धान्त एवमस्ति—

भवान् योगाभ्यास-स्तिमित इव निध्यायति दिवा
निशा भुक्तास्तास्ता रहसि मठवासीर्मृगदृशः ।।

ततः स बौद्धदीक्षां ग्रहीतुकामो भवति । परन्तु यदा स बौद्धधर्मस्य मूलसिद्धान्तान् शृणोति तदा ततोऽपि विरक्तो जायते । कापालिकः कश्चित् तेन पृष्टः स्वमतं विवृणोति—

पातव्यं मधु मत्तचन्द्रवदनागण्डूषितं सर्वदा
कर्तव्या सरसामिषाशनकला यस्मिन् मते देहिनाम् ।।

ततश्चार्वाकश्शक्तिसिद्धान्तं मिलति । स खलु त्रिपुरसुन्दर्या उपासकः । तन्मते—

'मद्यं पेयं मांसमासेवनीयम् ।'

एतदनन्तरं चार्वाकः सामयिकसिद्धान्तादीन् तेषां मतानि पृच्छति । सर्वे च ते सिद्धान्ताः स्वं स्वं मतं विश्लेषयन्ति ।

देवा अपि स्वयवरार्थिनो भूत्वाऽऽयान्ति । जीवदेवो गुरुवाणीमनुसरन् भावनायै पुरुषोत्तममेव श्रेष्ठं वरमवधारयति । सर्वे देवा भावनां पुरुषोत्तमार्थिनीमवगत्य पुरुषोत्तमस्य रूपं धारयन्ति । भावना सर्वान् देवानस्वीकरोति । तुलसीकृपातो भावना वास्तविकपुरुषोत्तमं वीक्ष्य तत्कण्ठे स्वयंवरमालामर्पयति । तद्विवाहविधिसम्पादने लक्ष्मीः परिणयमङ्गलं

सम्पादयति। जीवदेवो वराय मधुपर्कमर्पयति। सुरयुवत्यः तिरस्करिणीं धारयन्ति। ब्रह्मा च पुरोहितो भूत्वा मङ्गलाष्टकं वाचयति।

## मनोऽनुरञ्जनम्

मनोनुरञ्जननाटकस्य प्रणेता अनन्तदेवः षोडशशताब्द्या उत्तरार्द्धे बभूव। अस्य गुरुर्मधुसूदनसरस्वतीसमकालिक आसीत्। मधुसूदनः तुलसीदासविषये लिलेख—

आनन्दकानने कश्चिज्जङ्गमस्तुलसीतरुः।
कवितामञ्जरी यस्य रामभ्रमरभूषिता॥

अनन्तस्य समयोऽन्यैराधारैरपि षोडशशतकस्यान्तिमश्चरणो भवितुमर्हति।

अनन्तदेव उच्चकोटिको विद्वानासीत्। प्रस्तावनायां तस्य परिचयोऽस्ति—

यः पूर्वोत्तरमीमांसापरिशीलनशीलवान्।
तदीयाध्यापनेनैव समयं खलु नीतवान्॥ ८॥

कथावस्तु—

एकदा इन्द्रः कञ्चिद् देवदूतं वदति—नन्दगृहं गत्वा समाज्ञां श्रावय यन्मन्निमित्तकेन यज्ञेन महती फलसम्पत्तिरुपलभ्यते। नन्दस्तच्छ्रुत्वा तथैवाचरत्। सर्वे यमुनापुलिनं यज्ञानुष्ठानाय प्राचलन्। तत्र गत्वा गोपाः नर्तनं गानञ्च प्रारभन्त। तेन यज्ञावरोधमवलोक्य कृष्णं नन्दोऽब्रवीत् लोकपोषकस्येन्द्रस्य प्रसादाय यज्ञः करणीय इति। ततो विवादः समुत्थितः। तर्क आसीत्—

वृन्दावनं नन्दनतोऽपि रम्यं,
गोष्ठञ्च नः स्वर्गपदाद् वरिष्ठम्।
किं देवराजाय च नन्दराज!
त्वयाल्पता स्वात्मनि कल्पितासौ॥ १.७२॥

एकेन वृद्धगोपेन कथितम्—अकृते यज्ञे कदाचिदिन्द्रोऽस्माकं गोष्ठं विनाशयेत्? श्रीदामादयः कृष्णानुभाववेत्तार ऊचुः—तर्हि सोऽपि बकधेनुकमार्गमनुसरिष्यति।

कृष्णोऽपि शक्रार्चां निषिषेध—

'कर्मानुसारेण च सौख्यभोक्ता,
किं तत्र शक्रेण समर्चितेन ॥' १.७२

किमनया पूजासामग्र्या भवेत्? इति पृष्टः कृष्ण उवाच—अनया सामग्र्या ब्राह्मणा, गावो गोवर्धनश्च पूज्यन्ताम्। तथानुष्ठिते सति पाकशासनोऽक्रुध्यत्। इन्द्रसारथिर्मातलिः तत्संरम्भं संवर्धयामास। परन्तु कृष्णानुभाववेत्ता शक्रः सम्मुखमनागत्य प्रलयकारिणो मेघानादिष्टवान्—गोकुलमासारेण प्रवाहयेति।

मेघैरिन्द्रादेशः तथैव समनुष्ठितः। परन्तु कृष्णः कनिष्ठिकाया उपरि गोवर्धनमुत्तोल्य गोकुलवासिनोऽरक्षत्। भीत इन्द्रः कृष्णशरणमागतः। देवलोकात् सुरभिरप्यागता। सुरभिः कृष्णप्रार्थितावदद्—भवन्तमभिषेक्तुमिच्छामीति। कृष्णोऽब्रवीत्—यथा ते मनसि वर्तते।

कामधेनोराज्ञानुसारं सिद्धयस्तस्याभ्यञ्जनं चक्रुः। गङ्गादयो नद्य आगत्य स्नानस्य सामग्रीं प्रास्तावयन्। नारद-तुम्बुरु कृष्णस्तवमकुरुताम्। गोपीवेषेण आगत्य लक्ष्मीः तं परिधानैरलञ्चकार। कामधेनुः पयोऽपाययत्। सरस्वत्यागत्य तमस्तौषीत्। ब्रह्मा ननाम। शिवागमनवेलायां भारती कीर्तयामास—

'हरिरिति हर इति भेदं गमिता
स्वरूपचिन्मूर्तिः' ॥ ४.१११

वेदा अब्रुवन्—

अटन्तु तीर्थानि पठन्तु चास्मान् कुर्वन्तु यागान् कलयन्तु योगान्।
तमालनीले त्वयि वा सलीले रतिं विना नैति गतिं प्रतीमः ॥
४.११७

ततश्च गोपीनां जलक्रीडावर्णनं, कृष्णेन तासां वासोहरणं, रात्रौ वेणुनादेन सममागताभिर्गोपीभिः सह कृष्णस्य रासलीलावर्णनं, कृष्णद्वारा गोपीचुम्बनं दृष्ट्वा गोपीवेषाया लक्ष्म्याकटाक्षादिकं च समुपनिबद्धानि।

रासोत्सवेऽस्मिन् देवाङ्गना सम्मिलिता आसन्। गोपीजनावृतस्य नृत्यतः कृष्णस्य नारदो वर्णनं चकार—

सर्वाभिमुख्यमवलम्ब्य स एष मध्ये,
भाति स्वयं विकचपङ्कजकर्णिकावत् ।
गोपीषु पद्मदलवत् परितः स्थितासु,
प्रत्येकशोऽपि च परिस्फुरति प्रियासु ॥[1] ५.८६

## चैतन्यचन्द्रोदयम्

चैतन्यचन्द्रोदयस्य रचयितुः कर्णपूरस्य प्रादुर्भावः षोडशशताब्द्यां १५१७ ई० वर्षे वर्तते । अस्य पिता शिवानन्दसेनः वङ्गे काञ्चनपाड़ाया निवासी आसीत् । कवेः प्राथमिकं नाम परमानन्ददास इत्यासीत् । ततश्च चैतन्येनैव सङ्क्षिप्य पुरीदास इति तस्य नाम कृतम् । सप्तवर्षीयः पुरीदासो महाप्रभुमधोलिखितं श्लोकं श्रावयामास—

श्रवसोः कुवलयमक्ष्णोरञ्जनमुरसो महेन्द्रमणिदाम ।
वृन्दावनरमणीनां भूषणमखिलं हरिर्जयति ॥

'श्रवसोः कुवलयम्' इत्याश्रित्य चैतन्यमहाप्रभुरस्मै कर्णपूर इति नाम ददौ ।

कर्णपूरो निजायुषः ५५ तमे वर्षे १५७२ ईशवीयवर्षे चन्द्रोदयम् प्रणीतवान् । कवेः प्रमुखा कृतयो निम्नलिखिताः सन्ति—( १ ) चैतन्यचन्द्रोदयम् ( २ ) आर्याशतकम् । ( अप्राप्तम् ) ( ३ ) चैतन्यचरितामृतम् ( महाकाव्यम् ) ( ४ ) आनन्दवृन्दावनचम्पूः ( ५ ) चमत्कारचन्द्रिका ( अप्राप्ता ) ( ६ ) अलङ्कारकौस्तुभम् ( ७ ) कृष्णलीलोद्देशदीपिका ( ५ ) गौरगणोद्देशदीपिका ( ६ ) वर्णप्रकाशकोषः ।

चैतन्यचन्द्रोदयस्य प्रेरणां कविरुत्कलप्रदेशस्य महाराजेन गजपतिप्रतापरुद्रेण प्राप्तवान् । चैतन्ये दिवङ्गते तदभावपूरणायेदं नाटकम् व्यरचि । नाटकेऽस्मिन् दशाङ्काः सन्ति । तेषु चैतन्यस्याद्यन्तं चरितं विलसति ।

---

१. अस्य नाटकस्य हस्तलिखिता प्रतिः प्रयागस्य 'गङ्गानाथ-झा केन्द्रीयविद्यापीठस्य पुस्तकालये' विद्यते । सागरविश्वविद्यालयेऽप्यस्य प्रतिलिपिः समुपलभ्यते ।

कथासारः

कलिः स्वोपासकमधर्मं ब्रूते—नवद्वीपे शची-जगन्नाथमिश्रयोस्तनूजोऽस्माकमस्तित्वमेव उन्मूलयितुमिच्छति। स खलु भगवतोऽवतारः। तस्य च मित्राणि अद्वैताचार्य-नित्यानन्द-श्रीकान्त-श्रीपति-श्रीवासादयः तस्य पूर्वावतारस्य पार्षदा वर्तन्ते। चैतन्यः क्रोधमजयत्। स जगन्नाथं माधवञ्च दुर्वृत्तब्राह्मणौ परमभागवतौ कारयामास। श्रीवासश्चैतन्यस्य महाभिषेकं सम्पादयामास। भगवानपि श्रीवासं म्रियमाणमरक्षत्। मुरारिमुकुन्दौ अमितसाधकौ बभूवतुः। तेभ्यो भक्तिरसामृतं प्रदाय तौ भक्तौ प्रणीतवान्। स्वजनन्या अपि दिव्यं ज्ञानं विततार। तदा माता चकितोवाच—

विश्वं यदेतत् स्वतनौ निशान्ते,
यथावकाशं पुरुषः परो भवान्।
बिभर्ति सोऽयं मम गर्भजोऽभू-
दहो नृलोकस्य विडम्बनं महत्॥ १.५६

निर्वेदः सांसारिकवैषम्यं दम्भाधिक्यं च प्रसमीक्ष्य निर्विण्णोऽस्ति। स आत्मानमशरणं मनुते। तदैव तस्य स्वसा भक्तिस्तं ब्रवीति—कलावस्मिन्नहं तु चैतन्यमहाप्रभोः संरक्षणमुपलभ्य सुखं जीवामि। स खलु महाप्रभुरलौकिकव्यवहारशीलः।

तस्य जात्यादेर्विचारो नास्ति—

न जातिशीलाश्रमधर्मविद्या-
कुलाद्यपेक्षी तु हरेः प्रसादः।
याद‍ृच्छिकोऽसौ बत नास्य पात्रा-
पात्रव्यवस्थाप्रतिपत्तिरास्ते॥ २.१६

महाप्रभुश्चैतन्यो विश्वरूपं बिभर्ति। स कस्यचन गलितसर्वाङ्गस्य ब्राह्मणस्य रोगं दूरं चकार। महाप्रभुरलौकिकलीलामपि वितनुते। स कदाचिद् बलस्य, कदाचित् विष्णोः, कदाचित् राधाया रूपं गृह्णाति। एकदा वृन्दावने योगमायाया अध्यक्षतायां राधा सखीभिः समं समगात्। राधां वीक्ष्य कृष्णोऽब्रवीत्—

उत्कीर्णा किमु चारुकारुपतिना कामेन किं चित्रिता,
प्रेम्णा चित्रकरेण किं लवणिमा त्वष्ट्रैव कुन्दे धृता।
सौन्दर्याम्बुधिमन्थनात् किमुदिता माधुर्यलक्ष्मीरियं,
वैचित्र्यं जनयत्यहो अहरहर्दृष्टाप्यदृष्टेव मे ॥

गोपीश्वरं पूजयितुं राधा-ललितादयः पुष्पावचयं प्रारभन्त। तदैव कुतश्चित् समागत्य कृष्णो निषिषेध—कस्मादिमानि मम वृन्दावनस्य कुसुमान्यवचीयन्ते ? इति। योगमायोवाच-कस्माद्भवान् रुष्यति। भवतैव कुसुमानि प्राप्तव्यानि। राधा तु कृष्णमवलोक्यानन्दनिर्भरा सञ्जाता।

यदा योगमाया राधामुक्तवती—चल सखि गोपीश्वरं (शिवं) पूजयितुं चलामः। तदा कृष्णस्य मित्रेणोक्तम्—दानमदत्त्वा मम मित्राय कथमिव गन्तव्यम्। कृष्णोऽपि राधां पूजां विनैव, गन्तुकामां प्रसमीक्ष्य ब्रूते स्म—

*कृष्णः*—अयि चतुरम्मन्ये क्व यासि ?

*राधा*—मूलमेव दत्तं किं तस्य दानं मार्गसि।

कृष्णेनोक्तम्—

एतत्स्वर्णसरोरुहं तदुपरि श्रीनीलरत्नोपले,
तत्पश्चात् कुरुविन्दकन्दलपुटे तत्रापि मुक्तावली।
सर्वं दृश्यत एव किन्तु निभृता या हेमकुम्भद्वयी,
किं वान्यन्नयसेऽनयेति तदिदं बाले विचार्यं मम ॥ ३.५४

एवमुक्त्वा यदा कृष्णो राधाया वासोऽञ्चलं ग्रहीतुमियेष तदैव योगमाया सर्वाभिः सममन्तर्दधौ।

एकस्मिन् दिवसे श्रीवासप्राङ्गणे भगवत्कीर्तनमङ्गलस्यायोजनमभवत्। अस्मिंश्चैतन्येन सार्धं सर्वेऽनृत्यन्त। भक्ताः परमानन्दं लब्धवन्तः। तत्रैवाकस्माच्चैतन्योऽदृश्योऽभवत्। तेन साकम् अद्वैताचार्यः—नित्यानन्दश्चापि गतौ। त्रिदिवसानन्तरं चैतन्यः संन्यासी भूत्वा प्रतिन्यवर्तत। संन्यासानन्तरं स चैतन्यकृष्ण इत्यात्मनो नाम चकार।

संन्यासदीक्षां गृहीत्वा स वृन्दावनं जिगमिषुरासीत्। परन्तु तन्मित्रं नित्यानन्दस्तम् अद्वैतस्य गृहं प्रापयामास। मार्गे नित्यानन्दो

गङ्गां यमुनामिति समर्थयामास। अतो गङ्गां चैतन्यो यमुनामिवाभिष्टुतवान्—

चिदानन्दभानोः सदानन्दसूनोः,
परप्रेमपात्री द्रवब्रह्मगात्री।
अघानां लवित्री जगत्क्षेमधात्री,
पवित्रीक्रियान्नो वपुर्मित्रपुत्री ॥ ५.१०

तत्र अद्वैताचार्यस्याश्रम उपनदमासीत्। नित्यानन्दस्य प्रार्थनातो भगवान् तस्यैव गृहे प्रथमभिक्षामग्रहीत्। तस्मिन्नेवावसरे नवद्वीपनिवासिभिः सह तन्माता तत्रागत्योवाच—

वैराग्यमेव भव किं किमु वानुभूति-
र्भक्तिर्नु वा किमु रसः परमस्तनूभृत्।
तातस्तनन्धयतयैव भवन्तमीक्षे,
लब्धोऽधुनापि न कदापि पुनस्त्यजामि ॥

इति कथयित्वा संन्यासिनं पुत्रं जननी वात्सल्यतया समालिलिङ्ग। मातरं चैतन्यकृष्ण आश्वासयामास—

भगवति जगन्मातर्मातः परं फलमुत्तमम्,
किमपि फलितुं वात्सल्याख्या लता भवति क्षमा।
भवति भवती विश्वस्यैवानुपाधिसुवत्सले-
त्यथ भगवता नूनं चक्रे क्षमापि शरीरिणी ॥ ५.२८

चैतन्यस्य शुभाकाङ्क्षिणो मथुरागमनं तस्य न्यषेधन्। तस्य जननी चैतन्यकृष्णस्य जगन्नाथपुरी वासमियेष। जगन्नाथपुर्यां वसन् स सार्वभौमभट्टाचार्यं कर्कशवेदान्तिनं, सरसं भक्तं कृतवान्।

चैतन्यो ब्राह्मणैः सार्धं तीर्थाटनाय दक्षिणभारतं जगाम। तत्र कूर्मक्षेत्रे वासुदेवनामानं कमपि गलत्कुष्ठं ब्राह्मणं परिष्वज्य तं नीरोगं सुन्दरशरीरावयवं च पुपोष।

ततो नृसिंहक्षेत्रं दृष्ट्वा गोदावरीनद्यास्तटेऽभ्रमत्। परमवैष्णवो रामानन्दस्तत्रैवागत्य चैतन्यं ददर्श। तं दृष्ट्वा रामानन्दस्य मनस्येवमभूत्—

महारसिकशेखरः सरसनाट्यलीलागुरुः,
स एव हृदयेश्वरस्त्वमसि मे किमु त्वां स्तुमः।
तवैतदपि साहजं विविधभूमिकास्वीकृति-
र्न तेन यतिभूमिका भवति नोऽतिविस्मापिनी ॥ ७.१७

तीर्थयात्राप्रसङ्गेन दक्षिणभारते चैतन्याय क्वचिद् धूर्तास्तस्मै भगवत्प्रसाद इति कृत्वा अपवित्रं भोजनं प्रायच्छन्। चैतन्यस्तद् आदाय हस्तमुच्चैः कृतवान्। तदैव तद्भोजनमादाय कश्चन खगो नभसि दूरं गतः।

ततश्चैतन्यः पुरीमेव प्रतिनिवृत्तः। तत्र राजा चैतन्यं द्रष्टुमैच्छत्। चैतन्यो मिलितुमस्वीचकार। परन्तु स राजा सत्याग्रही आसीत्। तेन कथितम्—

अभून्न चेष्टा मम राज्यचेष्टा सुखस्य भोगश्च बभूव रोगः।
अतः परं चेत् स न वीक्षते मां, न धारयिष्ये बत जीवनं च ॥ ८.३०

प्राणांस्त्यजामि किमु वा किमु वा करोमि,
तत्पादपङ्कजयुगं नयनाध्वनीनम् ॥

सार्वभौमभट्टाचार्यस्य परामर्शेन राजा नृत्यश्रान्तं चैतन्यं ददर्श।

ततः परं चैतन्येन मथुरा-वृन्दावनयात्रा कृता।

वृन्दावनशोभावलोकनसमये स कदाचिद् भक्तिरसावेशितचित्तः तत्रत्यान् वृक्षान् लताश्च परिष्वजति स्म। तत्र तस्य विचित्रैव दशाभूत्—

कुञ्जसीमनि कदापि यदृच्छा-
मूर्छया निपतितस्य धरण्याम्।
आलिहन्ति हरिणा मुखफेन-
मापिबन्ति शकुना नयनाम्भः ॥

वृन्दावनेऽनुरागविह्वलस्य चैतन्यस्यावस्थानं निरापदन्नासीत्। तस्य निकटतमा भक्तास्तं पुरीमेव नीतवन्तः। प्रयागे रूपगोस्वामी, अनुपमः च तस्यातिथ्यं चक्रतुः। वाराणस्यां तस्य सार्वजनिकमभिनन्दनं

समपद्यत। रूपगोस्वामिनोऽग्रजः सनातनो वाराणस्यां चैतन्यस्य स्वेच्छयाभिषेकं कृतवान्। पश्चात् चैतन्यकृष्णः पुरीमाजगाम।[1]

## जगन्नाथवल्लभनाटकम्

### ( सङ्गीत-नाटकम् )

जगन्नाथवल्लभनाटकस्य प्रणेता रामानन्दरायो वर्तते। अस्य प्रतिभाया विलासः ख्रीष्टीय षोडशशतके उत्कलनरेशस्य गजपतिप्रतापरुद्रस्य समाश्रयेऽभवत्। इदं सङ्गीतनाटकमिति प्रोक्तम्।

रामानन्दः स्वभावतो विनयशीलो वैष्णव आसीत्। यथा हि तस्याधोलिखितेन वक्तव्येन प्रतीयते—

न भवतु गुणगन्धोऽप्यत्र नाम प्रबन्धे,
मधुरिपुपदपद्मोत्कीर्तनं नस्तथापि।
सहृदयहृदयस्यानन्दसन्दोहहेतु-
नियतमिदमितोऽयं निष्फलो न प्रयासः॥

कथासारः

विदूषकेण सह कृष्णो वृन्दावनस्य विहारकुञ्जेषु क्रीडितुं गच्छति। अपरदिशातो राधापि सखीभिरागच्छति। कृष्णो वेणुं वादयति। राधा तं समीपतो द्रष्टुमुपक्रमते। कृष्णोऽपि समीपागतां व्रजेश्वरीमवलोकयति। द्वावपि मदनसन्तप्तौ भवतः। कृष्णो राधासक्तमानसोऽपि तत्सखीः श्रावयन् कथयति—कथमियं राधिका मामितस्ततः समनुगच्छति। राधा सदाचारं पालयतु न वा पालयतु, अहं शिष्टाचारं न हास्यामि। राधा कृष्णद्वारा प्रत्याख्यातापि स्वं प्रणयोद्गारं सखीं श्रावयति—

श्रावं श्रावं सुसामश्रुतिसमितपरब्रह्मवंशीप्रसूतम्,
दर्शं दर्शं त्रिलोकीवरतरुणकलाकेलिलावण्यसारम्।
ध्यायं ध्यायं समुद्यद्द्युमणिकुमुदिनीबन्धुरोचिः सरोचि-
श्चायं श्रीकान्तसङ्गं दहति मम मनो मां कुकूलाग्निदाहम्॥

---

१. 'चैतन्यचन्द्रोदयम्' काशीतः प्रकाशितम्।

राधायाः सख्यः समर्थयन्ति यत् कृष्णासक्तिः परित्याज्यैव। तस्मिन्नेव समये कृष्णचित्रं धारयन्ती माधवी चित्रं राधायै ददाति। तस्य चित्रस्य नीचैर्लिखितमासीद् यद् भवती मया वाङ्मात्रेण प्रत्याख्याता, न चेतसा। कृष्णः स्वकीयवियोगस्थितिं वर्णयति—

तवास्यादेतस्या वदनरुचमाकर्ण्य शशिनः,
कृतावज्ञा यस्मादयमपि रुजं तद्वितनुताम्।
तदङ्गेनासङ्गं भजत इति यो मे बहुमतः,
कथं सोऽपि प्राणैर्मम मलयवातो विहरति॥

राधायाः सखीनां प्रयासेन राधा-कृष्णयोः वृन्दावन-निकुञ्जेषु प्रणय-लीला सम्पद्यते। तत्रैव अरिष्टो नाम वृषाकृतिरसुरः कृष्णेन निहन्यते। राधा कृष्णस्य अरिष्टवधोद्गमस्य श्रमस्यापनोदनाय कृष्णं वस्त्राञ्चलेन वीजयति।[1]

## कंसवधम्

कंसवधस्य रचयिता महाकविः शेषकृष्णो विदुषां तस्मिन् कुले सम्बभूव, येनानेकशतकं यावत् काश्यां ज्ञानप्रकाशप्रदानेन जिज्ञासुमनः कमलेषु भास्करायितम्। शेषकृष्णस्य पिता गोदावरीतटं परित्यज्य ख्रीष्ट-षोडशशतकस्य प्रथमचरणे काशीमध्युवास।

शेषकृष्णो नरसिंहस्य द्वितीयः पुत्र आसीत्। शेषकृष्णात्मजेन वीरेश्वरेण पण्डितराजजगन्नाथो भट्टोजिदीक्षितोऽन्नम्भटश्चाध्यापिताः। शेषकृष्णेन तात्कालिकस्य काशिराजस्य गोवर्धनधारिणः समाश्रयेण बहवो ग्रन्थाः प्रणीताः।

शेषकृष्ण आलोचकानां साध्वसाधुकोटिं विश्लेषितवान्—

अमृतं किरति हिमांशुर्विषमेव फणी समुद्गिरति।
गुणमेव वक्ति साधुर्दोषमसाधुः प्रकाशयति॥

---

१. जगन्नाथवल्लभनाटकस्य वङ्गाक्षरेषु प्रकाशनमनेकवारं सञ्जातम्। १९०१ ईशवीयाब्दे नित्यस्वरूपब्रह्मचारिणा नाटकमिदं देवनागरीलिपौ सम्पाद्य वृन्दावनस्य देवकीनन्दन-मुद्रणशालायां मुद्रापितम्।

२. एतस्य प्रकाशनं काव्यमालायां बभूव।

कथासारः

कंसवधनाटकस्यारम्भे कंसेन नभोवाणी श्रूयते—

यस्ते मदं दमयिता दनुजेन्द्रकालो,
बालः स कोऽपि भगवान् क्वचिदप्रमेयः ।
संवर्धते गिरिगभीरगुहाविहार-
तन्द्रालु-केशरि-किशोर इवाविभाव्यः ॥ १.३३

आकाशवाणीं श्रुत्वा स विचारयति—यदेते देवाः पीडिताः सन्तो विष्णुमवतारयन्ति । देवकी-वसुदेव-पाणिपरिग्रहेऽपि नभोवाण्यासीद् यदस्या अष्टमो गर्भो तव हन्ता भविष्यतीति । तेन तथा विज्ञापितो महामात्यः कथयति—अस्माकं पार्श्वे बलिष्ठा सेनास्ति । अहं वर्ते । कस्मात् पुनर्भयं भवतः ? पुनरपि शत्रुर्नोपेक्ष्यः । शत्रवश्चास्माकं देवाः । तेषां विनाशस्यायमुपायः—

यज्ञायत्तं जीवितं देवतानां यज्ञाः साङ्गा ब्राह्मणेष्वायतन्ते,
ते चाप्येते धर्मकर्मैकमूला मूले छिन्नेऽस्तैव वार्तामराणाम् ॥ १.४६

कंस आज्ञां प्रचारयामास—

हन्यन्तां द्विजदेवसेवनपराः सर्वेऽपि वर्णाश्रमाः,
ध्वंसन्तां दमदानसत्यनियमस्वाध्याययज्ञादयः ।
पीड्यन्तां च तपोवनानि परितस्तीर्थानि पुण्याश्रमाः,
बध्यन्तामचिरात् सुरा हरिहरब्रह्मादयः सानुगाः ॥ १.४८ ॥

तालजङ्घो नाम कंसचरो गोकुलप्रवृत्तिमवगत्य कंसाय निवेदयति । तन्मुखेनैव केशिनः पूर्वं निहतानां पूतना-शकटारिष्टादीनां वधः प्रस्तूयते । ततः पश्चाद् भागवतीया कथैव नाट्यानुसारिणी विहिता वर्णिता ।

## राजचूडामणेर्नाट्यसाहित्यम्

कमलिनीकलहंसादि रूपकाणां प्रणेता कामाक्षी–श्रीनिवासदीक्षित-योस्तनूजो यज्ञनारायणोऽस्ति । स प्रतिभाया विशेषेण 'राजचूडामणिः' इत्युपाधिना विभूषितः ।

राजचूडामणिः सप्तविंशतिग्रन्थान् प्रणीतवान् । कमलिनीकलहंसस्य प्रस्तावनानुसारं स षड्भाषाविदग्ध आसीत् । सूत्रधारानुसारं राजचूडा-

मणिना नाटिकेयं स्वायुषः षष्ठे वर्षे विरचिता—'तेन हि गर्भसप्तम एव हायने विरचय्य स बहुमानमस्माकं हस्ते दत्ता।' राजचूडामणिः खीष्टीयषोडशशतकस्य चरमे चरणे तथा सप्तदशशतकस्य प्रथमे चरणेऽनेकान् ग्रन्थान् प्रणिनाय।

## कमलिनीकलहंसम्

कलहंसस्य मातुलं कमलाकरं पराजित्य बकोटः तत्तनयां कमलिनीं धात्रेयीं च हरति। कलहंसो बकोटं दण्डयितुमन्तपालं प्रेषयति।

कमलजा देशान्तरात् कारण्डवेन समानीते पुण्डरीकमुकुले प्राप्ता, अन्यस्मिश्च मुकुले तस्याः सखी मृणालिका समुपलब्धा।

तत्-पुण्डरीकयुगलं कारण्डविका राज्ञै सारसिकायै निवेदयति। सारसिका कमलजायै भरतनाट्यशिक्षणस्य व्यवस्थां सम्पादयति।

कलहंसो नक्तं कस्याश्चित् सुन्दर्याः साहचर्यं समनुभूय दिवा तत्सदृशीमेव कमलजां दृष्ट्वा मन्मथाकुलो भवति। कमलजापि कलहंसं दृष्ट्वा धैर्यवमधीरयति।

कमलजा-कलहंसौ कुसुमायुधसंतापसमाकुलौ मदनलेखं लिखतः। क्षणाय च स्वस्वमित्राणां सहयोगेन मिलनं भवति।

सीताकल्याणनाटके कमलजा-मृणालिन्यौ सीतारामयोरभिनयकरणाय सारसिकया नियुक्ते। मृणालिन्याः स्थाने राजा कलहंसः स्वयमेव रामस्य भूमिका निर्वहति। सीतायाः करस्पर्शकाले रामभूमिकायां कलहंसस्य स्वेदं दृष्ट्वा सारसिका कमलजां बन्दिनीं करोति।

अथ च सारसिका कलहंसस्य कापटिकविवाहस्य आयोजनं करोति। तस्मिन् भ्रमरकः कमलजाया भूमिकां निर्वहत्विति सारसिकाया आदेश आसीत्। परन्तु राज्ञो मित्रस्य विदूषकस्य प्रयासेन कलहंसस्य परिणयो वास्तविककमलजया सह सम्पन्नः। अन्ततो राज्ञी सारसिका वास्तविकां जानाति। तदानीमेव कमलजायाः मातुः पत्रानुसारं कमलजा कस्मैचिच्चक्रवर्तिने प्रदेयासीत्। राज्ञी सारसिका कमलजां भगिनीं मानयति। एवं कमलजा-कलहंसौ कृतार्थौ जायेते।

## आनन्दराघवम्

आनन्दराघवनाटकस्य प्रारम्भो जनकपुरे सीतोद्वाहतो जायते। विश्वामित्रः स्वशिष्यं देवरातम् आज्ञापयति—रामलक्ष्मणौ समानय। ताभ्यां सह वयं जनकस्य यज्ञशालां द्रष्टुं गच्छामः।

रामः विश्वामित्रं प्रणमन्तीं सीतां पश्यति। तदाप्रभृत्येव स तस्यै अभिलषति। सीतापि रामं दृष्ट्वा तस्मै स्पृहयति। सीता रामस्य चित्रं निर्माति। रामश्चेदं विलोकयति। योगमायायाः योजनानुसारं सीता-रामौ परस्परं मिलतः। सन्ध्यासमये द्वावपि स्वस्ववासं गच्छतः।

जनकः शिवधनुषः प्रत्यञ्चनाय रामं दर्शयति। रामस्तस्य मध्यतो भञ्जनं करोति। तदानीमेव रावणदूतः सारणः समागत्य जनकाय रावणस्य सन्देशं प्रयच्छति—सीता मह्यं देयेति। जनकस्तस्य प्रार्थनां तिरस्करोति। सीतादीनां चतसृणां स्वसृणां विवाहो रामादिभिश्चतुर्भि-र्भ्रातृभिः सार्धं सञ्जायते।

सारणप्रेरिताः कुमार-विनायक-बाणासुर-लवणासुरा रामादिभि-र्भ्रातृभिः पराजीयन्ते। परशुरामोऽपि भग्नदर्पो भूत्वा तपस्तप्तुं प्रयाति।

अतः पश्चादपि रामायणीया कथा नाट्योचितीकृत्य समुपन्यस्ता नाटककारेण।

## सुभद्राहरणम्

( श्रीगदितकोटिकमुपरूपकम् )

सुभद्राहरणस्य लेखकेन माधवभट्टेन नाटकस्य पुष्पिकायामात्म-परिचय एवं प्रदत्तः—

> जननीन्दुमती (यस्य जनको मण्डलेश्वरः।
> भ्राता हरिहरो यस्य स ख्यातो माधवः कविः॥

माधवभट्टः स्वजीवनकाल एव लब्धप्रतिष्ठोबभूव। कविर्विनय-शीलोऽप्यासीत्—

> ततिरिव फणिवल्या केवलानां दलानां,
> यदपि रुचिनिदानं गुम्फना मे न वाचाम्।

तदपि रसगुणानामार्द्रपूगीफलाना-
मिव मुहुरनुषङ्गाद्रञ्जनाय क्षमैव ॥

माधवभट्टः कदाभूदिति प्रश्नोऽसमाधेयः। किन्तु तस्य कृतेरेका प्रतिलिपिः १६१० ईशवीयाब्देऽभवदतोऽस्य नाटकस्य रचना षोडश-शतके संभूतेत्यनुमानम्।

कथासारः

अर्जुनः संन्यासी भूत्वा मधुकरीवृत्तिमाश्रितो बलरामस्य भवनं गच्छति। तत्र कादम्बरीगन्धमाघ्राय स्फुटितनासिकाविवरः ततो गन्तुं व्यवस्यति। तदानीमेव—सुभद्रा भिक्षामादायागमिष्यतीति वाणीं समाकर्ण्य विरमति। सुभद्रागत्य तस्मै भिक्षां प्रददाति। अर्जुनस्तां वीक्ष्य परमाकृष्टो जायते। सुभद्रा तु किञ्चिद् विरम्यात्ममनोरथं प्रकाश-यति—'मया एतस्मै आत्मा समर्पितः, यद्येष मम परिग्रहेण प्रसादं करोति'। अर्जुनो ब्रवीति—अस्या एव सुभद्रायाः कृतेऽहं कूटवेषधारी संवृत्तः। एवं द्वावपि प्रेम्णः परां काष्ठामनुभवन्तौ ततः प्रस्थितौ।

वसन्तोत्सवे सुभद्राऽन्याभिर्यदुकन्याभिः सममुपवनं गच्छति। तत्रार्जुनस्तां हर्तुं समुद्यतो भवति। तदनु दारुकः कृष्णरथमानीय तस्मै निवेदयति। अर्जुनः संन्यासिवेषं परिहाय, वास्तविकवेषे समागत्य रथमारोहति। धनुष्टङ्कारं कृत्वा स कन्यानां मध्यतः सुभद्रां पाणौ गृहीत्वा रथमारोहयति।

एष समाचार उग्रसेनाय निवेद्यते। उग्रसेनो यदुवीरान् अर्जुन-माक्रमितुमादिशति। बलदेवेन उच्यते—क्षणं विरम्यतां, यावदहं कृष्णं पृच्छामि। अन्यथाहमेकल एव—

इन्द्रप्रस्थं कौरवैः सार्धमूर्ध्वं,
कालिन्दीये प्रक्षिपामि प्रवाहे।
क्षेत्रोत्खातस्थूललोष्ठायितं वा,
सीताशीर्णं लाङ्गलाग्रेण कुर्वे ॥ ३.६

इति कथयित्वा बलरामः कृष्णं पृच्छति। कृष्णो निवेदयति—एतत् यथायोग्यं संवृत्तम्। यदि वयमेकाकिनमर्जुनं हन्मः, तर्हि महती हानिः

भवेत्। यदि चायमेकलोऽस्मान् पराभवेत्तदाऽस्माकं यशो विलीनं स्यात्। इति सर्वं बलाबलं विचिन्त्य मम त्विदमेव विचरितं यत्—

'तेनात्र सप्रणयमेष विसर्जनीयः।' ३६

कृष्णमतमुपश्रुत्य बलरामो ब्रवीति—यथा रोचताम् तुभ्यम्। आकाशात् पुष्पवृष्टिर्भवति। इन्द्रसमुपहृतं दिव्यपुरुषद्वारा प्रेषितं हारद्वयं सुभद्रार्जुनौ लभेते।[1]

## रत्नेश्वर-प्रसादनम्

रत्नेश्वरप्रसादनस्य रचयिता गुरुरामः उत्तरार्काटजनपदस्थमूलन्द्र-ग्रामवास्तव्य आसीत्। अस्य पिता स्वयम्भूदीक्षितः। राजनाथस्यात्म-जास्य जननी बभूव। गुरुरामस्य कुलं पाण्डित्यमण्डितमासीत्। अस्य नाटकस्य रचना १६०० ईशवीयवत्सरे जाता।

कथासारः

सुवर्णपुरस्य वसुभूतिनाम्नो गन्धर्वराजस्य कन्या रत्नावली सरस्वतीं गुरुं कृत्वा तस्या उच्चशिक्षामगृह्णात्। समावर्तनावसरे सरस्वती रत्नावल्याश्चित्तविनोदाय कलावतीं (शारिकां) आदिदेश—अनुसर रत्नावलीमिति।

रत्नावली काश्यां रत्नेश्वरं नाम शिवलिङ्गमनुदिनं नियमतः समानर्च। तस्या आराधनातः प्रसन्नः शिवः तस्याः पतिं रत्नचूडं नाम स्वभक्तं निश्चिनोति स्म। आकाशवाणीद्वारा शिवः स्वनिश्चयं भक्तायै रत्नावल्यै प्रकटयति स्म—

यस्त्वया रमते रात्रावद्य गन्धर्वकन्यके।
तव नाम-समानाख्यः स ते भर्ता भविष्यति॥ १.३०

रत्नावली वृत्तान्तममुं सखीभ्यो निवेदयामास। तां वार्तां रत्नचूडोऽपि विदूषकेण सहान्तरितः शुश्राव। मध्याह्ने रत्नावली सखी-समेता स्ववसतिं जगाम। रत्नचूडः पर्युत्सुकः सन् विषमशरस्य विषमा-वस्थां प्राप। स खलु—

---

१. ग्रन्थोऽयं काव्यमालायां प्रकाशितः।

किमपि वदन्निव किमपि ध्यायन्निव किमपि संदिहान इव।
किमपि हसन्निव किमपि स्पृहयन्निव सोऽयमुद्भ्रमति ॥ १.३०

रत्नचूडो मनोविनोदाय ऐन्द्रजालिकानाहूय सुवर्णपुरस्य कामपि नवां वार्तां दर्शयितुमादिशति स्म। इतश्च रत्नावली रत्नचूडस्य प्रवृत्तिं ज्ञातुं कलावतीं प्राहिणोत्। कलावती सुवर्णपुरं गत्वा नायकमानयति। तत्र हिमगृहे नायको नायिकया चित्रितं स्वकीयं भित्तिचित्रं ददर्श। नायकः तस्य पार्श्वतः पद्यमिदं लिलेख—

तपतु मनसिजस्तनुं मदीयां,
तव पुनराद्रियतां शरीररत्नम्।
त्वदुपगमफलाः कलाविनोदा
मम हृदयं मदिराक्षि जीवितं च ॥ ३.७

तस्मिन्नेवोद्याने नायिका चन्द्रमसोऽर्चनाय समागता। तत्र नायकेन सह तस्याः प्रेमालापः सञ्जायते स्म। तस्मिन्नेव काले रत्नावलीमाता तत्रागात्। तेन द्वावपि पृथक्-पृथगभूताम्। पुनश्च तयोः प्रेमसंलापे आरक्षका विघ्नमाचेरुः।

वीररसोत्सुकः मुनिर्नारदः सुबाहुनामानं दानवं प्रेरयामास—यद्रत्नावली त्वद्योग्येति। स कूटोपायद्वारा रत्नावल्या हरणं चकार। वृत्तान्तमिमं नारदो रत्नचूडाय न्यवेदयत्। रत्नचूडः सन्नद्धीभूय सुबाहुना सह युद्धमकरोत्। सुबाहुः संयुगे हतः। ततः रत्नावल्याः पिता स्वां कन्यां रत्नचूडाय संप्रददौ।[1]

## जाम्बवतीकल्याणम्

जाम्बवतीकल्याणस्य प्रणेता विजयनगरस्य राजा कृष्णदेवराय आन्ध्रभोजनाम्ना प्रसिद्ध आसीत्। अस्य जन्म विजयनगरस्य तुलुव-राजवंशेऽभवत्। अस्य पिता नरसः तथा भ्राता वीरनरसिंहः प्रसिद्धः राजौ विजेतारौ चाभवताम्। कृष्णदेवः १५०९ ईशवीयाब्दात् १५३० ईशवीयाब्दपर्यन्तं समग्रं दक्षिणभारतं प्रशशास। आदिल-अलीशाहं

१. नाटकस्यास्य प्रकाशनं १९२९ ई० वत्सरे 'मद्रास-गवर्नमेण्ट-ओरिएण्टल मै० सीरीज ५ संख्यायां' सञ्जातम्।

कृष्णदेव एव पराजयत। अस्य कलात्मकाभिव्यक्तिरुच्चकोटिं पस्पर्श। अयं संस्कृते तेलगूभाषायाञ्चानेकाः कृतीः प्रणिनाय।

कृष्णदेवस्य कृतिद्वयमुपलभ्यते—(१) उषापरिणयम् (२) जाम्बवतीकल्याणञ्च।

जाम्बवतीकल्याणस्य प्रथमाभिनयश्चैत्रमासे विजयनगर-राजकुलस्य देवताया विरूपाक्षस्य महोत्सवे सम्पन्नः। नाटकेऽस्मिन् जाम्बवती-परिणयस्य स्यमन्तकमणेरुपलब्धेश्च कथा पञ्चाङ्केषु वर्णिता। नाटके अभिज्ञानशाकुन्तलस्य प्रभावोऽनेकस्थलेषु स्पष्टं दृश्यते।

तथाहि कल्याणे

उल्लीलेक्षणमुन्नमय्य वदनं निष्पन्दकर्णद्वयं,
देहस्यार्धमुदस्य पूर्वमपरं चानम्य गाढान्तरम्।
वेगादेकवशादलक्ष्यचरणन्यासः क्षितौ भूयसा,
वल्गन् व्योमनि धावति प्रतिपदं व्यावृत्तकण्ठं मृगः॥

आलक्ष्य चारुकुचकुड्मलसन्निवेश-
मारोपितो निटिलमञ्जरितायताक्ष्याः।
लावण्यशालिवदनद्युतिवारिपूर-
सञ्जायमानसरसीरुहकोरकश्रीः॥

## वीरभद्र-विजयम्

(डिमः)

वीरभद्रविजयस्य रचयिता अरुणगिरिनाथद्वितीयोऽस्ति[1]। कुमार-डिण्डिम-डिण्डिमचतुर्थावित्यस्यापरं नामद्वयम्। अस्य पिता राजनाथ-द्वितीय आसीत्। अस्याश्रयप्रदातारौ विद्यानगरनरेशो वीरनरसिंहस्तथा कृष्णदेवरायः (१५०५–१५०६, १५०६–१५३० ई०) आस्ताम्। स पारेन्द्रनामन्यग्रहारमध्युवास।

अरुणस्यानेकभाषाणां सम्यग्ज्ञानमासीत्। 'डिण्डिमकविसार्वभौमः'

---

१. इदं रूपकं Trennial Cat. of Skt. Mss. in Oriental Library मद्रासे III. 2832 पृष्ठे हस्तलिखितम् प्राप्यते।

'कविराजः' इत्युपाधिद्वितयेन कविरलंकृतः। अरुणः कृष्णदेवस्य विजय-वर्णनं तेलुगुरचनायां 'कृष्णपुरविजये' कृतवान्।

वीरभद्रस्य पाठो राज्ञः समक्षं बभूव। वीरभद्रविजये शिवपुराणस्य दक्षयज्ञध्वंसात्मिकायाः कथाया उपन्यासोऽस्ति।

अस्मिन् चत्वारोऽङ्का विलसन्ति। अस्य प्रथमाभिनयो भूपतिराय-पुरे श्रीराजनाथमहोत्सवे सम्पादितः।

## महिषमङ्गलम्

### ( भाणः )

महिषमङ्गलभाणस्य रचयितुर्नारायणस्य जनुः केरले षोडशशतकस्य मध्यभागे बभूव। अस्य जनकः शङ्कर उच्चकोटिको ज्योतिर्विदासीत्। शङ्करस्य जन्म १४१६ ईशवीयाब्देऽभवत्। असौ बृहस्पतेर्मानुषावतार इति कथ्यते। नारायणेनापि पितृवत् विद्यानामभ्यासः कृतः। स कोचीननृपते राजराजस्याश्रयमुपलब्धवान्। आश्रयदातुरिच्छानुसारमयं भाणो विरचितः।

नारायणस्यापरा कृतिः भाषानैषधचम्पूः मलयालम्-भाषायामुप-लभ्यते। कृतावस्यामुपनिबद्धानि संस्कृतपद्यानि रसभावनिर्भराणि सन्ति। कृतिरियं मलयालम्भाषायाः सर्वोत्तमचम्पूषु विद्यते। रासक्रीडा-भिधानायां नारायणस्य कृतौ मन्दाक्रान्ताछन्दसि ६१२ पद्यानि वर्तन्ते। उत्तररामचरितचम्पूरपि नारायणस्यैव कृतिः समर्थ्यते।

महिषमङ्गलभाणे अनङ्गकेतोरनङ्गपताकया सह प्रणयो वर्णितः। अस्य कथावस्तु तु प्रायः समेषां भाणानां कथावस्तुवदेव विद्यते, परन्त्वस्य काव्योन्मेषो वर्णनच्छटा चोच्चकोटिं स्पृशतः। यथा— नायिकाया वर्णनम्—

> कुटिलमसितमेघच्छायमाभोगभारं,
> चिकुरमधिकदीर्घं लम्बमानं वहन्ती।
> परिलघयति पश्चाद्भागकान्त्यापि धैर्यं,
> न हि गुलगुलिकायाः क्वापि माधुर्यभेदः॥

सरसीं प्रति स्नानाय गच्छन्त्या लावण्यवत्याः कन्याया वर्णनमस्ति—

अर्धालक्ष्यमनोहरोरुयुगलं नात्यायतं बिभ्रती,
वासः प्रोषितभूषणैरवयवैः कान्तिं किरन्तीं पराम् ।
तैलाभ्यक्ततनुर्निबद्धचिकुरा ताम्बूलगर्भानना,
वापीं स्नातुमितो निजान्निलयनान्निर्याति शातोदरी ॥

भाणस्यान्ते नारायणः स्वाश्रयदातुः परिचयं ददाति—

राजत्कीर्तिविभूषितत्रिभुवनः श्रीराजराजाह्वयः,
राजेन्दुः श्रितिमायुगान्तसमयं पायादपेतापदम् ।
वामार्धार्जितपुण्यपूरलहरी सोमार्धचूडामणेः,
कामाक्षीकुलदेवता मम च सा कामप्रसूः कल्पताम् ॥

कामाक्षीं स्तुवन् नारायणः पुनर्लिखति—

अद्याहं......माटमहाराजस्य........
राजराजस्य निदेशात् कलिपतवलयालय-
विहारायाः...........शिवकामसुन्दर्या श्रीकामाक्ष्या ।
कटाक्षनालविगलदविरलदयामृतसदासेकप्रफुल्ल-
कवित्वपादपेन केनापि निबद्धं कमपि भाणम्......॥[1]

## सत्यभामापरिणयम्

सत्यभामापरिणयं नाम नाटकं महाकविना स्फुलिङ्गेन विरचितम् । स्फुलिङ्गस्यापरं नाम मल्लिकार्जुन इत्यासीत् । अयं लक्ष्मणस्य पुत्रः कुमारडिण्डिमस्य च जामातासीत् ।

कुमारडिण्डिमस्य रचनाकालः १५०० ईशवीयाब्दात् १५३० ईशवीयाब्दं यावदस्ति । अतः सत्यभामापरिणयस्य रचनासमयः १५५० ई० वत्सरस्य सविधे भवितुमर्हति । नाटकेऽस्मिन् पञ्चाङ्काः सुशोभन्ते । अस्य प्रथमोऽभिनयो मुलुन्दस्योत्सवे समजनि ।

सत्यभामापरिणयस्योल्लेखः Trennial Cat. of Sanskrit Mss. in Oriental Library, Madras III. 2953 प्राप्यते ।

---

१. महिषमङ्गलस्य प्रकाशनं पालघाटात् १८८० ईशवीयवत्सरे समभवत् । अस्य प्रकाशनं त्रिचूरादपि सञ्जातम् ।

## नन्दिघोषविजयम्

नन्दिघोषविजयस्य रचयिता शिवनारायणदासः कमलापुरुषोत्तमयोः पारस्परिकचर्याया वर्णनं कृतवान्। अतोऽस्य नाटकस्य द्वितीयं नाम कमलाविलासमप्यस्ति। अस्मिन् पुरी-रथयात्रायाः कतिपयदृश्यानि सन्ति। अस्मिन् नाटके पञ्चाङ्का विलसन्ति। कवेराश्रयदातुर्गजपति-नरसिंहदेवस्य भूमिका वर्तते। नरसिंहदेवः षोडशशतकस्य मध्यभागे उत्कलस्य नृपतिरासीत्।[1]

## रुक्मिणी-हरणम्

षोडशशतके गोदावरीतटान् नरसिंहनामा विद्वान् काश्यामागतः। तस्य धर्मशास्त्रे व्याकरणे चापूर्वं वैचक्षण्यमासीत्। काशीविद्वन्मण्डलं तस्य प्रतिभया चमत्कृतमासीत्। अयं काशीराजस्याश्रयमुपलब्धवान्। अस्य शिष्यमण्डल्यां भट्टोजि–नागोजि–सदृशा व्याकरणाचार्या अभूवन्। अस्यैव नरसिंहस्यात्मजः चिन्तामणी रुक्मिणीहरणनाटकं प्रणिनाय। अस्यापरा कृती रसमञ्जरी–परिमलं वर्तते। चिन्तामणे रचनाकालः खीष्टषोडशशताब्द्या अन्तिमश्चरणोऽस्ति।

रुक्मिणीहरणस्य पद्यानुवादो मुम्बयीतः १८७३ ईशावीयाब्दे प्रकाशितः। 'ब्रिटिश-म्यूजियमे'ऽस्य प्रतिः सुरक्षिता विद्यते।

## ज्ञानचन्द्रोदयम्

ज्ञानचन्द्रोदयनाटकस्य प्रणेता पद्मसुन्दरोऽस्ति। अयं मुगुलसम्राजोऽकबरस्याश्रयमुपलब्धवान्। पद्मसुन्दरो नागौरस्थ-तपागच्छस्य श्रेष्ठो विद्वानासीत्। असावकबरस्य सभासदासीत्। जोधपुरनृपतिर्मालवदेवोऽपि (१५३२–१५७३ ई०) अमुं सम्मानयामास।

एतन्नाटकातिरिक्तमपि पद्मसुन्दरस्य रचनाः सन्ति—(१) सुन्दर-प्रकाश-शब्दार्णवः (कोषः) (२) शृङ्गार-दर्पणः (३) हायनसुन्दरम् (ज्योतिष) (४) भविष्यदत्तचरितम् रायमल्लाभ्युदयः (५) पार्श्वनाथकाव्यम् (६) प्रमाण-सुन्दरम्।

---

१. अस्य हस्तलिखिता प्रतिलिपिः लन्दने 'इण्डिया-आफिस-पुस्तकालये' ४१९० संख्यायां विद्यते।

पद्मसुन्दरस्य रचनाकालः १५८२ ई० वत्सरपर्यन्तमस्ति। ज्ञान-चन्द्रोदयस्य रचना १५७० ईशवीयाब्दस्य समीपेऽस्ति।

## वासन्तिकापरिणयम्

वासन्तिकापरिणयनाटकस्य प्रणेता शठकोपयतिरस्ति। शठकोप-यतिः खीष्ट षोडशशतके दक्षिणभारतेऽहोबिलमठस्य सप्तम आचार्य आसीत्। एतस्मात् प्राक् षष्ठ आचार्यः पराङ्कुशो बभूव, यो विजय-नगरस्य रामराजस्य ( १५४२–१६६५ ई० ) समकालिक आसीत्। अस्य मूलनाम तिरुमल इत्यासीत्। अयं 'कवितार्किक-कण्ठीरव' इत्युपाधिं प्राप। लेखकानां शतं युगपदेव कविता लेखयितुं शक्त आसीत् इति तस्य ख्यातिः। वाहिनीपतिनामा कविः अस्य प्रशंसां कृतवान्।

वासन्तिकापरिणये पञ्चाङ्काः सन्ति। अस्मिन् वासन्तिकाख्यया वनदेव्या सह अहोबिलस्य विवाहवर्णनमस्ति।

## कौतुक-रत्नाकरम्

( प्रहसनम् )

कौतुकरत्नाकरस्य रचयिता वाणीनाथस्य पुत्रः कवितार्किक आसीत्। अयं नोवाखालीनगरे 'भुलुया'—याः नृपस्य पुरोहितोऽवर्तत। अनेन खीष्टषोडशशतकस्यान्तिमे चरणे कौतुकरत्नाकरं नाम प्रहसनं व्यरचि।

कौतुकरत्नाकरस्य नायको दुरितार्णवो नाम नृपति र्बुद्धिहीनोऽशक्त-श्चासीत्। तस्य राजधानी पुण्यवर्जिता नगरी बभूव। एकदा तस्य दुःशीलायाः पत्न्या हरणं बभूव। स स्वस्य धूर्तसेवकान् तामन्वेष्टुं प्रैषयत्। तेष्वेकः सुशीलान्तकनामा नगररक्षक आसीत्। तस्य भुजपाशे आबद्धा भूत्वैव सा राज्ञी वन्दिनी भूता, अपहृता च। वसन्तोत्सवो नातिदूरमासीत्। राज्ञीं विना राजा कथमिवास्मिन् सम्मिलितो भवेत्?

राज्ञः परामर्शदाता मन्त्री कुमतिपुञ्ज आसीत्। तस्य वैद्यो व्याधि-वर्धकः, ज्योतिषी अशुभचिन्तकः, सेनापतिः समरकातरः, गुरुश्च अजितेन्द्रिय आसन्। एतेषां सर्वेषां सम्मत्या अनङ्गतरङ्गिणीनाम्नी वेश्या पत्न्याः स्थानं जग्राह। तदानीमेव सूचनोपलब्धा यत् कपटवेषधारी नाम ब्राह्मणो राज्याश्चौरः सम्प्राप्तः। पुरा अनेन ब्राह्मणेन

अनङ्गतरङ्गिण्या सह प्रेम समारब्धं, परन्तु वेश्यया ताडितः गृहाद् निःसारितः। न्यायचक्रेण सोऽपराधी तु घोषितः, किन्तु वसन्तोत्सवेन तस्यापराध प्रक्षालितः।

अस्य प्रतिः लन्दने 'इण्डिया-आफिस-लाइब्रेरी-सप्तमे खण्डे १६१८ तथा ४१६७ संख्याका वर्तते।

## कुवलयाश्वचरितम्

### विख्यातविजयञ्च

अनयोर्नाटकयोः प्रणेता लक्ष्मणमाणिक्यदेवो राजा सम्राजोऽकबरस्य समकालिक आसीत्। असौ ख्रीष्ट—षोडशशतकस्य चरमे चरणे कुवलयाश्वचरितं विख्यातविजयं च प्रणिनाय। अस्मिन् नाटके कुवलयाश्वस्य मदालसायाश्च प्रणयस्य वर्णनमस्ति। विख्यातविजये च नकुलस्य कौरवैः सह युद्धस्य वर्णनं विद्यते। अस्मिन् कर्ण-वधं यावद् नकुलविक्रमस्य घटनाः सङ्कलिताः सन्ति।

कुवलयाश्वचरितस्य विख्यातविजयस्य चर्चा Aufrecht - Catalogus Catalogorum III. 25 तथा III. 120 क्रमशः समुपलभ्यते। हरप्रसादस्य वक्तव्ये १८ पृष्ठेऽस्य विवरणमस्ति।

## कुवलयविलासम्

कुवलयविलासनाटकस्य प्रणेता रयसोऽहोबलमन्त्रिणः पिता नृसिंहामात्यः, पितामहश्च चन्नयमन्त्री अभूताम्। नाटकेऽस्मिन् पञ्चस्वङ्केषु मदालसाकुवलयाश्वयोः प्रणयकथा वर्णितास्ति। अस्य रचना विजयनगरनृपस्य श्रीरङ्गराजस्येच्छानुसारं सम्पन्ना।

अस्य हस्तलिखिता प्रतिः तञ्जौरे २३१६ संख्यका विद्यते।

## ज्ञानसूर्योदयम्

वादिचन्द्रसूरिणा विरचितं ज्ञानसूर्योदयं नाम नाटकं कृष्णमिश्र-वेङ्कटनाथविरचितयोः प्रबन्धचन्द्रोदयसङ्कल्पसूर्योदययोः नाटकयोः परम्परायाम् प्रेष्ठा शृङ्खला विद्यते।

कविना नाटकान्ते स्वपरिचयः प्रदत्तः, यदनुसारं स मूलसङ्घितो ज्ञानभूषण-भट्टारकस्य प्रशिष्यः, प्रभाचन्द्रस्य च शिष्य आसीत्। अस्य

नाटकस्य रचना कविर्मधूकनगरे १५६२ ई० कृतवान्। मधूकनगरं गुर्जरप्रदेशेऽस्ति। वादिचन्द्रस्य सम्भवतः तदेव वसतिरासीत्।

वादिचन्द्रः काव्यात्मकान् धार्मिकान् अनेकान् ग्रन्थान् प्रणीतवान्। अस्य पवनदूते १०१ पद्यानि सन्ति। पार्श्वपुराणे च १५०० पद्यानि विलसन्ति। अस्य रचना १५८३ ईशवीयवत्सरे बभूव। अस्य पाण्डव-पुराणम्, होलिका-चरित्रम्, सुभग-सुलोचनाचरितम्, यशोधर-चरितम् इत्येते ग्रन्थाः संस्कृतेन प्रणीताः। यशोधरचरितस्य रचना १६०० ई० समभवत्। वादिचन्द्रस्य रचनाकालः प्रायेण षोडशशतक-स्योत्तरार्धोऽस्ति।

ज्ञानसूर्योदयस्योपरि प्रबोधचन्द्रोदयस्य विशेषः प्रभावः परिलक्ष्यते। अस्य कथावस्तुनि बहुषु च पद्येषु प्रबोधचन्द्रोदयस्यानुकरणमात्रं विद्यते।

डॉ० गुलाबचौधरीमहोदयस्यानुसारम् इदं ज्ञानसूर्योदयं श्रीकृष्ण-मिश्रस्य प्रबोधचन्द्रोदयस्य तुलनायां लिखितम्।.........द्वयोरपि रचनयोः पात्रनामस्वपि साम्यम्। ज्ञानसूर्योदये कर्त्रा प्रबोधचन्द्रोदयस्य रीत्या बौद्धानामुपहासो विहितः। तथा च क्षपणकस्य स्थाने सितपटं कल्पयित्वा श्वेताम्बराणामुपहासोऽकारि।

ज्ञानसूर्योदये प्रस्तावनायाः स्थाने उत्थानिका वर्तते, यत्र कमल-सागर–कीर्तिसागरनामानौ ब्रह्मचारिणौ सूत्रधारमस्य नाटकस्य प्रयोगाय त्वरयतः।[1]

## अभिराममणिनाटकम्

अभिराममणिनाटकस्य रचयिता सुन्दरमिश्रोऽस्ति। सुन्दरमिश्रः षोडशशतके समजनि। नाटकस्यास्य रचना १५६६ ईशवीयाब्दे सञ्जाता। अस्मिन् सप्ताङ्काः सन्ति। अस्य प्रथमाभिनयो जगन्नाथ-पुर्याम् पुरुषोत्तमस्य महोत्सवेऽभूत्।

अस्योल्लेखो विलसनकृते "थियेटर आफ हिन्दूज" ग्रन्थस्य १४३ पृष्ठेऽस्ति। विलसनोऽस्य प्रतिद्वयस्यावलोकनं कृतवान्। अस्योल्लेखः तेन "कैटेलागसकैटेलोगोरमे" १.२६ कृतः।

---

१. ज्ञानसूर्योदयस्य हिन्दीभाषायामनुवादः १९०९ ई० वत्सरे जैनग्रन्थ-रत्नाकर-कार्यालयद्वारा मुम्बयीतः सम्पन्नः॥

## बालकवेर्नाटकानि

बालकवेः प्रतिभाया विलासः केरलेऽभवत् । अस्याश्रयदाता कोचीनस्य राजा रामवर्मासीत् । रामवर्माणं नायकीकृत्य कवी रामवर्मविलासनामकं नाटकं विरचितवान् ।

बालकविरुत्तराकोटें मुल्लंड्रमे वसति स्म । अस्य पिता कालहस्ती, पितामहो मल्लिकार्जुनश्चास्ताम् । बालकवेः कुले काव्यरचना कुलपरम्परागता प्रतीयते ।

## रामवर्म-विलासम्

रामवर्मविलासनाटके राज्ञो रामवर्मणः प्रणयस्य विजयस्य च कथा वर्तते । नायको रामवर्मा कोचीनराज्यस्य भारं स्वभ्रातरि गोदावर्मणि निक्षिप्य तुलाककावेर्यां निवसति स्म । तत्र मन्दारमालानाम्नी नायिकां विवाह्य कंचित् समयं गमयामास । अस्मिन्नेव काले शत्रवः कोचीनमाक्रान्तवन्तः । गोदावर्मणः सूचनामुपलभ्य रामवर्मा पुनः कोचीनमागत्य शत्रून् पराभवत् । ततः स राज्यभारं परिहाय काशीयात्रामकरोत् तीर्थयात्राप्रसङ्गेन ।

रामवर्मा १६०१ ईशवीयाब्दं यावत शासनमकरोत् । चिदम्बरस्य मन्दिरे १५७५ ईशवीयाब्दस्य रामवर्मण उत्कीर्णशिलालेखः प्राप्तः ।

योऽभूद्यौवनभारतीकविवराच्छ्रीसोमनाथात्मजः,
छन्दोगः स हि मल्लिकार्जुनकविर्धन्यः पिता यत्पितुः ।
सोऽयं बालकविः सुधाद्रकविताभाक्कालहस्त्यात्मजः
प्रख्यातो भुवि कस्य न श्रुतिपथं श्रेयोनिधिर्गाहते ॥

## केतूदय

बालकवेः केतूदयस्य रचनाऽपि रामवर्मण इच्छानुसारं समभवत् । अस्मिन्नपि रामवर्मैव नायकः । अत्रतस्य राज्यपरित्यागात् पूर्वस्य कथा वर्तते ।

उपर्युक्तयोरुभयो र्नाटकयोः ऐतिहासिकं महत्त्वं विद्यते । जीवनचरितात्मकनाटकीयकथावस्तुनो विकासोऽनयो र्नाटकयोर्वैशिष्ट्यम् । एतादृशेषु नाटकेषु कार्यावस्था न समुपलभ्यन्ते[1] ॥

●

१ निबन्धनमिदं डा.रामजी उपाध्यायस्य आधुनिक-संस्कृत-नाटकान्निष्कृष्टम् ।

# कालिदासीयम्

डॉ० कैलाशनाथ द्विवेदी

## कालिदासवर्णिताश्रमाणां वैशिष्ट्यम्

कालिदासः संस्कृतवाङ्मयस्य मूर्धाभिषिक्तो महाकविरस्ति। तस्याप्रतिमप्रतिभायाः संस्पर्शाज्जीवन-जगतोर्नाना वर्ण्यविषयाः सर्वथा ज्योतिर्मया, भूत्वा सहृदयसंवेद्याः सञ्जाताः। श्रीमतां के० एस०[1] रामस्वामिप्रभृतिविदुषां मतं समीचीनमेव यत् कालिदासस्य पावन-मुन्याश्रमेषु महती आस्थाऽऽसीत्। अतएव तेन स्वकीयकाव्यकृतिषु पावनानामृष्याश्रमाणां वैशिष्ट्यपूर्णा मनोहारिणी छटाऽङ्किता, यस्या विवेचनमस्मिन्निबन्धे मया सोदाहरणं प्रस्तूयते।

महाकविवर्णिताश्रमाः संसारस्याशान्तवातावरणाद्दूरं, नगराद्बहिः पावनपर्वतवनोपवनेषु प्रायः नदीतटस्य जलाशयस्य वा समीपस्था आसन्। कविना क्वचित्—कुत्रचिदेतेषां भौगोलिकस्थितिरपि स्पष्टतया निर्दिष्टाऽस्ति। उदाहरणार्थम्—कण्वाश्रमो धर्मारण्ये[2] हिमालयपर्वतस्य

---

१. "The epics as well as the dramas are full of the tapovanas atmosphere. Śakuntalā begins with Kaṇva's hermitage on the earth and closes with the hermitage of Maricha on the Hemkūta mountain, Raghuvanśa beginings with Vasiṣṭha's hermitage. Kumārasambhava describes the hermitage of Śiva, and later on the hermitage of Umā on Himalaya rangc."
—Kālidās, by K. S. Ramswami Shastri, II Edition. pp. 33–34.

२. अभिज्ञानशाकुन्तले १।३१ तीव्राघातप्रतिहततरुः··········धर्मारण्यं प्रविशतिगजः स्यन्दनालोकभीतं।
अभिज्ञानशाकुन्तले ५।९ किं तावद्व्रतिनाम्·······धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम्।

पादशृङ्खलासु मालिनीनद्याः[1] समीपस्थ आसीत्। अभिज्ञानशाकुन्तलस्यानेकैरुद्धरणैरस्य संपुष्टिर्भवति। एवं रघुवंशमहाकाव्ये महाकविमतानुसारं वाल्मीकेराश्रमो गङ्गा-[2]तमसानद्योर्मध्यवर्तिभूभागेऽवस्थित आसीत्। वशिष्ठाश्रमस्य स्थितिरपि हिमालयपर्वते गङ्गाया उद्गमक्षेत्र आसीत्, यस्मात् स्थलाच्चरन्ती सौरभेयी नन्दिनी गङ्गाप्रपातस्य समीपवर्ति-स्थले हिमालयीयगह्वरे प्रविवेश—

अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः।
गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश॥
(रघु० २।२६)

एतेषामाश्रमाणां नैसर्गिकी-सुषमा हरितपादपपुञ्जैः पुष्पितपल्लवितसघनलताकुञ्जैः कमलैर्हरितैस्सरोभिर्मृगमयूरादिपशुपक्षिभिश्च सर्वदा समृद्धाऽभवत्।[3] आश्रमवासिनामेतेभ्य एतादृगव्याजस्नेहसम्बन्ध आसीत् यत्त एकैकस्य सुखदुःखयोरत्यन्तं संवेदनशीला अभवन्। प्रकृतेस्तादात्म्यस्यानया भावनया पतिगृहप्रस्थानकाले शकुन्तला एतान् सर्वाननुमतिं[4] ययाचे। कण्वाश्रमस्य सचेतना प्रकृतिः प्रस्थानवेलायां पूर्णसंवेदनां प्रदर्शयती चित्रिता महाकविना—

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः॥
(अभि० शा० ४।१२)

---

१. अभि० शा० ६।१७ कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी।
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।'

२. रघु० १४।२८ भागीरथीतीरतपोवनानि। १४।५२ गांगं निवादाहत-
१४।७६ अशून्यतीरां...तमसां विगाह्य।

३. रघु० ११।१२ नाम्भसां कमलशोभिनां..., १३।४६

४. अभि०शा० ४।९ पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्॥

अयमेव मार्मिकभावो महाकविना वाल्मीकितपोवने रामाज्ञया लक्ष्मणेन परित्यक्तायाः सीताया परित्यागावसरे मार्मिकशब्देषु प्रकटितोऽस्ति—

'नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः।
तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि॥'

(रघु० १४।६६)

तपोवनरूपे इमे शान्ताश्रमा अनेकवीतरागमुनीनां निवासस्थानान्यासन्, यत्र रम्यसात्त्विकवातावरणे समाधिस्थास्ते निर्बाधतपश्चर्यायां निरता बभूवुः। मारीचाश्रमस्य एतादृशि लोकोत्तररम्यवातावरणे समाधिस्थतपस्विनः कविकुलगुरुरत्यन्तं सुन्दरं चित्रणं कृतवान्—

वल्मीकार्धनिमग्नमूर्तिरुरसा संदष्टसर्पत्वचा,
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः।
अंसव्यापिशकुन्तनीडनिचितं विभ्रज्जटामण्डलं,
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः॥

(अभि० शा० ६।११)

एवं प्रकारेण तपस्विनः सुतीक्ष्णस्य महतीं तपश्चर्यां[1] वर्णयन् शरभङ्गाश्रमे महात्मनः शरभङ्गस्य घोरं तपो महाकविना वर्णितमेतेषु शब्देषु रामचन्द्रस्य पुष्पकविमानेन प्रत्यागमनकाले—

अदः शरण्यं शरभङ्गनाम्नस्तपोवनं पावनमाहिताग्नेः।
चिराय संतर्प्य समिद्भिरग्निं यो मंत्रपूतां तनुमप्यहौषीत्॥

(रघु० १३।४५)

एतेष्वाश्रमेषु नियमिता यज्ञहवनादिधार्मिकक्रिया मुनिभिर्नित्यं सम्पन्ना अभवन्। आश्रमप्राङ्गणेषु निर्मिता यज्ञवेदिकाः प्रातः सायं यज्ञाग्निना एतावत् प्रज्वलिता बभूवुः, (अभि. शा. ४।८ अमीं वेदिं परितः……वह्नयः पावयन्तु) यत्ताभ्य उद्गतधूम्रेणाश्रमपादपानां

१. रघु० १३।४१ हविर्भुजामेधवतां चतुर्णां मध्ये ललाटंतपसप्तसप्तिः।
असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः॥
रघु० १३।४२ अमुं सहासप्रहितेक्षणानि व्याजार्धसंदर्शितमेखलानि।
नालं विकर्तुं जनितेन्द्रशङ्कं सुराङ्गनाविभ्रमचेष्टितानि॥

किसलयान्यपि धूमिलानि[1] भवन्ति स्म। मुनिजनानामाश्रमं परितः वृक्षाणां गर्भकोटरेभ्यो भ्रष्टैर्नीवारैः इङ्गुदीफलभिद्भिः प्रस्निग्धैः प्रस्तरखण्डैः, जलबिन्दुभिर्रेखाङ्कितैर्जलाशयमार्गादिभिश्च दूरादेव एतेषामाश्रमाणां [2]ज्ञानं भवति स्म।

वर्णनसाम्यदृष्ट्या कविवर्णितेष्वेतेषु यज्ञस्थानतपःस्थानप्रधानेष्वाश्रमेषु वशिष्ठविश्वामित्रकण्ववाल्मीकिसुतीक्ष्णशरभङ्गाऽगस्त्यादिमुनीनामाश्रमा उल्लेखनीयाः सन्ति।

महाकविवर्णितानामेषामाश्रमाणां प्रमुखवैशिष्ट्यमेतेषां शिक्षासंस्थानरूपे सुप्रसिद्धिरस्ति। इमे आश्रमाः ज्ञानध्यानयोर्क्षेत्रे देशे लब्धप्रतिष्ठमहर्षिभिः सञ्चालिता व्यवस्थिताश्चाभवन्, ये कुलपतयः इत्यभिहिताः सन्ति। कुलपतय एवैतेषामाश्रमाणामधिष्ठातार आसन्, येषां संरक्षणे सहस्रसंख्यकाः शिष्याः ब्रह्मचारिणो भूत्वा वेदवेदाङ्गैस्सह शास्त्रीयलौकिकाश्च विद्या निःशुल्कं शिक्षितवन्तः। गुरुभ्यः सर्वे शिष्याः शिक्षासमाप्तौ सहर्षं गुरुदक्षिणां दत्तवन्तः। महर्षिवरतन्त्वाश्रमस्य एतादृशैर्भाव एकेन स्नातकेन कौत्सेन गुरुदक्षिणा विषये स्वकीयाक्षमतापूर्णस्थितिरेवं राजानं रघुं प्रति निवेदिताऽस्ति—

निर्बन्धसञ्जातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति॥

(रघु० ५।२१)

एतादृशः शिक्षासंस्थानरूपाः कण्वाश्रमच्यवनाश्रमसिद्धाश्रमवाल्मीक्याश्रमादय उल्लेखनीयाः सन्ति।

महाकविकालिदासवर्णितेष्वेतेष्वाश्रमेषु प्रेमविश्वबन्धुत्वभावनया

---

१. अभि० शाकु० १।१५ कुल्याम्भोभिः······भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन।

२. अभि० शाकु० १।१५ नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः,
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगास्-
तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः॥

जीवहिंसा सर्वथा विवर्जितासीत् । [1]सर्वदमनायुप्रभृतिमुनिकुमारका अपि इमामाश्रमविरुद्धवृत्तिं प्रति निषिद्धा आसन् । एष्वाश्रमेषु मुनीनां निर्विघ्न-धार्मिकक्रियाभ्यस्तत्सम्बन्धितराज्यस्य शासकस्यैव प्रमुखं दायित्वमासीत् यतः तेन राज्ञा एतेभ्यो मुनिभ्यस्तपसष्षष्ठांशः[2] स्वत एव प्राप्यते स्म । इदमेव कारणमस्ति यदाश्रममृगं न हन्तुमनुरोधयद्भिर्मुनिभिः तपोवन-रक्षणाय राजा दुष्यन्तः सादरं समामंत्रितः—'राजन् ! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः । पुनश्च वैखानसेन राजाऽस्मिन् विषये एवमुक्तः—

'रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद् भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥'

महर्षिविश्वामित्रोऽपि[3] स्वकीयसिद्धाश्रमे यज्ञविध्वंसकान् मारीच-सुबाहुसदृशराक्षसान् संहारयितुं राजानं दशरथं याचिगत्या रामलक्ष्मणौ समानीतवान् ।

गृहस्थाश्रमस्य सामान्यधर्माणामिव एतेष्वाश्रमेष्वपि [4]संयमित-दाम्पत्यजीवननियोजितसन्तानोत्पत्त्यतिथिसत्कारादिलोकाचाराणां प्रायः प्रचलनमासीत् । महर्षिकण्वकथनेन तथ्यस्यास्य संपुष्टिर्भवति—'वत्से ! ...वनौकसोऽपि वयं लौकिकज्ञा एव ।' ( अभि. शा. चतुर्थाङ्कः )

---

१. अभि० शा० प्रथमा तपस्विनीकथनम्—अविनीत ! किं नोऽपत्यनिर्वि-शेषाणि सत्त्वानि विप्रकरोषि" ( सप्तमाङ्के, पृ. ५६ ) ।
विक्रमोर्वशीयम्–तुलनीयं तापसीकथनम्—अद्य पुष्पसमित्कुशनिमित्तं ऋषिकुमारकैः सहगतेनानेन आश्रमविरुद्धमाचरितं...लक्ष्यीकृतो वाणः ।" ( पंचमाङ्को, पृ.२४६ ) ।

२. अभि० शा० २।१३ तपः षड्भागमक्षय्यं ददत्यारण्यका हि नः ॥

३. रघु० ११।१ कौशिकेन स किल क्षितीश्वरो रामध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते ॥

४. रघु० १।४८ सायं संयमिनस्तस्य महर्षेर्महिषीसखः ।
१।५६ अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ।

लोकजीवने व्यवहृतसामान्यरीति-परम्पराशिष्टाचारादीनामपि तपोवनवासिनः सम्यक् परिपालनं कुर्वन्ति स्म। दुर्वाससः सदृशस्याभ्यागतस्य अतिथेः सत्कारं, तं प्रति समुचितं शिष्टाचारं वा न कृत्वा शकुन्तला तस्य शापेन[1] संत्रस्ताभवत्। परिणामतः दुष्यन्तो गान्धर्वविवाहस्य घटनामेव विस्मृतवान्, शकुन्तलायाश्च राजसभायां सप्रत्याख्यानमपि कृतवान्।

आश्रमेष्वेषु तपस्विनां सरलसरलं दैनिकजीवनं लोकजीवनमिव संलक्ष्यते। नित्यं पुष्पफलकन्दमूलकुशसमिदादिसामग्रीणां वनादानयनं,[2] मृग[3]-धेन्वादिपशूनां पालनं, तपस्विकन्याभिः पादपलतानां स्वप्रमाणानुरूपैर्घटैर्जलसेचनादिसामान्यकार्याणि[4] चोल्लेखनीयानि सन्ति।

मुनिजनानामाश्रमस्य सघनकुञ्जपुञ्जेषु यत्र-तत्र प्रस्तरशिलाखण्डानि[5] विद्यन्ते स्म, तेषूपविश्यैकान्ते शान्तवातावरणेऽध्ययनमननाभ्यां समं मुनिभिरातपात् संत्राणं लब्ध्वा विश्रामः क्रियते स्म। रात्रावाश्रमस्य कुटीरेषु इङ्गुदीतैलप्रदीपाः[6] प्रज्वलिता अभवन्।

महाकविवर्णिताः सर्वे आश्रमाः सामान्यतो यज्ञस्थानतपःस्थानशिक्षासंस्थानरूपेषु आर्यावर्त्त एव नापितु समस्तभारतवर्षेऽवस्थितिमवाप्य साधारणगृहस्थधर्मात्पराङ्मुखा नासन्। इमे सामयिकपरि-

---

१. विचिन्तयन्ती यमनन्यमानसा, तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमं कृतामिव।

२. वनान्तरादुपावृत्तैः समित्कुशफलाहरैः।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः।

३. रघु० १४।७९ सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय।

४. रघु० १।५१ सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम्।
१३।४६ छायाविनीताध्वपरिश्रमेस्थिता सुपुत्रेषु पादपेषु।
१४।७८ पयोघटैराश्रमबालवृक्षान् संवर्धयन्ती स्वबलानुरूपैः।

५. अभि० शा०—तृतीयाङ्के (शकुन्तला शिलापट्टमधिशयानाऽङ्किताकविना)।

६. रघु० १४।८१ ता इंगुदीस्नेहकृतप्रदीपां...।

स्थितिमनुसृत्य 'बहुजनहिताय', 'बहुजनसुखाय' इति परमोदात्तभावना-वशाद्युगधर्मं संवहन्तः सम्पूर्णराष्ट्रस्य भौतिकाध्यात्मिकयोरुत्कर्षाय महत्त्वपूर्णं योगमददुः। राज्यसंरक्षणं लब्ध्वापीमे शान्तसात्त्विकरम्य-स्वतन्त्रवातावरणे च श्वसितवन्तः। महाकवेरघुवंशकुमारसंभवाभिज्ञान-शाकुन्तलप्रभृतय उत्कृष्टाः कृतय एतेषां पावनाश्रमाणां गौरवगरिम्णा अभिमण्डिताः सन्ति। महाकाव्यरघुवंशस्य प्रारम्भो वशिष्ठाश्रमे दिलीप-सुदक्षिणयोः प्रवेशाद् भवति। परन्त्वभिज्ञानशाकुन्तलनाटकस्य कथा-वस्तुनः प्रारम्भोऽन्तश्च लोकेतरशोभासम्पन्नेषु तपोवनेषु लोकमङ्गलस्य पावनभावनया सममेव अभवताम।

महाकवेस्तपोवनेषु एवमाकर्षणमभिलक्ष्य श्रीमतः के. एस. राम-स्वामिनो मतमिदं सर्वथा समीचीनमेव प्रतिभाति यत् मुन्याश्रमाणां तस्य राष्ट्रियसांस्कृतिकविचारधारयोः [1]पृष्ठभूमिसन्दर्भे—

"But the intensest devotion of Kālidāsa in regard to his motherland is in regard to her holy mountains and *her holy hermitages* and her holy streams and his holy temples and other places of pilgrimage. The Indian civilization of which the poem is a presentation and panorama.........*it had its inspiration from the Tapovanaas where lived godly men who were beloved of gods and men.*"

( Kālidāsa, II Ed; p. 33 & 214 )

संक्षेपे. कथयितुमिदं शक्यते यत्कविकुलगुरुणा कालिदासेन वर्णिता इमे पावनाश्रमाः प्राचीनभारतस्य समुज्ज्वलभूमौ विद्यमानाध्यात्मिको-

---

१. महाकवेः कालिदासस्य भौगोलिकज्ञानसमन्वितराष्ट्रियसांस्कृतिकविचार-धारयोः पृष्ठभूमि—सन्दर्भे विस्तृतविवेचनाय लेखकस्य पी-एच० डी० शोधप्रबन्धोऽवलोकनीयः। 'कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान' शीर्षकाङ्कितोऽयं शोधग्रन्थः आगराविश्वविद्यालयेन १९६८ ई० वर्षे पी-एच० डी० उपाधये स्वीकृतः साहित्यनिकेतनेन च कर्णपुरे १९६९ ई० वर्षे प्रकाशितः।

त्कर्षपूर्णाया उपलब्धेः कीर्तिं गायन्ति। वस्तुतः परम्परारूपेण एतेष पावनानामाश्रमाणां चित्रणं कृत्वा कालिदासः करुणाक्षमादयापरोपकारपूर्णस्य तपोमयशुद्धजीवनस्योज्ज्वलान्तः पक्षस्य मनोमोहकच्छटां दर्शयित्वा भारतीयसंस्कृतेश्चरमादर्शं प्रति विश्वमुन्मुखं कृतवान्।



# अर्थप्रकृति-विमर्शः

*रामजी उपाध्यायः*

भारतीये नाट्यशास्त्रे पञ्चार्थप्रकृतयो विलसन्ति।[1] तासु कार्यं नाम फलोपायो भवति, उताहो फलमिति परीक्षणीयम्। 'कार्यं तु फलोपायः' इति अभिनवगुप्तस्याभिनवभारत्यां सम्मतम्। कार्यं तु फलमिति धनञ्जयस्य दशरूपकेऽन्येषु परवर्तिनाट्यशास्त्रीय-सन्दर्भेषु च प्रायशः प्रतिपादितम्।

अर्थप्रकृतीनां प्रकरणेऽभिनवगुप्तो विशदयति—

'यत्रार्थः फलं तस्य प्रकृतय उपायाः फलहेतवः' इति[2] तेन फलस्योपायः अधोलिखित-दिशा निर्दिष्टाः —




एतैः पञ्चभिरुपायैः पूर्णफलं निष्पाद्यते।

भरतानुसारं कार्यस्याधोलिखिता परिभाषा युज्यते—

> यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते।
> तदर्थो यः समारम्भस्तत्कार्यं परिकीर्तितम्॥
>
> ( ना. शा. १६.२६ )

---

१. बीजं बिन्दुः पताका च प्रकरी कार्यमेव च।

२. अभिनव-भारती तृतीयभागे १२ पृष्ठे।

एतां कारिकां विवृण्वन्नभिनवगुप्तः प्राह—

'प्राज्ञैः प्रधाननायक-पताकानायक-प्रकरीनायकैश्चेतनरूपैः यद्वस्तु फलरूपं प्रयुज्यते सम्पाद्यते, सम्पाद्यत्वेनानुसन्धीयते, तत्फलप्रयोजनो यः सम्पूर्णतादायी पूर्वपरिगृहीतस्य प्रधानस्य-बीजाख्योपायस्य फलम्। आरभते इत्यारम्भशब्दवाच्यो द्रव्य-क्रिया-गुण-प्रभृतिः सर्वोऽर्थः (यस्य) सहकारी (तत्) कार्यमित्युच्यते। चेतनैः कार्यते फलमिति व्युत्पत्त्या। सम्यगिति प्रभुमन्त्रोत्साह-शक्तित्रय-सम्पन्नैरित्यर्थः। तेन जनपद-कोश-दुर्गादिक-व्यापार-वैचित्र्यं सामाद्युपाय-वर्ग इत्येतत् सर्वं कार्येऽन्तर्भवति। तत्र परं प्रथमं-परिगृहीतः प्रधानभूतोऽभ्युपायो बीजत्वेनोक्तः।'[1]

अन्यत्रापि कार्यस्येदृशी विवृतिः भरतेनाभिनवगुप्तेन च कृता। तथा हि—कार्यं तु यदाधिकारिकमित्यादि तस्याः पञ्चाङ्गस्यानुष्ठानम्। तद्यथा, कर्मणामारम्भोपायः पुरुष-द्रव्य-सम्पद्देश-काल-विभागः, विनिपात-प्रकारः कार्यसिद्धिरिति।[2]

अन्यच्च—

यत्कार्यं हि फलप्राप्त्या सामर्थ्यात् परिकल्प्यते।
तदाधिकारिकं ज्ञेयमन्यत् प्रासङ्गिकं विदुः॥
(ना० शा० १६.३)

इति विवृण्वन्नभिनवगुप्तः समर्थयति—

'प्रधानत्वेन सम्पाद्ये फले यो ज्ञानेच्छाप्रयत्नक्रिया-लक्षण आरम्भः तत्कार्यमिति।

भरतेनान्यत्रापि बहुशः कार्यशब्दः समारम्भार्थमभिलक्ष्य प्रयुक्तो दृश्यते। तथा हि—

कालोत्थानगतिरसौ व्याख्यासंरम्भकार्यविषयाणाम्।
अर्थाभिधानयुक्तः प्रवेशकः स्यादनेकार्थः॥
(ना० शा० १८.३५)

बह्वाश्रयमपि कार्यं प्रवेशकैः संक्षिपेच्च सन्धिषु वा।
बहुचूर्णपदैर्युक्तं जनयति खेदं प्रयोगस्य॥
(ना० शा० १८.३६)

---

१. अभिनवभारती तृतीयभागे १६ पृष्ठे।
२. अभिनवभारती द्वितीयभागे ४२५ पृष्ठे।

एकदिवसप्रवृत्तं कार्यस्त्वङ्कोऽर्थबीजमधिकृत्य ।
आवश्यककार्याणामविरोधेन प्रयोगेषु ॥
( ना० शा० १८.२१ )

एकाङ्केन कदाचिद् बहूनि कार्याणि योजयेद् धीमान् ।
आवश्यकाविरोधेन तत्र कार्याणि कार्याणि ॥
( ना० शा० १८.२२ )

रङ्गं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः ।
बीजार्थयुक्तियुक्तं कृत्वा कार्यं यथारसम् ॥
( ना० शा० १८.२३ )

सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभिः ।
एतास्त्वनुक्रमेणैव पञ्चावस्था भवन्ति हि ॥ १६.१४

अर्थप्रकृतीनां फलहेतुता तु किमतः परं स्पष्टतरं भवेत् यतो हि नाम भरतः कथयति—

आसां स्वभावभिन्नानां परस्परसमागमात् ।
विन्यास एकभावेन फलहेतुः प्रकीर्तितः ॥
( ना० शा० १६.१५ )

यद्यासामर्थप्रकृतीनां विन्यासः फलहेतुरस्ति तर्हि तासु अन्यतमं कार्यमिति कथं नाम फलं स्यात् ।

अतः परं विरुद्धमेव धनञ्जयस्य दशरूपक उद्धृतं मतं समीक्ष्यते । अर्थप्रकृति-प्रकरणे धनञ्जय-धनिकयोर्वचनं विद्यते—

'तस्येतिवृत्तस्य किं फलमित्याह—

कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च ॥ ( द. रू. १.१६ )

धर्मार्थकामाः फलम् तच्च शुद्धमेकैकानुबन्धं द्वित्र्यनुबन्धं वा ।

एतदनुसृत्यार्थप्रकृतिं विवृण्वन् धनिको ब्रूते—

'अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः'

अस्यां स्थितौ दशरूपकावलोके विसंवादो लक्ष्यते यत् कथं नाम प्रयोजनसिद्धिहेतुषु अर्थप्रकृतिषु फलरूपं कार्यमन्तर्भवति ? यद्येवं स्यात् तर्हि फलस्य फलहेतोश्चैकात्म्यं जायेतेति चिन्त्यम् ।

अप्रामाणिकमपि धनिकधनञ्जययोरुपर्युक्तं कार्य-लक्षणं परवर्ति-नाट्याचार्यैरविचार्यैवोरीकृतम् । तथा हि—

## भोजः

कथाशरीरव्यापिन्यां नायकसहायादि—क्रियायामुपलभ्यमानं प्रधान-सम्बन्धी प्रारम्भफलविशेषः कार्यमित्युच्यते । धर्मार्थकामानामन्यतमं हि पुरुषार्थ-कार्यमित्यामनन्ति । तदाह—

यदाधिकारिकं वस्तु सम्यक्प्राज्ञैः प्रयुज्यते ।
यदर्थश्च समारम्भस्तत् कार्यमिति कीर्तितम् ॥

कार्यस्योदाहरणम्—

नीतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया।
देवी प्रीतिमुपागता च भगिनी-लाभाज्जिताः कोसलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन् करोमि स्पृहाम्॥

कार्यार्थं च दैवपौरुषप्राधान्यमध्यासते ।[1]

## सागरनन्दी

यदर्थे काव्यस्यारम्भः सिद्धे यस्मिन् समापनम् ।
आनुषङ्गिकसम्पन्नं तत्कार्यमिति कथ्यते ॥[2]

## शारदातनयः

फलं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च ।
फलं यदितिवृत्तस्य स त्रिवर्ग इतीरितः ॥
साध्यत्वादेव कार्यस्य सर्वान्ते तत्प्रयोजयेत् ॥[3]

## विश्वनाथः

अपेक्षितं तु यत्साध्यमारम्भो यन्निबन्धनः ।
समापनं तु यत्सिद्ध्यै तत्कार्यमिति सम्मतम् ॥[4]

---

१. शृङ्गारप्रकाशे ४८३-४८४ पृष्ठे ।

२. नाटक-लक्षण-रत्नकोशे १.२७ ।

३. भावप्रकाशने २०५ पृष्ठे ।

४. साहित्यदर्पणे ६.६९ ।

## सिंहभूपालः

कार्यस्य कारणं प्राज्ञैस्तद्बीजमिति कथ्यते ।
वस्तुनस्तु मतं तस्य धर्मकामार्थलक्षणम् ॥
फलं कार्यमिदं शुद्धं मिश्रं वा कल्पयेत् सुधीः ।[1]

परवर्तिनाट्याचार्येषु केवलं रामचन्द्रो नाट्यदर्पणे—नाट्यशास्त्रमभिनवभारतीं चानुसृत्यार्थप्रकृतिं कार्यं च विवृतवान् । सोऽर्थप्रकृतिस्थाने उपाय इति पदं प्रयुक्तवान् । अनन्तरं स उपायान् व्याख्याति स्म—

बीजं पताका प्रकरी बिन्दुः कार्यं यथारुचि ।
फलस्य हेतवः पञ्च चेतनाचेतनात्मकाः ॥ १.२८

कार्यं विवृणोति—

साध्ये बीजसहकारी, कार्यम् ।

प्रधाननायक-पताकानायक-प्रकरीनायकैः प्रधानफलत्वेनाभिप्रेते बीजस्य प्रारम्भावस्थोत्क्षिप्तस्य प्रधानोपायस्य सहकारी सम्पूर्णतादायी सैन्यकोश-दुर्ग-सामाद्युपायलक्षणो द्रव्य-गुण-क्रिया-प्रभृतिः सर्वोऽर्थः कार्यम् ।

कार्यं तु फलमिति भ्रान्तेः कुतस्त्यं नातिगूढम् । प्रथमं तावत् तत्सम्बन्धि-नाट्यशास्त्रीयकारिकायाः पाठभेद एव भ्रान्तेः कारणम् । अभिनवगुप्तेनाधोलिखिता कारिका कार्यलक्षणं प्रतिपादयितुं मुख्यतः प्रचिता—

यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते ।
तदर्थो यः समारम्भस्तत्कार्यं परिकीर्तितम् ॥ १९.२६

अस्याः कारिकायाः पाठभेदेनाधोलिखितं रूपं मूलाद्विवर्तते—

यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते ।
यदर्थश्च समारम्भः तत्कार्यमिति कीर्तितम् ॥[2]

---

१. रसार्णव-सुधाकरे ३.१८ ।

२. मूलाद्भिन्नोऽयं पाठो नाट्यशास्त्रस्य कार्यविषयकमन्यत्र प्रतिपादितंमतं नानुबध्नाति । अस्मिन् प्रसंगे द्रष्टव्याधोलिखिता कारिका—

आसां स्वभावभिन्नानां परस्परसमागमात् ।
विन्यास एकभावेन फलहेतुः प्रकीर्तितः ॥ ना. शा. १९.१५

इदं विपरिवर्तितं रूपं प्रमाणीकृत्य धनञ्जयादिभिः कार्यमेव फलमिति प्रतिपादितं स्यात्।

अभिनवगुप्तात् प्रागपि नाट्यशास्त्रस्य बहवः टीकाकारा बभूवुः। तेषां मतानि सम्परीक्ष्य सोऽभिनवभारतीमिति नाट्यशास्त्रीयसाकर-ग्रन्थं विरचयामास। तस्य ग्रन्थस्य प्रचारः कश्मीरं विहाय शेषे भारते तावन्मात्रं नाभवत्, यावन्मात्रं दशरूपकस्य प्रचारोऽभवत्। अतएव गड्डरिका-प्रवाहेण तत्रत्या नाट्यशास्त्राचार्या दशरूपकावलोकमनुसरन्ति स्म।[1]

# पताका प्रकरी च

पताका प्रकरी चेति द्विविधं प्रासङ्गिकं वृत्तं प्रायशः नाट्याचार्यै-र्मन्यते।[2] उभयविधं प्रासङ्गिकं वृत्तं (पताका प्रकरी च) परार्थेन सह स्वार्थस्य साधकमिति धनञ्जयः प्रतिपादयति।[3] धनञ्जयस्येदं मतमभि-नवभारतीं भारतीयं नाट्यशास्त्रं च नानुवर्तत इत्यस्माकं प्रतिपाद्यम्।

भरतानुसारं तु प्रासङ्गिक वृत्तेषु केवलं पताका-कोटिकं परार्थसाधकं स्वार्थसाधकं च भवति, न पुनः प्रकर्यास्तथात्वं विद्यते। प्रकरी तु केवलं परार्थायैव भवति। तद्यथा—

> यद्वृत्तं तु परार्थं स्यात् प्रधानस्योपकारकम्।
> प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता॥ ना. शा. १६.२

---

१. एतदेव समर्थितं कीथ महाभागेन। तद्यथा—

It was inevit able that the complicated and confused work of Bharata should be superseded for many purposes by something more accessible and cosy to follow and this need was supplied by the Daśarūpaka of Dhanañjaya. The Sanskrit Drama p. 272.

२. शारदातनयस्तु प्रासंगिकं वृत्तं त्रिधा मन्यते—

> प्रासंगिकाभिधं नाटके वस्तु नाटके भवति त्रिधा।
> पताका-प्रकरीयुक्त-पताकास्थानकक्रमात् ॥ सप्तमाधिकारात्

३. प्रासंगिकं परार्थस्य स्वार्थो यस्य प्रसंगतः। दश० १.१३

फलं प्रकल्प्यते यस्याः परार्थायैव केवलम् ।
अनुबन्धविहीनत्वात् प्रकरीति विनिर्दिशेत् ॥ (ना. शा. १९.२५)

एते कारिके विवृण्वन्नभिनवगुप्त आह—यद्वृत्तं तु परार्थं स्यादिति । यस्य सम्बन्धिवृत्तं संविदनुसन्धानं परस्य प्रयोजनसम्पत्तये भवदपि स्वप्रयोजनं सम्पादयति । अत एवाह प्रधानवच्च कल्प्यतेति । सचेतनानुसन्धाना पताका सिद्धिप्रधानस्योपकारिणी । एवं सुग्रीव-विभीषण-प्रभृतिरपि रामादिनोपक्रियमाणे रामादेरात्मनश्चोपकाराय प्रभवमाणे प्रसिद्धि-प्राशस्त्ये सम्पादयतीति । फलं प्रकल्प्यते यस्या इति यतश्च ततः परार्थमेव केवलं सर्वमनुतिष्ठति सा प्रकरी ।......प्रकर्षेण स्वार्थानपेक्षया करोतीति ।

अपरं च प्रकरी तु भरतानुसारमनुबन्धविहीना भवति । अस्मिन् प्रकरणेऽनुबन्धस्य कोऽभिप्राय इत्यभिनवगुप्तेन परोक्षरीत्या पताका-सम्बन्धि-कारिकां विवृण्वन् प्राह—'यस्य सम्बन्धिवृत्तं संविदनुसन्धानं परस्य प्रयोजनसम्पत्तये भवदपि स्वप्रयोजनं सम्पादयतीति'। अत्र संविदेवानुबन्धो नाम—मदर्थं त्वमेतत्कुरु, त्वदर्थमहमेतत्करिष्यामीति ।[1] प्रकरीचरितेऽनुबन्धो न भवति । पताकाचरितेऽनुबन्धोऽवश्यम्भावी । यथा रामायणे रामसुग्रीवयोः, विभीषणरामयोर्वा ।

प्रकरी नाम यदनुबन्धविहीना वर्तते तर्हि पताका वस्तुतः सानुबन्धेत्यनुगम्यते । अत एव धनञ्जयो दशरूपके निरूपयति—

'सानुबन्धं पताकाख्यं प्रकरी च प्रदेशभाक्' इति । अनया कारिकया स्पष्टं भवति यद् धनञ्जयमतेनानुबन्धस्तु विस्तार एव । इममर्थमूरीकृत्य धनिकः कारिकां स्पष्टयति—

दूरं यदनुवर्तते प्रासङ्गिकं सा पताका । सुग्रीवादिवृत्तान्तवत् । यदल्पं सा प्रकरी ।[2]

---

१. संवित् स्त्रियां प्रतिज्ञायामाचारे ज्ञानसागरे ।
सम्भाषणे क्रियाकारे संकेते नाम्नि तोषिणि ॥ इतिमेदिनी ७७,४२

अत्र क्रियाकारः Agreement अर्थे Williams : Sanskrit English Dictionary. इति

२. प्रकरी त्वनल्पापि भवति । तद्यथा कुन्दमालायामुत्तररामचरिते च वाल्मीकिवृत्तम् ।

धनिक-धनञ्जययोरिदं मतं भारतीयं नाट्यशास्त्रं वाभिनवभारतीं वा न स्पृशतीति प्रतिभाति। धनञ्जयस्य प्रकरी-विवेचनं चिन्त्यमेव।

अपरे नाट्यशास्त्राचार्याः सागरनन्दी, महाराजो भोजः, शारदातनयः, रामचन्द्र-गुणचन्द्रौ, विश्वनाथः, सिंहभूपालश्चैतद्विषयके संशयाब्धौ उन्मज्जन-निमज्जन-प्रवणाः।



# अस्माकं शोधयात्रा

*रविनन्दन त्रिपाठी*

१६७६ ईसवीयाब्दस्य २५ नवम्बरे वयं स्वस्वानुसन्धानविषयस्य परिपूर्तयेऽन्यत्रानुपलब्धान् ग्रन्थान् केरलेषु तमिलनाडुषु चान्वेष्टुमगच्छाम। सागरनगरात् त्रिवेन्द्रमं गच्छद्भिरस्माभिर्मध्यप्रदेश-महाराष्ट्र-आन्ध्र-तमिलनाडु-केरलप्रदेशानां विविधानि दृश्यानि, क्षेत्राणि, गृहाण्युपवनानि च दृष्टानि। तत्र केरलदृश्यावलयोऽत्यधिकस्माकं मनांसि मोहयामासुः। केरलेषु प्रत्येकं गृहमुपवनप्रायं विद्यते। गृहमभितः फलसंयुतानां नारिकेलपादपानां कदम्बकैः प्रसभमेवोत्तरभारतीयानां चेतांस्याकृष्यन्ते। केरलीयाः परिष्कृताभिरुचयो राजन्ते। केरलेषु युवजना युवत्यश्च केशविन्यासैर्भृशं शोभन्ते।

केरलविश्वविद्यालयस्य पुस्तकोपलब्धिव्यवस्थापि समीचीना वर्तते। तत्रत्यौ विश्वविद्यालयपुस्तकालयाध्यक्षोपाध्यक्षौ विद्यार्थिजनसाहाय्यकरौ स्तः। पुस्तकालये संस्कृतसाहित्यं संवीक्ष्य वयं केरलविश्वविद्यालयस्य संस्कृतविभागाध्यक्षमहाभागानां दर्शनाय गतवन्तः। तस्मिन् दिने विभागाध्यक्षमहोदयाः क्वचित् कस्याञ्चित् परिषदि गतवन्त आसन्। अतो वयं विभागस्योपाध्यक्षमहोदयं प्रवाचकपदभाजं डॉ० उन्नीमहाभागानपश्याम। डॉ० उन्नीमहाभागैरस्माकं महत् साहाय्यमकारि। तैर्महाभागैः केरल-विदुषां महता विस्तारेण परिचयः प्रदत्तः। मलयालमलिप्यामुपनिबद्धं कुञ्जि-कुट्टन्-तम्पूरान्-विरचितं व्यायोगद्वयञ्च देवनागरीलिप्यां लेखयित्वा प्रेषयितुमपि प्रतिज्ञातवन्तः। डॉ० उन्नीमहाभागानाम् अचिन्तितकृपाव्यापारेण प्रहर्षनिर्भरा वयं "विनायक-टूरिस्ट-होम' इति नामकं निवासं प्रति प्रत्यागच्छाम।

अपरेद्युः संस्कृतविभागाध्यक्षाणां श्री अय्यरमहाभागानामपि दर्शनं कृतवन्तः। एतेऽपि महाभागाश्छात्रजनवत्सलाः सन्ति। ततः सायं नगरदैवतं भगवन्तमनन्तशयनं ( विष्णुं ) वयमवलोकितवन्तः। मन्दिरेऽस्मिन् प्रत्येको जनो धौतवस्त्रं धारयित्वैव प्रवेष्टुं शक्नोति।

तदनन्तरमस्माभिः तञ्जौरनगरं गन्तव्यमासीत्, परन्त्वस्माभि-विचारितं यत्कथङ्कारं वयमिमां शोधयात्रां तीर्थयात्रया सह न सम्मेल-यामः ? इत्थं विचार्य वयं बसयानेन कन्याकुमारीं प्रति प्रस्थितवन्तः। तत्र कन्याकुमारीं दृष्ट्वा तदनु च मध्येसमुद्रं शिलायामङ्कितं देवीपादं विवेकानन्दस्मारकं च व्यलोकयाम। कन्याकुमारीमन्दिरस्य सविधे समुद्रतटे स्थितं गान्धिस्मारकमन्दिरमप्यपश्याम। समुद्रतटीयं सूर्यास्त-मनं सूर्योदयञ्चाप्यवालोकयाम।

बहुकालं यावद् वयं सरित्पतितटसंस्थिता वारिधेरगाधमनन्तञ्च जलराशिमवलोकितवन्तः। पयोधिरुत्तुङ्गोत्तुङ्गवीचिभिः, उच्छलता पयोराशिना, तटशिलासङ्घट्टनोद्भवेन च दुग्धधवलेन फेनेन दर्शनार्थं समागतानां जनानामभिनन्दनमिव कुर्वन् विलोकितः।

ततः पश्चादस्माभिः श्रीरामेश्वरं प्रति बसयानेनैव प्रस्थितम्। मण्डपमितिनामकं स्थानं यावद् रेलयानेन गतम्। रात्रावष्टवादने रामेश्वरमित्याख्यां वसतिमासाद्य श्रीरामेश्वरमन्दिरस्य नातिदूर एव "सञ्जय-लॉज" इति नाम्नि निवासे नक्तं विश्राममकुर्म।

अथ च प्रातः समुत्थाय, नित्यकर्मतो निवृत्य, समुद्रमवगाह्य, तीर्थ-निर्देशकनिर्देशनानुसारं द्वाविंशतकुण्डजलेनापि स्नात्वा, शुष्कवाससी परिधाय, पूजनसामग्रीं गङ्गाजलं च गृहीत्वा, श्रीरामेश्वरदर्शनार्थं नियतशुल्कं प्रदाय, ( गङ्गाजलसमर्पणस्य च पञ्चरूप्यकात्मकं विशिष्टं शुल्कं दत्त्वा ) वयं मन्दिरं प्राविशाम। मन्दिराभ्यन्तरे भगवता रामेण प्रतिष्ठापितं शिवलिङ्गमपश्याम। तस्य दक्षिणतः श्रीपार्वत्या विशालां प्रतिमाञ्चावालोकयाम।

मन्दिरमिदमेकस्मिन् लघुद्वीपे वर्तते। द्वीपं परितः समुद्रो विद्यते। समुद्रे प्रायेण 'किलोमीटर' मितः सेतुर्निबद्धोऽस्ति, यस्योपरि रेलयानं चलति। द्वीपेऽस्मिन् 'बबूलवृक्षाः' प्राचुर्येण वर्तन्ते। तालतरुभिः सह नारिकेलानामुद्यानान्यपि शोभन्ते। बहुषु च भागेषु केवलं सिकतैव विद्यते।

अतः परं वयं तञ्जौरं प्रति रेलयानमाश्रित्य प्रस्थिताः। रात्रौ

दशवादने तञ्जौरनगरं समासादितम् । तत्रास्माभिः 'अशोक लॉज' इति निवासे न्युषितम् ।

अन्येद्युः सार्धदशवादने तञ्जौरनगरस्थितं 'सरस्वती-महल-पुस्तकालयम्' अगच्छाम । तत्र पुस्तकालयाध्यक्षाय सागरविश्वविद्यालय-संस्कृत-विभागाध्यक्षमहाभागहस्ताक्षरितं मुद्राक्षरसम्पन्नम् आत्मपरिचयात्मकं पत्रं प्रदाय, तत्राध्ययनस्यानुमतिं गृहीत्वा स्वस्वविषयसम्बद्धं ग्रन्थान्वेषणमस्माभिः समारब्धम् । तत्रास्माभिः "प्रचण्डभैरवव्यायोगः" विनतानन्दव्यायोगश्चेति व्यायोगद्वयं समुपलब्धं लिखितं च । अस्माकं सुहृदाऽपि[1] "पार्वतीपरिणयम्" इति महाकाव्यं लिखितम् । अस्माकं शोधविषयो "व्यायोगरूपकविकासः" इत्यस्ति । अस्माकं सुहृदश्च शोधविषयः "षोडशशतकस्य महाकाव्यानां विकासात्मकं परिशीलनं" विद्यते ।

सरस्वतीमहलपुस्तकालये संस्कृतग्रन्थानां पञ्चाशत्सहस्रं रक्षितं विद्यते । अन्यभाषाणामपि परश्शता ग्रन्था अस्मिन् रक्षिताः सन्ति । पुस्तकालयेऽस्मिन् चत्वारः संस्कृतपण्डिता नियुता विद्यन्ते, येऽध्ययनाय समागतानां छात्राणां विदुषाञ्च सर्वविधं साहाय्यमाचरन्ति । एते पण्डिताः संस्कृतभाषया विचारप्रकटने सक्षमा विद्यन्ते ।

पुस्तकालयस्य पार्श्वे एव "अनुसन्धानसंस्थानं" विलसति । संस्थानेऽस्मिन्नेके आयुर्वेदस्यानुसन्धानाधिकारिणः सन्ति, ते खलु संस्कृतभाषानुरागिणः, संस्कृतभाषणानुरागिणश्च वर्तन्ते । एतेषां समेषामेव विदुषां स्नेहं साहाय्यञ्च वयं विस्मर्तुं न शक्नुमः ।

अष्टौ दिनानि तञ्जौरमध्युष्य वयं मद्रासमगच्छाम । तत्र "विवेक-टूरिस्ट-हाउस" इतिनाम्नि निवासे न्यवसाम । इदं निवासस्थानं एग्मोराख्यनगरसम्भागस्य समीपे "हाल्स रोड" इति नामके राजमार्गे विद्यमानमास्ते ।

मद्रासे "राजकीय-संस्कृत-पाण्डुलिपि-पुस्तकालयः" ( Govt. Sans. Mss. Library ), जनतापुस्तकालयः, ( Public Libray ),

---

१. श्री गुहदरसिंहः कुर्वैती ।

"अड्यारपुस्तकालयश्च अस्माभिः समवलोकिताः। एतेषु पुस्तकालयेषु अस्मद्विषयसम्बद्धः कोऽपि नवीनो व्यायोगो नासीत्। अस्माकं सुहृद् शोधविषयसम्बद्धानि सप्तमहाकाव्यानि "राजकीय-संस्कृत-पाण्डुलिपि-पुस्तकालये" विलसन्ति, यानि स धनं प्रदाय लेखयिष्यति।

अड्यारपुस्तकालयस्य सविधे एको महान् वटवृक्षः समवलोकितो, यः किल विश्वस्य सर्वान् वटवृक्षान् परिणाहेनातिशेते।

अतः परं रेलयानसंस्थिता वयं भारतभुवो विविधान्, ग्रामान्, नगराणि सरितः, पर्वतान्, वनानि, सस्यसमृद्धीश्चावलोकयन्तः सागर-विश्वविद्यालयं प्रति प्रत्यागच्छाम।



# कालिदासकृतिषु सीमान्तविदेशिराज्यानामुल्लेखः

डॉ० कैलाशनाथ द्विवेदी

कालिदासः स्वकीयरचनासु वर्ण्यविषयेण सह बृहत्तरभारतस्यादर्श-सीमारेखा निर्धारयन्नेतेषां सीमान्तविदेशिराज्यानामपि समुल्लेखं कृतवान् । समसामयिकैतिहासिकराजनीतिकतथ्यैरेतेषां राज्यानां प्रत्यभिज्ञानपूर्णं विवेचनं क्रियते ।

## पारसीकराज्यम्

प्राचीनसीमान्तराज्येषु पारसीकराज्यस्य प्रमुखं स्थानं वर्तते । महाभारताद्पूर्ववर्तिग्रन्थेष्वस्योल्लेखः प्रायो न प्राप्यते । महाभारते[1] ( भीष्मपर्वणि ) यवनचीनकम्बोजहूणादिराज्यैः सह पारसीकानामप्यु-ल्लेखो विद्यते, यस्मिन्निमे म्लेच्छजातौ निर्धारिताः, शूरवीराश्च मन्यन्ते स्म । महाकविः कालिदासो रघुवंशे चतुर्थसर्गे रघुदिग्विजयप्रसङ्गे पारसीकराज्यमुल्लिखितवान्[2] । सागरतटीयापरान्तत्रिकूटराज्ये विजित्य ससैन्यो रघुर्जलमार्गेण न गत्वा स्थलमार्गेणैव पारसीकान् जेतुं प्रतस्थे । अस्मिन् प्रकरणे पारसीकानां प्रमदानां ( यवनीनां ) मदिरापानप्रवृत्तिः,[3] पारसीकाश्वारोहिसैनिकानां मधुमक्षिकामयसक्षौद्रपटलानीव श्मश्रुलानि[4]

---

१. महाभारते, भीष्मपर्वणि—

उत्तराश्चापरम्लेच्छाः क्रूरा भरतसत्तम ।
यवनाश्चीनकाम्बोजा दारुणा म्लेच्छजातयः ॥ ९।६५
सकृद्ग्रहाः कुलत्थाश्च हूणाः पारसिकैः सह ।
तथैव रमणाश्चीनास्तथैव दशमालिकाः ॥ ९।६६

२. रघुवंशे० ४।६० पारसीकाँस्ततो जेतुं प्रतस्थे स्थलवर्त्मना ।
इन्द्रियाख्यानिव रिपूँस्तत्त्वज्ञानेन संयमी ॥

३. रघु० ४।६१ यवनीमुखपद्मानां सेहे मधुमदं न सः ।
बालातपमिवाब्जानामकालजलदोदयः ॥

४. रघु० ४।६३ भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः सक्षौद्रपटलैरिव ॥

शिरांसि, अत्रोद्भवा द्राक्षालता द्राक्षासवादयश्च[1] कविना विशेषरूपेण वर्णिताः।

रघुवंशस्य यशस्विटीकाकारो दिनकरमिश्रः पारसीकं यवनराज्यं स्वीकरोति, वल्लभदेवश्चेमं पश्चिमदिशीयम् (पाश्चात्यं) मन्यते। हलायुधकोशः अस्य 'वनायुजं' नाम निर्धारितवान्। अस्य देशस्याश्वा विशेषरूपेण प्रसिद्धा भवन्ति। इमेऽश्वा महाकविना 'वनायुदेश्याः'[2] इति संज्ञयाऽन्यत्र उल्लिखिताः।

पारसीकराज्यमिदं 'पर्शिया' फारसाद्वा भिन्नं न प्रतीयते, यत् किल वर्तमानबिलोचिस्तान-दक्षिणी-अफगानिस्तान-पूर्वीरानराज्यानां भूभागेन विनिर्मितमासीत्।

प्रो० जयचन्द्रविद्यालङ्काराणां[3] मतानुसारं पारसीका इमे सिन्धु-तटीयाः 'सासेनियन्स' ( Sāssanians ) एव सन्ति, येऽफगानिस्तानस्य वर्तमान पर्शीवान्सजनानां पूर्वजेभ्यो भिन्नाः सन्ति।

स्व० डॉ० वासुदेवशरणाग्रवालमहोदयाः[4] पारसीकस्य समीकरणं पर्शिया-पारसेन वा समं कृतवन्तः। डी. सी. सरकारमहोदया[5] अपि पारसीकान् 'पर्शियन्स' इत्येव मन्यन्ते। इदं पारसीकराज्यं फारसाद्-भिन्नमस्ति।

---

१. रघु० ४।६५ विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम्।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु॥

२. रघुवंशे—दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्षवनायुदेश्याः।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः॥ ५।७३

३. Proceedings of Transaction of the VI Oriental Conference, Patna, Dec. 1930, p. 102.

४. 'विक्रमाङ्क' नागरी प्रचारिणी पत्रिका, काशी, सं० २००० वि०, पृ० २३७।

५. Studies in the Geography of Ancient & Mediaeval India, Delhi. 1960, P. 18.

सीमान्तवर्तिपश्चिमीराज्येषु पर्शिया-( पारस )-राज्यं पारसीकेन समीकरणीयम्, यतो महाकवेः 'प्रतस्थे स्थलवर्त्मना' वर्णनेनेदं ध्वनितम्भवति यद् रघुः जलमार्गेण पारसीकं गन्तुं शक्नोति स्म, तथापि तेन स्थलमार्गो गृहीतः। मल्लिनाथोऽस्य कारणं धार्मिकं स्वीकृतवान्—'समुद्रयाननिषिद्धत्वादिति भावः' ( सञ्जीवनी रघु. ४।६० ), किन्तु समीचीनमेवैतत्प्रतिभाति। यौद्धिकदृष्ट्याऽनेकानि कारणानि विद्यन्ते। स्थलवर्त्मना रघोरभियानस्य—यथा फारसस्य समुद्रीयमकरानतटस्य यौद्धिकदृष्ट्याऽननुकूलता, समुद्रीपोतगाहानामभावः, समुद्रीसुरक्षासाधनानाम् अभावश्च कारणानि सन्ति।

स्थलमार्गस्याभियानेनैव रघोर्दिग्विजयस्य सार्थकताऽस्ति। प्रतीय,ते महाकविस्तत्कालीनराष्ट्रस्यादर्शसीमारेखां निर्धारयितुमिच्छति या स्थलमार्गाभियानेनैव अधिकं स्पष्टीकर्तुं शक्यते। रघुः ससैन्यो दाक्षिणात्यमरुस्थलात् पारसीकराज्य-पूर्ववर्तिकिरथरसुलेमानपर्वतशृङ्खलः बोलनरन्ध्रेणातिक्रम्य प्राविशत। पारसीकं सिन्धुनद्या पश्चिमे विशालं सीमान्तराज्यमस्ति, यस्मिन् बिलोचिस्तानाफगानिस्तानयोर्भूभागौ वर्तेते। अत्र कन्दहार-( कन्धार ) काबुलगजनीबलखस्थानानां संयोजिका रेखा टालेमी ( Ptolemy ) निर्दिष्टायाः पश्चिम-रेखाया अनुकूलैव[1] विद्यते।

अयमेव प्रदेशश्चन्द्रगुप्तविक्रमादित्यस्य बैक्ट्रियाविजयेन प्रभावितोऽभवत्[2]। मेहरौलीलौहस्तम्भे पारसहिन्दुकुशवंक्षूपत्यका भारतस्य उत्तरीपश्चिमीसीमा निर्दिष्टाः। प्रो० जयचन्द्रविद्यालङ्कारः[3] पारसीवान्सभिन्नान् यान् सासनीजनान् पारसीकैः समं समीकृतवान्, ते सिन्धुनद्याः पश्चिम-प्रदेशस्य पह्लवेभ्योऽभिन्नाः प्रतीयन्ते, यतः पारसी पह्लवीशब्दौ साम्प्रतमपि समानार्थकौ स्तः। लाला सीतारामस्य[4] मतेन इमे पह्लवाः पारसीका वा अश्वकान-( अफगान )-यवनजनेभ्यो भिन्ना नासन्।

१. Majūmdār, M'crindles Ptolemy, P. 33-34.

२. Smith, Early History of India, IV Edition, p. 306.

३. Proceedings of Transaction of VI A. I. O. Conference, Patna, Dec. 1930 p. 102.

४. भूगोल ( भुवनकोषाङ्क ), प्रयाग, १९३२ ( मई, जून, जुलाई ) 'रघुदिग्विजय' शीर्षक लेख, पृ० ३६

तत्कालिकमिव फारसराज्यस्याद्यापि द्राक्षालतोत्पत्यै तदीयसेरियानाक्षेत्रं प्रसिद्धमस्ति ।

विल्सनमहोदयस्य[1] मतानुसारं हिरातप्रदेशसमीपस्था ऐल्बुर्जपर्वतस्य दक्षिणश्रृङ्खलाः, द्राञ्जियानादिद्राक्षालतोत्पादकक्षेत्राणि चैरियानाक्षेत्रान् सम्बन्धितानि सन्ति। फारसेऽद्यापि 'शीराजीति द्राक्षासुरा सर्वप्रियाऽस्ति, याम् आस्तीर्णाजिनवस्त्रेषूपविश्य रघोः सैनिकाः पीतवन्तः ( रघु० ४।६५—

विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमं ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ।। )

पर्शियाराज्यं साम्प्रतमपि चर्मवस्त्रैः महत्त्वं भजते। पेरीप्लसेन[2] चर्मकञ्चुकानां पारसादडोलिसाय निर्यातस्योल्लेखः कृतः। अतएव प्रतीयते, यद् महाकविकालिदासस्य श्मश्रुला अश्वारोहिणः पारसीकयवनेरानिजनेभ्योऽभिन्नाः सन्ति, तत्कालिकफारसञ्च सिन्धोः पश्चिमे, दक्षिणतो मकरानाद्, उत्तरं हैराद्दक्षिणपूर्वाफगानिस्तानपर्यन्तं विस्तृतमासीत्। पश्चिमे वर्तमानफारस पठारस्य पूर्विभागोऽप्यस्मिन् सम्मिलितोऽभविष्यत्।

## हूण ( वाह्लीक ) राज्यम्

पारसीकान् पराजित्य ससैन्यो रघुरुत्तरस्यां दिशि अग्रेसरोऽभवत्। वंक्षुनद्यास्तटे श्रममपनेतुकामा भूलुण्ठिताश्वाः सकेशरशरीराः सञ्जाताः। तत्रस्थैर्हूणशासकै[3] रघोर्गत्यवरोधाय प्रयत्नः कृतः, किन्तु ते रघोः पराक्रमेण परास्ता अभवन्।

---

१. Arrian–Antiquities, p. 150.

२. The Periplus of the Erythraean Sea (Translated by Schoff) P. 70.

३. रघुवंशे, ४।६७ तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।
कपोलपाटलादेशि बभूव रघुचेष्टितम् ।।

टिप्पणी— रेखाङ्किते 'कपोलपाटलादेशि' स्थाने डॉ० वासुदेवशरण अग्रवालप्रभृतिविद्वांसः 'कपोलपाटनादेशि' पाठं स्वीकुर्वन्ति । अस्मिन् 'कपोलपाटनादेशि' पाठे मृतहूणानामन्तिमसंस्कारस्याभासो विद्यते तेषां मतेन।

रघुवंशस्य प्रायः प्रमुखाष्टीकाकाराः [1]वल्लभदेव-चरित्रवर्धनादयः 'वंकु' 'वंक्षु' वेति शब्दं गृहीतवन्तः, किन्तु सञ्जीवनीकारो मल्लिनाथो वंक्षोः स्थाने सिन्धु-पाठं भ्रमवशात् गृह्णाति। कश्मीरं विहाय केशरोत्पत्त्यै वंक्षूपत्यकाऽल्पविख्याता नासीत्। क्षीरस्वामिनेदमेव[2] तथ्यं प्रतिपादितम्। अतएव वंक्षु ( oxus ) नद्या मध्यवर्तिन्या उपत्यकाया विस्तृत-भूभागेन वाह्लीक ( हूण ) राज्यस्य समीकरणं समीचीनमेवास्ति।

कतिपयैतिहासिकैरपि प्रमाणितं यद् वंक्षूपत्यकायां पञ्चमख्रिस्ताब्द्यां शक्तिशालिन्याहूणजातेः प्रभुत्वमासीत्। जे० जे०[3] मोदी महोदयानां मतानुसारं पूर्वितातारक्षेत्रान्निष्कासिता इमे हूणा ( वाह्लीकाः ) ईशवीय-प्रथमशताब्द्यां काशगराक्षु ( oxus ) क्षेत्रयोः प्रविष्टवन्तः। [4]औरलस्टीन महोदयानामभिमतेन ई० पञ्चमशताब्द्यां मध्यभागे आक्ससोपत्यकाया-मेषां जातेः शक्तिशालिशासनस्य संस्थापना बभूव। अनेन शासनेन गान्धारेण समं दक्षिणे सिन्धोः पारं खोतनपर्यन्तं भूभागो विजितः। सम्भवतस्तदानीमियमेव हूणजातिः पारसीकराज्यस्यापि शत्रुरासीत्, या ४२५ तमे ई० वर्षे पारसीकस्योपरिष्टादाक्रमणं कृतवती। फलतः पारसीकैर्विवशतो वंक्षुपर्यन्तं पारसीकराज्यस्य सीमा स्वीकृता[5]।

स्व० डॉ. वासुदेवशरणअग्रवालमहोदयैः[6] प्राचीन वाह्लीकं ( बैक्ट्रिया राज्यं ) आधुनिकबलखेन समीकृतम्। महाभारतस्यादिपर्वणः ( १६। १६ ) आधारेण स्व० डॉ० मोतीचन्द्र[7] इदं राज्यं वर्तमानोत्तरीयाफगानि-

---

१. वल्लभदेवः—'वंक्षुतीरविचेष्टनैः' इति पाठमादृत्य 'वंक्षू' ( वंक्षू ) नाम्नीं नदीं इत्याह। चरित्रवर्धनोऽपि—वंक्षू नाम'' इति पाठं ग्रह्णाति।

२. के० जी० ओझा के 'क्षीरस्वामी प्रकाशन', पृ० ११०।

३. Early History of the Hūṇas and Their Inraids in India & Persia. P. 545.

४. Early History of the Hūṇas. P. 656.

५. Modi, Early History of the Hūṇas. P. 566-67.

६. भारत की मौलिक एकता, पृ० १६३।

७. 'विक्रमाङ्क' नागरी प्रचारिणी पत्रिका, काशी, सं० २००० वि०, पृ० १८१।

स्तानस्य बलखादभिन्नं स्वीकरोति। प्रो० जयचन्द्रविद्यालङ्कारः[1] हूणराज्यमॉक्ससहायकोवक्षयोर्मध्यवर्तिभूभागेऽवस्थितमासीत्। श्रीमतः एस० के०[2] स्वामिन आयङ्गरस्यापि इदमेवाभिमतमस्ति। डी. सी. सरकारमहोदयोऽपि[3] महाम्लेच्छस्य प्राच्यां कम्बोजस्य पश्चिमे, अफगानिस्तानस्य चोत्तरे वर्तमानवलखं प्राचीनवाह्लीकं (बैक्ट्रिया) राज्यं स्वीकरोति।

वस्तुतस्तत्कालीनैतिहासिकं प्रतिबिम्बं महाकवेर्हूणानामुल्लेखेन दृश्यते। निश्चितरूपेण रघुवंशे (४।६७) उल्लिखितं, वंक्षु नद्याः मध्योपत्यकायामक्सत्रबकसत्रनद्योर्मध्यवर्तिभूभागे हूणराज्यमासीत्, यस्मै वाह्लीक-(बलख)-संज्ञां दातुं शक्यते। तदानीमस्य राज्यस्य दक्षिणे पारसीकगान्धारराज्ये, पूर्वे कम्बोजराज्यं, पश्चिमे च मध्यैशियाराज्यमवस्थितमासीत्।

## कम्बोजराज्यम्

इदं भारतस्य उत्तरसीमान्तप्रदेशीयमेकं प्राचीनं राज्यमस्ति। प्राचीन [4]साहित्येऽस्य प्राचुर्येणोल्लेखाः प्राप्यन्ते। वंक्षु (oxus) नद्याः मध्योपत्यकायां हूणराज्यं विजित्यससैन्यो रघुरग्रेसरी भूत्वा काम्बोजान् पराजितवान्[5]। अनेन ज्ञायते यत् कम्बोजस्य स्थितिः सामान्यतो वंक्षुनद्याः मध्योपत्यकाया वलखात्पूर्वमासीत्। कालिदासस्य परवर्ति-

---

१. Proceedings & Transactions of the VI A. I. O. C. Patna 1930. Dec. P. 102.

२. Indian. Antiquary, 1919. P. 65.

३. Studies in the Geography of the Ancient & Med. India, 1960 Delhi. P. 94.

४. वाल्मीकीयरामायणे, किष्किन्धाकाण्डे, ४३।१२ काम्बोज यवनाश्चैव शकानां पत्तनानि च। महाभारते, उद्योगपर्वणि १६६।१, ३, सभा० ११।२४, भीष्म० ९।६५।

५. रघुवंशे, ४।६९ काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः।
गजालानपरिक्लिष्टैरक्षोटैः सार्धमानताः॥

महाकविः कह्लणोऽपि[1] कम्बोजं कश्मीरस्योत्तरे वर्णितवान्। अतः वर्तमानबलखस्य पूर्वस्मिन्ऽफगानिस्तानस्योत्तरपूर्वयोः कश्मीरस्य चोत्तरे पामीरक्षेत्रेण समं कम्बोजराज्यं समीकर्त्तुं सर्वथा समीचीनमेव प्रतिभाति।

स्व० डॉ. [2]वासुदेव शरण-अग्रवालमहोदयो गाल्चाभाषाभाषिणं पामीरप्रदेशं, यद् बलखात्पूर्वं विस्तृतमस्ति, कम्बोजादभिन्नं स्वीकरोति। तस्य मतानुसारं मध्यकालीनयुगेऽयमेव भूभागः 'कम्बोह' इत्यभिधीयते स्म।

महाकवे रघुदिग्विजयप्रसङ्गेन ज्ञायते यत् कम्बोजशासकैः श्रेष्ठजातेरश्वस्वर्णरत्नहीरकादीनां धनराशी रघवे समर्पित आसीत्। श्रीजयचन्द्र-[3]विद्यालङ्कारस्य बदख्शां-पामीरयोः समीपवर्तिप्रदेशेन समं प्राचीनकम्बोजस्य समीकरणं सर्वथा समीचीनमस्ति। वुडमहाशयेनाऽपि स्वकीय वंक्षुयात्रायामुक्तं यद् इशिकाश्मात् २० मीलान्तरे घारानप्रदेशे माणिक्यखनयो वर्तन्ते, कोकचरस्योपत्यकायां राजवर्तखनयो, बदख्शां-क्षेत्रे च रजतखनयो विख्याता आसन् (वुडः, पृष्ठ १७१)। टरनियर[4] महाशयस्य मतानुसारं कश्मीरपारीणः वैदूर्योत्पादकः पर्वतोऽस्ति। अयमेव वालमहोदयेन फरगामुसमीपे (३६°-१०' उ. अ., ७१° पू. देशान्तरे) बदख्शां क्षेत्रेऽवस्थितः [5]स्वीकृतोऽस्ति। डॉ. भण्डारकर-महोदयो महाभारतस्य (८।४-५ कर्णराजपुरं गत्वा काम्भोजा निर्जितास्त्वया।) इत्याधारेण कश्मीरस्य दक्षिणे राजौरीसमीपस्थं छिभलक्षेत्रं कम्बोजं स्वीकरोति, किन्तु प्रो० जयचन्द्रविद्यालङ्कारोऽस्य[6] निराकरणं कृत्वा गाल्चाभाषिप्राचीनजनपदमेव कम्बोजं प्रमाणीकरोति।

---

१. राजतरङ्गिणी, सं० औरेल स्टीन पृ० १०४, ४।१६३-१७६।

२. Purāṇa, vol. VI—No 1. Jan. 1964, p. 221–29.
विक्रमाङ्क ना० प्र० प० काशी, सं० २००० वि० पृ० २३८।

३. भारतभूमि और उसके निवासी, पृ० २९७–३०५।

४. Travels in India, II, p. 25

५. Economic Geology of India, p. 229

६. Proceedings & Transactions of the VI A. I. O. C. Patna. 1930, P. 107–108.

लाङ्गमैनमहोदयेन[1] २५० ई. पूर्वस्यैतिहासिके भारतस्य मानचित्रे कम्बोजस्य या स्थितिः (हिमालयस्योत्तरे कश्मीरस्य च पूर्वे) प्रदर्शिताऽस्ति, सा सर्वथा तथ्यानुकूला प्रतिभाति। लालासीताराम-महोदयेन[2] लद्दाखक्षेत्रस्य उत्तरीभागः (गिलगितोपत्यकापि) अस्मिन् सम्मेलितः, यत्र महाकविकालिदासानुसारमश्वा प्रधानतया प्रादुर्भवन्ति। अस्य मूलनिवासिनः 'कम्बोह' इति संज्ञया युक्ताः सन्ति। एषु केचित् मुस्लिमधर्मानुयायिनो भूत्वा भारतं समागतवन्तः।

एवं, कम्बोजराज्यं वर्तमानकश्मीरस्योत्तरे पामीरवदख्शाप्रदेशे एव स्वीकर्त्तव्यं।

## लङ्काराज्यम्

भारतीयप्रायद्वीपस्य दक्षिणे हिन्दमहासागरे सुप्रसिद्धसिङ्घलद्वीपो लङ्काद्वीपस्यापराभिधानेन विश्रुतः। महाकविः कालिदासोऽस्योल्लेखं [3]रघुवंशे कृतवान्, येन ज्ञायते यल्लङ्कां परितः विस्तृतसागर आसीत्। लघुपरिखावत् तं सागरं रामः कपिभल्लूकसेनया निर्मितेन सेतुना संतीर्य रावणप्रशासितेऽस्मिन् द्वीपे प्राविशत्।

लङ्का वर्तमानसीलोनात् (बौद्धकालीनसिङ्घलद्वीपात्) श्रीलङ्काया वा सर्वथाऽभिन्ना वर्तते। यद्यपि कतिपये विद्वांसोऽस्य द्वीपस्यावस्थि-जंबलपुरसमीपे मध्यभारते स्वीकुर्वन्ति, किन्तु भौगोलिकतथ्यैरियं धारणा सर्वथाऽसमीचीनैव सिद्ध्यति। लङ्काद्वीपस्य विस्तारः दक्षिणो-त्तरयोः ६°३०–१०°३०, पश्चिमपूर्वयोः ७६°–४५' पू. दे.–८२° पूर्वीय-देशान्तरपर्यन्तमस्ति। बौद्धकालादेव सांस्कृतिक-व्यापारिकक्षेत्रयोरस्य

---

१. Senior Atlas of India, Ed. J. Philip. F. R. G. S. Pt. II Map No. A.

२. 'रघु० दिग्विजय' भूगोल (भुवनकोषाङ्क) प्रयाग १९३२, पृ० ३२

३. रघुवंशे १२।६३ स ददाह पुरीं लङ्कां···।, १२।६६ महार्णवपरिक्षेपं लंकायाः परिखालघुम्।
१२।७१ तेनोत्तीर्य पथा लंकां रोधयामास पिङ्गलैः।
१२।७८ लंकास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः।

द्वीपस्य महत्त्वपूर्णं स्थानमासीत्। लङ्काया उत्तरमध्यवर्तिक्षेत्रेऽवस्थितं पुरातनराजनगरमनुराधपुरं विशेषेण विख्यातमासीत्।

## द्वीपान्तरं ( हिन्देशिया ) राज्यम्

महाकविरपरोक्षरूपेण रघुवंशे[1] द्वीपान्तरस्य ( हिन्देशियायाः ) उल्लेखं कृतवान्, यस्मात् तत्कालिकं भारतं लवङ्गपुष्पाणामायातं करोति स्म।

डॉ. मोतीचन्द्रस्य[2] मतानुसारं गुप्तकालपर्यन्तं हिन्देशियायां भारतीयोपनिवेशाः विनिर्मिता आसन्, एतयोः पारस्परिक सांस्कृतिक-व्यापारिक-सम्बन्धाश्च गुप्तकाले अभवन्। अस्य पूर्वद्वीपसमूह इति संज्ञा द्वीपान्तरमिति संस्कृतसाहित्ये प्रायः प्रयुक्ताऽभवत्, यस्मिन् सुमात्राजावाबोर्नियो-प्रभृतिद्वीपाः सम्मिलिताः सन्ति। अतएवापररूपेण द्वीपान्तरं हिन्देशिया नाम्ना गृहीतुं शक्यते।

इदं द्वीपान्तरं ( हिन्देशिया राज्यं ) वस्तुतः लवङ्गेलादीनामुत्पत्त्यै, अन्यबाह्यदेशेभ्यो निर्यातार्य च साहित्ये[3] प्रसिद्धमासीत्। एषु सुमात्रा-[4] जावाद्वीपयोः प्रमुखं स्थानमासीत्। ईशवीय-सप्तमशताब्द्यां भारतद्वीपान्तरयोर्मध्ये प्रभूतं व्यापारिकजलयानचालनं प्रचलितमासीत्; अस्य ज्ञानं 'समराइच्चकहा'[5] ग्रन्थे धारणकथया भवति। तिलकमञ्जर्यां[6] ज्ञायते यद् द्वीपान्तराणां तटीयनगरेषु व्यापारिणां सम्मर्दः एकत्रितोऽभवत्। सामान्यतो द्वीपान्तरीयसैनिका वंशफलकं धारितवन्तः। तेषां लिपिरपि दुर्वाच्यासीत्। द्वीपान्तरजनानां समाजे वर्णाश्रमधर्मस्याभाव आसीत्। तत्र स्त्रीणामपहरणं साधारणं कार्यमासीत्। पुरुषाणां वेशभूषाः

---

१. रघुवंशे ६।५७ द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः।

२. सार्थवाह, पटना १९५३, पृ० १७४।

३. तिलकमञ्जरी, द्वितीयसंस्करणम्, बम्बई १९३८, पृ० १३६।

४. हर्ष और रॉक हिल, चाओजुकुआ, पृ० ६१, ७८।

५. समराइच्चकहा, बम्बई, १९३८, पृ० ५१०।

६. तिलकमञ्जरी, द्वितीय सं०, पृ० १२४-१३४।

तालकुण्डलैर्हिकङ्कणैश्च विचित्राऽसीत्। स्त्रियः आकर्षकवस्त्राणि धारयन्ति स्म।

इत्थं द्वीपान्तरं पूर्विद्वीपसमूहो वा हिन्देशियाया अभिन्नोऽस्ति स भारतस्य दक्षिणपूर्वयोर्भूमध्यरेखाया उभयतो दक्षिणं चीनसागरपूर्व-हिन्दमहासागरयोर्मध्ये विस्तृततोऽस्ति। एषु सुमात्राजावाबोर्नियोप्रभृतयो द्वीपाः प्रमुखाः सन्ति।

## चीनराज्यम्

प्राचीनसंस्कृत-साहित्ये[१] चीनस्योल्लेखः प्रायः प्राप्यते। महाभारत-काले[२] चीनवासिनो भगदत्तसेनायां सैनिका आसन। संभवतोऽत्र चीनशब्दस्य तात्पर्यः ऊर्ध्ववर्तिवर्मदेशस्य चीनजनैः स्यात्। महाकविः[३] कालिदासः राज्यस्यास्योल्लेखं विशेषप्रकारस्य कौशेयवस्त्रस्य चीनां-शुकस्य प्रयोगे कृतवान्, यत्तदानीं संभवतश्चीनदेशादेव आयातमासीत्। पार्जीटरमहोदयस्य[४] मतानुसारं सम्पूर्णं हिमालयसहितं तिब्बत-क्षेत्रमेव चीनमस्ति। डी० सी०[५] सरकारमहोदयः महाभारतस्य (६।६।६६) आधारेण अस्य देशस्य उत्तरपश्चिमयोर्भूभागं कम्बोजसंलग्नं स्वीकरोति।

एवं प्राचीनचीनं वर्तमानतिब्बतोर्ध्ववर्मभ्यां समं पूर्वे प्रशान्तमहा-सागरपर्यन्तं विस्तृतमासीत्। संभवतः ईशवीय पञ्चमशताब्द्यामिदं शक्तिशालिशासनमासीत्।

---

१. वाल्मीकिरामायणे, किष्किन्धा० ४३।१३, महाभारते, भीष्म० ९।६६ तथैव रमणाश्चीनास्तथैव दशमालिकाः।

२. महाभारते, सभापर्वणि २३।१९

३. अभिज्ञानशाकुन्तले, १।३२ चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य।

कुमारसम्भवे, ७।३ ···तच्चीनांशुकैः कल्पितकेतुमालम्।

४. मार्कण्डेयपुराण, अनुवाद, पृ० ३१९

५. Studies in the Geography of Ancient & Mediaeval India, Delhi. 1960. P. 26.

## समीक्षा

महाकवेः काव्यकृतिपूपर्युक्तसीमान्तविदेशिराज्यानामुल्लेखेन परिचीयते यत् कविकुलगुरोर्व्यापकदृष्टिर्नकेवलमस्मिन्देश एव सीमिता आसीत्, अपितु भारतीयसीमा अतिक्रम्य सीमान्तविदेशिराज्येष्वपि संन्निपतिता। अतएव भौगोलिकचित्रणेन सममेतेषां न केवलं नरनारीणां स्वरूपस्वभावादीनामपितु स तत्रोद्भवानां वस्तुजातानामपि यथातथ्यं वर्णनमकरोत्। एतेषामुल्लेखेन इदं स्पष्टं भवति यदेषामुपरि भारतस्य न केवलं संग्रामेषु सैनिकविजयोऽपितु सांस्कृतिकविजयोऽप्यासीत्। अतएव एभी राज्यैः समं भारतवर्षस्य पुरातनकालादेव सांस्कृतिक-राजनीतिकव्यापारिक-सम्बन्धा अपि सुदृढा आसन्।

प्रतीयते, कालिदासकालीने बृहत्तरभारते इमानि सीमान्तवैदेशिक-राज्यानि सांस्कृतिकदृष्ट्या राष्ट्रस्याविच्छिन्नाङ्गभूतानि आसन्।



# कालिदासीयोद्ध्यभिद्ययोः समीकरणम्

डॉ० कैलाशनाथ द्विवेदी

रघुवंशमहाकाव्यस्यान्तर्गत एकादशसर्गे सिद्धाश्रमं प्रति प्रस्थितयोर्महर्षिविश्वामित्रस्यानुगामिनो रामलक्ष्मणयोर्गमनचेष्टां निरूपयन् महाकविरुपमानरूपयोरिमे नद्यौ वर्णितवान्—

'वीचिलोलभुजयोस्तयोर्गतं शैशवाच्चपलमत्यशोभत।
तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टितम्॥' (रघु० ११।८)

यद्यपि बाह्यस्वरूपदृष्ट्या भौगोलिकपौराणिकमाहात्म्यदृष्ट्या चानयोर्नद्योर्गङ्गादीनां पुरातननदीनामिव माहात्म्यं प्रसिद्धिश्च न विद्येते, तथापि साहित्यशास्त्रीयग्रन्थेष्वनयोरुल्लेखः प्राप्यते। अतएव मनोहारिण्यौ लघुसरिताविमेऽस्माकं दृष्टिमावर्जयतः। नद्योरनयोः कुत्रचिदवस्थितिः किं स्वरूपञ्चासीदिति प्रश्नयोरुत्तरं प्रस्तूयतेऽस्मिन्नदीसमीकरणात्मके निबन्धे।

इमे उद्ध्यभिद्यौ नद्यौ बृहदाकारे नास्ताम्। अतएव अस्माकं प्राचीनसाहित्यग्रन्थेष्वनयोरुल्लेखोऽल्पमेव प्राप्यते। महावैयाकरणो महर्षिः पाणिनिः स्वकीयेऽष्टाध्यायिग्रन्थेऽनयोरुल्लेखं[1] कृतवान्, येन प्रतीयते यदिमे नद्यौ न भूत्वा नदा-वास्ताम्। अष्टाध्याय्यानयोर्नद्योः परिचयः प्राप्तुं न शक्यते, किन्त्वष्टाध्याय्याष्टीकाकारेषु वामनजयादित्याभ्यामिमे परिचीयेते यदुभेऽपीमे इरावत्यां (रावी) नद्यां पततः स्म। 'उद्ध्येरावति', 'भिद्येरावति' उदाहरणाभ्याञ्च तथ्यस्यास्य संपुष्टिर्भवति।

महाकविना कालिदासेनोपमानरूपयोरेकस्मिन्नेव स्थले[2] वर्णितयोर्नद्योरवस्थितिरपि काशिकाया उपर्युक्तोदाहरणाभ्यां (इरावत्या उल्लेखेन)

---

१. पाणिनीयाष्टाध्यायी—३।१।११५—'भिद्योद्ध्यौ नदे'।

२. रघु० ११।८ बीचिलोल······तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टितम्।

ज्ञातुं शक्यते । अष्टाध्याय्यामिमे नद्यौ 'नदौ' इति रूप उल्लिखिते स्तः। अतएव प्रतीयते, यत्पाणिनिकाले ( ई० पू० षष्ठशताब्द्यां उद्ध्यभिद्यौ [1]नदावास्ताम् , नद्यो रूपञ्च न धारितवन्तौ । स्पष्टमस्ति यत् प्रारम्भिके कालेऽविकसितायामवस्थायामिमौ नदयो रूपाभ्यां प्रवहतः स्म, किन्तु कालान्तरे कालिदासकालिकभारतेऽनवरतेन प्रवाहेण विकसितायामवस्थायां नद्यौ भूत्वेमे प्रसिद्धिङ्गतवत्यौ ।

## ( १ ) उद्ध्यनदीसमीकरणम्

अस्या नद्या नाम्नोऽस्याः प्रवाहप्रकृतिः परिज्ञायते । ऊर्ध्वगामिना परिपूर्णप्रवाहेण विशेषतो वर्षतौं वीचिभिः तटयोरुद्भेदनं भग्नपार्श्वाभ्यां जलनिष्क्रमणञ्चास्या मूलप्रकृतिः प्रतीयते । रघुवंशमहाकाव्यस्य यशस्विना टीकाकारेण [2]मल्लिनाथेनाऽपीयमेव सामान्याप्रवाहप्रकृतिरस्या उद्घाटिताऽस्ति । काशिकाया 'उद्ध्येरावति' उदाहरणेन निश्चितरूपेण कथयितुं शक्यते यदियं नदी पञ्चनदप्रदेशस्य इरावत्याः नद्याः सहायिका ( शाखा ) नदी आसीत् । अतएव नामसाम्यदृष्ट्या नदीयं 'उभ्म' नद्या समं समीकर्त्तुं शक्यते । विद्वद्वरैः स्व० डॉ. [3]वासुदेवशरणाग्रवालमहोदयै रपीयं उद्ध्यनदी 'उभ्म' नद्या समीकृता, इरावत्याः ( रावी ) नद्याः सहायकनदीरूपे स्वीकृता चास्ति ।

उद्ध्यनदी वर्तमानकाले 'उभ्म' नाम्ना कश्मीरहिमालयशृङ्खलाभ्यो निर्गत्य जम्मूप्रान्तवर्तिनि जसरोटाजनपदान्तर्गते प्रवहन्ती पञ्चनदप्रदेशस्य गुरुदासपुरजनपदे इरावत्याः ( राव्याः ) नद्या दक्षिणे तटे सङ्गच्छते । साम्प्रतमप्यस्याः तीव्रप्रवाहस्य तटोज्झनात्मिकी प्रकृतिर्वर्षतौं दृष्टुं शक्यते । लघ्वी सरिदियं वर्षस्यावशेषेषु मासेषु सामान्य-

---

१. लोकभाषायां नदस्य 'नालेति' संज्ञा सर्वैः प्रयुज्यते, साम्प्रतमपि, प्रायः दृश्यते यत् 'बरसाती नाला' कालान्तरे नदीरूपं गृह्णाति । नदस्य प्रयोगो विशालनद्यै विरलमेव भवति लोकव्यवहारे ।

२. सञ्जीवनीटीका–रघु० ११।८ 'उज्झत्युदकमित्युद्ध्यः'···।

३. पाणिनिकालीन-भारतवर्ष, डॉ० अग्रवाल, बनारस, सं० २०१२ वि०, पृ० ५२ ।

नदीवत् प्रवहन्ती विलोक्यते, किन्तु वर्षर्तौ एवास्या उग्रासामान्यं च रूपमलोक्यते।

## ( २ ) भिद्यनदी समीकरणम्

भिद्यनाम्नाऽस्या अप्यसामान्या प्रवाहप्रकृतिर्ज्ञायते, प्रतीयतेऽस्याः नाम्ना यदनयापि वर्षर्तौ तीव्रप्रवाहेण वीचिभिश्च तटयोरुभयोर्भेदनमसामान्यरूपेण क्रियते स्म। मल्लिनाथेन सञ्जीवनीटीकायामेवास्या अपि स्वभावः[1] प्रकटीकृतः।

वर्तमानकाले पञ्चनदप्रदेशस्य 'बही' (लोकभाषायां 'बई' नामधारिणी) नदी भिद्यनद्या समं समीकर्तुं शक्यते। यत इयं भिद्यनदी वर्षर्तावद्यापि स्वकीयतीव्रतोयप्रवाहेणोभेऽपि कूले भिनत्ति। तोयदागमनकाले तरङ्गैस्तीव्रतया तटभेदनत्वादियं भिद्यनदी सत्यमेवाऽभिहिता पुरातनजनैः।

स्व० डॉ० वासुदेवशरणाग्रवालमहोदया[2] अपि भिद्यनदीभ्यां बही (बई) नद्या समं समीकृतवन्तः। नामसाम्यदृष्ट्या समीकरणमिदं सर्वथा समीचीनमेवास्ति। अस्या नद्या उद्गमस्थानं 'उम्झ (उद्ध्य)-नद्या उद्गमस्थानात् अष्टकोशान्तरे पश्चिमे कश्मीरहिमालयशृङ्खलासु जम्मूप्रान्ते वर्तते। उपर्युक्तोद्गमस्थानात् प्रवहन्ती भिद्य (बई) नद्यपि पञ्चनदप्रान्तवर्तिगुरुदासपुरजनपदान्तर्गते एव इरावतीं (रावीं) नदीं सङ्गच्छति। वर्षर्तावस्यास्तीव्रतरङ्गैस्तटभेदनप्रकृतिर्दर्शनीयाऽस्ति।

वर्षर्तावुद्ध्यभिद्ययोरसामान्यां वारिवीचिभिस्तटत्यागभेदनात्मिकीं प्रकृतिं संवीक्ष्य समासेन समीकरणमनयोरुम्झबईनदीभ्यां समं सर्वथा समीचीनमेव[3] कथयितुं शक्यते। महाकविः कालिदासो रामलक्ष्मणयो-

---

१. सं० टीका—रघु० ११।८ 'भिनत्तिकूलमिति भिद्यः'।

२. पाणिनिकालीनभारतवर्ष, डॉ० वासुदेवशरण अग्रवाल, बनारस, सं० २०१२ वि०, पृ० ५२।

३. विस्तृतविवरणाय लेखकस्य १९६८ ई० वर्षे स्वीकृतः आगरा विश्वविद्यालयीयः पीएच० डी० शोधप्रवन्धः द्रष्टव्यः—'कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान', साहित्यनिकेतन, कानपुर १९६९ ई०, पृ० १२६–१२७.

रुपमेययोः शैशवावस्थायाः स्वाभाविकीं स्फूर्तिमयीं चञ्चलाङ्गैर्गमनचेष्टां निरूपयन् सटीकोपमानरूपयोरनयोः सुदूरवर्तिन्योर्नद्योरुल्लेखमुचितमेव कृतवान् । एवमन्यसामयिकसटीकोपमाभिराभिर्महाकविः कालिदासः सत्यमेवाभिहितः साहित्यालोचकैः—

'उपमा कालिदास्य ।'



# संस्कृतसाहित्ये व्यायोगपरम्परा

*श्री रविनन्दन त्रिपाठी*

## भीमपराक्रमम्

### कविपरिचयः

भीमपराक्रमव्यायोगस्य रचयिता शतानन्दसूनुर्विद्यते। कवेः जन्मस्थान-कुल-गोत्राणां विवरणं नोपलभ्यते। व्यायोगस्य रसानुकूला शब्दसंघटना शतानन्दसूनोर्वैचक्षण्यं प्रमाणयति।

### कथानकम्

भीमपराक्रमव्यायोगस्य कथावस्तु महाभारतम् भागवतञ्चोपजीवति। व्यायोगेऽस्मिन् मिश्रविष्कम्भकं सम्प्रयुक्तं वर्तते। मिश्रविष्कम्भके धौम्यो नाम पाण्डवानाम् पुरोहितः स्वशिष्येण मेधातिथिना सह रङ्गमञ्चं प्रविश्य, संवदन्, पौरोहित्यवृत्तिञ्च विनिन्दन्, श्रीकृष्णभीमार्जुनानां प्रास्थानिक मङ्गलाचारसम्पादनव्याजेन तेषां जरासन्धवधाय अभियानं निवेदयति।

मिश्रविष्कम्भकानन्तरं श्रीकृष्णभीमार्जुना इन्द्रप्रस्थाद् गिरिव्रजं गच्छन्तः, पथि च विविधविषयेषु परस्परं विमृशन्तः प्रविशन्ति। अद्वारेण नगरं प्रविश्य, नगरशोभामवलोकयन्तः त्रयोऽपि क्रमाद् राजगृहं गत्वा मगधराजदर्शनाय कञ्चुकिनं प्रेरयन्ति। अतिथीनामागमनं कञ्चुकिमुखाच्छ्रुत्वा जरासन्धो झटिति द्वारं समागत्य तानाभ्यतरं नयति। ततः सश्रद्धं तान् आतिथ्येन सभाजयति। अद्वारेण प्रवेशमधिकृत्य वाक्कलहः सञ्जायते। तस्मिन्नेव समये कलहाभिरुचिर्वीरव्रतो मुनिर्नारदः समायाति। सर्वैर्नमस्कृतो मुनिः कलहस्य निर्णायको विधीयते। नरमेधः शास्त्रसम्मतोऽसम्मतो वेति विषयमाश्रित्य पुनर्वादो जायते। तत्र नरमेधोऽशास्त्रसम्मतो लोकद्विष्टत्वादिति वादी कृष्णो जयति।

वादपणबन्धानुसारं जरासन्धोऽतिथेः कामं पूरयितुमुद्यतो भवति

कृष्णो जरासन्धं युद्धं याचते। जरासन्धः त्रयाणां मध्ये युद्धाय बाहुशालिनं भीमं वृणोति। अक्षवाटमवतीर्य द्वावपि लोमहर्षकरं युद्धं कुरुतः। अनेकशः सम्मर्दितोऽपि जरासन्धो भूयोभूयः समुत्थाय भीमेन सह युध्यति।

तस्मिन्नेव क्षणे नेदृशेनोपायेन मागधो हन्तव्य इति आकाशवाणीं श्रुत्वा भीमसेन उपायान्तरमवलम्ब्य जरासन्धं पृथिव्यां निपात्य तं मध्यतो विपाटयति।

जरासन्धतनूजो सहदेवो मन्त्रिमते स्थित इन्द्रदत्तं स्यन्दनं तेभ्यः समुपायनीकृत्य तान् प्रणमति। कृष्णस्तमाश्वास्य वन्दीकृतानां राज्ञां मोक्षमादिशति। तदनन्तरं नारदो ब्रह्मलोकं गच्छति तदनुज्ञाताश्च कृष्ण-भीमार्जुना उपहारप्राप्तं रथमारुह्य इन्द्रप्रस्थं प्रतिनिवर्तन्ते।

अस्य प्रकाशनं 'शूरनाड् कुञ्जन् पिल्ले एम. ए.'—महोदयद्वारा सम्पन्नम्। अनन्तशयनविश्वविद्यालयस्य संस्कृत-ग्रन्थावल्यां १७३ ग्रन्थाङ्के इदमुपलभ्यते। (Trivandrum Sanskrit Series No–173)

## शङ्खपराभवव्यायोगः

शङ्खपराभवव्यायोगस्य रचयिता महकविर्हरिहरोऽस्ति। गौडदेश-वास्तव्यो हरिहरः तीर्थयात्राप्रसङ्गेन गूर्जरप्रदेशमायातः। तदानीमेव राज्ञो वीरधवलस्य मन्त्रिणो वसन्तपालस्य सिन्धुराजकुमारस्य शङ्ख-विजयेन, तस्य च विदुषां समादरभावेन तद्गुणवशंवदो भूत्वा हरिहरः प्रस्तुतं रूपकं प्रणिनाय।

हरिहरस्य रचनासमयः त्रयोदश-ख्रीष्ट-शतकस्य पूर्वभागो वर्तते। अयं रससिद्धः कवीश्वर आसीत्। प्रबन्धकोशे हरिहरप्रशस्तौ लिखित-मस्ति—

मुधा मधु मुधासीधु मुधा कोऽपि सुधारसः।
आस्वादितं मनोहारि यदि हारिहरं वचः॥

—प्रबन्धकोशः, पृष्ठ ५८॥

## कथानकम्

शङ्खपराभवव्यायोग ऐतिहासिकं रूपकमस्ति। वन्दिभिरनुगतो वन्दिराजो रङ्गमञ्चं प्रविश्य स्वसहयोगिनः प्रति कथयति यत् सिन्धुराजकुमारः शङ्खो वीरधवलस्य मन्त्रिणा वसन्तपालेनाधिकृतं स्तम्भतीर्थं सेनया सह समागत्य अभिषेणयितुं प्रवर्तते। शङ्खप्रवृत्तिं चारैरवगत्य तत्प्रतीकाराय वसन्तपालः सन्नद्धः तिष्ठति।

वन्दिराजो वसन्तपालमहिमानं स्वानुयायिभिः परिचाययति—एष च वीरधवलामात्यः पुरतः शत्रुसैन्यं याचकाँश्च विलोक्य स्वप्राणान् धनानि च प्रति निरपेक्षो भवति।

गुणग्राही वन्दिराजः शङ्खं दृष्ट्वा तद्व्यक्तित्वेन समाकृष्टो ब्रवीति—एष वपुष्मान् वीररस इव विजयश्रीवरणोत्सुको यशस्वी शङ्खो मम नेत्रयोः परां प्रीतिं जनयति। ततश्च स शङ्खसम्मुखीनो भूत्वा तस्मै "वसन्तपालो भवन्तं समराय समाह्वयती"ति सन्दिशति।

शङ्खो विकत्थनापूर्वकमुत्तरं ददाति—मया वसन्तपालो विद्वानिति मत्वा पूर्वमुपेक्षितः। सम्प्रति वसन्तपालो वा वीरधवलो वा समागत्य परवीरापुरस्य रक्षां करोतु। इदमुक्त्वा शङ्खः परवीरापुरमाक्रमितुं सेनया सह समभिसरति।

प्रथमत एव सावधाना वसन्तपालस्य सैनिकाः शङ्खसैनिकान् प्रतिरुन्धन्ति। ततो वसन्तपालात् युद्धादेशं लब्ध्वा भुवनपालो नाम वीरवरः सङ्ग्रामरसावेशात् कवचं शिरस्त्राणञ्चाधारयित्वैव शङ्खप्रतिरोधाय प्रतिष्ठते। तं मूर्तं वीररसं दृष्ट्वा शङ्खः छद्म करोति। अहं शङ्खोऽस्मीति कथयित्वा शङ्खभटाः तत्सम्मुखमायान्ति। भुवनपालस्तानेकैकशः स्वखड्गप्रहारेण मृत्युमुखे जुहोति। अन्ततश्छद्मना शङ्खो भुवनपालं व्यापादयति। तस्य च करिकरोपमं भुजदण्डं दूतद्वारा वसन्तपालाय समुपायनीकरोति।

संक्रुद्धेन वसन्तपालेन शङ्खहननाय तत्सम्मुखं प्रस्थीयते। बहूँश्च प्रमुखान् शङ्खभटान् कालदंष्ट्राग्रासं सम्पादयति। उद्दामप्रतिशोधज्वालाज्वलितं वसन्तपालं सम्मुखमायान्तमवलोक्य शङ्खः प्राणपरीप्सायै सङ्ग्रामात् पलायते।

विजयी भुवनपालः सर्वे च परवीरापुरनिवासिनः सम्भूय नगराधिदेवताम् 'एकल्लवीरां' समर्चन्ति। पूजातः प्रसन्ना देवी गगनवाण्या नागरिकान् समाश्वासयति। देवीवाक्श्रवणानन्तरं प्रहृष्टा जनाः स्वं स्वं गृहं गच्छन्ति।

रूपकमिदं 'गायकवाडस्य ओरिएण्टलसीरीजस्य' १४८ संख्यायामुपलभ्यते। ( Gackwad's Oriental Series No 148 )

## भीमविक्रमम्

भीमविक्रमव्यायोगो मोक्षादित्यव्यासस्य कृतिरस्ति। व्यासो रूपकमिदं १३८५ विक्रमसंवत्सरे प्रणिनाय। अस्य जनकोपाध्यायौ क्रमाद् भीमहरिहरावास्ताम्। मोक्षादित्यः सम्भवतो गूर्जरप्रदेशवास्तव्यः कविरासीत्।

### कथानकम्

भीमविक्रमस्यापि कथानकं महाभारतं भागवतश्चोपजीवति। तत्र जरासन्धवधस्यैव वर्णनं विद्यते।

श्रीकृष्णभीमार्जुनैर्मगधराजवधाय रात्रावेव इन्द्रप्रस्थाद् गिरिव्रजनगरं गम्यते। मध्येमार्गं विविधविषयेषु चर्चां कुर्वन्तस्ते गिरिव्रजपरिसरं प्राप्नुवन्ति। तत्र कस्यचित्तरोरधः स्थित्वा ते शर्वरीशेषं गमयितुं विश्राम्यन्ति। तत्रैव कृष्णो विमृश्य भीमार्जुनयोरात्मनश्च कृतकवेशं निश्चिनोति—भीमो राजशेखराचार्यस्य स्वरूपं गृह्णातु, अहमर्जुनश्च धवलचक्रधरस्नातकयोः स्वरूपमङ्गीकुर्वः इति।

ततः पश्चात् कृष्णार्जुनौ सविध एव गौतमाश्रमसंस्थितं शिवं द्रष्टुं गच्छतः। एकलो भीमस्तत्रैव तिष्ठति। क्षणानन्तरं कस्यचनमर्तुकामस्य साधकस्य शिवम्प्रति उपालम्भं, तज्जननीपत्नीभ्याञ्च तन्मरणनिषेधञ्च श्रुत्वा भीमो दयापरिप्लुतमानसो भूत्वा तेषां समक्षं व्रजति। 'भीमोऽहम् ( शिवोऽहं ) वरं वृणीष्व' इति निगदति भीमे वीरवर्मा नाम साधकः 'पिता ज्येष्ठो भ्राता च मे जरासन्धकारातो विमुच्येताम्' इति वरं वृणुते। 'सर्वेषामेव राज्ञामद्य मोक्षो भविता। नेह स्थेयम् भवद्भि'रिति भीमो वरं ददाति। तच्छ्रवणानन्तरं झटित्येव वीरवर्मादयस्ततो निर्गच्छन्ति।

कृष्णार्जुनौ गौतमाश्रमात् प्रतिनिवर्तेते। गिरिव्रजदुर्गोदश्मवृष्टिं विलोक्य कृष्णो भीमं घटोत्कचस्य स्मरणाय प्रेरयति। स्मृत एव घटोत्कचः समातृकः समागत्य अश्मवृष्टिकरीश्वरीं पर्वतान्तरं प्रापयति।

ततश्चैत्यशिखरं निपात्य त्रयोऽपि तं नगरं विशन्ति। तत्र भीमार्जुनौ वणिग्वीथ्यां सुगन्धद्रव्याण्याहरतः। धावत धावत इत्याक्रोशत्सु वणिग्जनेषु 'सर्वं वसु ब्राह्मणस्य' इति स्मृतिवचनं कृष्णो स्मारयति।

ततो निगडितानां राज्ञां बलिदानाय समुपकल्पितां यज्ञशालामव-लोकयन्त स्ते जरासन्धस्य पुरतो भवन्ति। ब्रह्मण्यो जरासन्धः तान् प्रणमति। सत्क्रियां विधित्सुं मगधराजम् आचार्यो राजशेखरो निषेधति- "न त्वादृशेभ्यः सपर्यां गृह्णीमो वयम्" इति। ततः "अद्वारेण प्रवेश" मधिकृत्य तेषां विवादो सञ्जायते।

आचार्योराजशेखर आत्मनो भीमार्जुनयोश्च वास्तविकं परिचयं ददाति। ततो भीमजरासन्धयोर्मल्लशालायां धर्मयुद्धं भवति। द्वावपि तुमुलं युद्धं कुरुतः। भीमो जरासन्धं पृथिव्यां पोथयित्वा तस्य सन्धिं विसन्दधाति। ततः कारां गत्वा स्वयमेव नृपतीन् विमुञ्चति।

जरासन्धकुमारः सहदेवः स्वीयां कनीयसीं स्वसारं भीमाय विवाह-विधिना प्रदातुं प्रस्तौति। स्वसारं गृहीत्वा इन्द्रप्रस्थम् आगच्छेरिति सन्दिश्य कृष्णो भीमार्जुनाभ्यां सह गिरिव्रजाद् इन्द्रप्रस्थं प्रतिनि-वर्तते।

अयं व्यायोगो 'गायकवाडस्य-ओरिएण्टल-सीरीजस्य' १५१ संख्यायां प्राप्यते। ( Gaekwad Oriental Series No. 151 )

## नरकासुरविजयव्यायोगः

नरकासुरविजयव्यायोगस्य रचयिता धर्मसूरिरस्ति। कृष्णानदी-तटस्थित्ते 'पेदपुल्लिनरु'-नाम्नि ग्रामे षड्दर्शनविदः पर्वतेश्वरस्य गृहे श्रीवारणनाम्नि विख्याते वंशे सोऽजायत। धर्मसूरिः तर्कविद्यायां साहित्ये च निष्णात आसीत्।

नरकासुरविजयव्यायोगस्य कथानकं महाभारत-भागवत उपजीवति। कविना रूपकेऽस्मिन् चारुताधानाय बहूनि परिवर्तनानि कृतानि।

## कथावस्तु

श्रीकृष्णः सत्यभामया साकं साङ्ग्रामिकसज्जायां दारुकोपहृतं साङ्ग्रामिकरथमारूढः स्वसारथिं प्राग्ज्योतिषपुरं प्रति रथं नेतुमादिशति। मार्गे सारथिना सह संवदन् कृष्णः प्राग्ज्योतिषपुरं प्रति गमनस्य कारणं विवृणोति। दारुकोऽपि निवेदयति—मयापि नारदमुखात् प्राग्ज्योतिषपुराधीशस्य दुराचारवृत्तान्तः श्रुत इति।

कृष्णदारुकयोर्नरकासुरगतं वार्तालापं श्रुत्वा सत्यभामा पृच्छति—अपि देवैः तस्य प्रतीकारो न कृतः? दारुको निवेदयति—इन्द्रादयो देवाः तस्माद् बिभ्यति। स वरदानबलाद् दैवैरवध्य आस्ते। पर्वतानां पक्षच्छेदको देवराजः सम्प्रति निर्लज्जो भूत्वा तेषामेव शरणङ्गतोऽस्ति।

सत्यभामा श्रुत्वैतत् पुनः पृच्छति—कस्य महानुभावस्यायं पुत्र इति। दारुकः ससङ्कोचं कृष्णं विलोक्य वास्तविकतामुद्घाटयति—अस्यैव महानुभावस्य पुत्रोऽयम्। वाराहावतारे पृथिव्याः संसर्गेणायं समुत्पन्नः। सन्ध्यासमये जायमानत्वादसुरतां गतः इति। एवमेव परस्परं संवदन्तस्ते प्राग्ज्योतिषपुर-परिसरं प्राप्नुवन्ति।

नरकासुरश्चारमुखात् कृष्णस्याभियानं श्रुत्वा नगराद्बहिः ससेनः सन्नद्धः तिष्ठति। कृष्णः नरकासुरस्य सेनायाः प्रथमां पङ्क्तिं छित्त्वा नरकमेव प्रहर्तुमिच्छति। समवेता राक्षसाः त्रिशूलपरिघबाणादिभिः शस्त्रास्त्रैः कृष्णं प्रहरन्ति। कृष्णस्य क्षिप्रहस्ततया दिव्यास्त्राणां प्रयोगेण च क्षणादेव समरभूमिरसुराणां कबन्धैः सङ्कुला सञ्जाता।

ततश्च मुरनामानं नरकासुरस्य सेनानायकं निहत्य कृष्णो नरकासुरमाक्रामति। नरकासुरः आग्नेयास्त्रमाविष्करोति। कृष्णो वारुणास्त्रेण तच्छमयति। नरको दुर्निवारेण शूलेन कृष्णस्य हृदयं भिनत्ति। कृष्णः स्वकीयैः तिग्मैर्बाणैः तस्य रथमश्वान् सूतं केतुं धनुश्च छित्त्वा सुदर्शनेन नरकशिरो निकृन्तति।

निहते सति नरकासुरे तज्जननी वसुन्धरा नरकतनयं भगदत्तं तस्य भद्रासने स्थापयितुं प्रार्थयते। नरकासुरहृते देवमातुः कुण्डले कृष्णाय समर्पयति। सन्ध्यायां कृष्णो दारुकं द्वारकाम्प्रति रथं नेतुमादिशति

अयं व्यायोगो हैदराबादनगरे 'उस्मानिया-विश्वविद्यालयस्थ-संस्कृत-परिषदा' प्रकाशितः ।

## वीरराघवव्यायोगः

### कविपरिचयः

वीरराघवव्यायोगस्य रचयिता प्रधानवेङ्कप्पोऽस्ति । वेङ्कप्पो वागम्बिका-हम्पार्ययोः तनूज आसीत् । कविरयं विक्रान्तो योद्धा सफल-राजनीतिज्ञश्चाप्यासीत् । वेङ्कप्पेन महीशूर-नृपतेः कृष्णरावद्वितीयस्य ( १७३४–६६ ई० ) कृपातो नञ्जराजस्याध्यक्षतायां प्रधानपदमवाप्तम् । ततश्च सेनां विहाय सर्वेषां विभागानां प्रधाननिरीक्षकपदमनेन सम्प्राप्तम् ।

### कथानकम्

वीरराघवव्यायोगे मिश्रविष्कम्भकं सम्प्रयुक्तमस्ति । जटायुः कुतश्चित् संवदतो रक्षसोर्वार्तालापं श्रुत्वा झटिति राघवाश्रममागत्य विराधवधात् संक्रुद्धानां खरादीनां रक्षसां सद्यो भविष्यमाणमाक्रमणं लक्ष्मणाय निवेदयति । लक्ष्मणो जटातः राक्षसानां प्रवृत्तिमुपलभ्य पुनरागमनाय कथयित्वा तं वृत्तान्तं रामाय निवेदयति ।

मिश्रविष्कम्भकानन्तरं सलक्ष्मणो रामः युद्धाय सन्नद्धो भवति । जटायुः पुनरागच्छति । आगत्य च खरादीनामासन्नमागमनं निवेदयति । रामो लक्ष्मणं सीतारक्षणाय आज्ञाप्यैकल एव तपोवनस्योपरोधो माभूदिति आश्रमान्निर्गत्य राक्षससेनाभिमुखं प्रतिष्ठते ।

स्वर्गादिन्द्रसारथिर्मातलिः पाकशासनस्य साङ्ग्रामिकरथं रामस्यो-पयोगाय नयति । रामस्तमारुह्य राक्षसैः प्रहृतस्तान् प्रहरति । क्षणादेव समरप्राङ्गणं कबन्धसङ्कुलम् भवति ।

रामो दिव्यास्त्रैः त्रिशिरसं यमराजनिकेतनातिथिं विधाय दूषणमपि तत्रैव प्रेषयति । मानवास्त्रेण मारीचं पारेसमरं प्रक्षिपति ।

खरो रामस्य पराक्रमेणानुजयो र्वधं विलोक्य खरतरो भूत्वा तं युद्धायाह्वयति । रामोऽपि तं भर्त्सयति—अये खर ! अद्य त्वया दण्डकारण्यवासिनां मुनीनां वधस्य फलं प्राप्तव्यमेव । त्वामप्यहं तव

७ सा०

भ्रात्रोः सविधे शीघ्रं नयामीति कथयित्वा रामो दिव्यास्त्राण्यनुसन्दधाति परन्तु चतुराननवरदानात् शस्त्रास्त्रैरवध्यः खरः प्राणान्न जहाति। तत्कौतुकं दृष्ट्वा रामः कौशिकमुनिप्रदत्ताभ्याम् बलातिबलाभिधानाभ्यां विद्याभ्यामेकामिषीकामभिमन्त्र्य खरम् प्रति निक्षिपति। इषीकानिक्षेपणानन्तरमेव खरस्य कलेवरं शिरोविहीनं सञ्जायते।

विजयश्रियं प्राप्य राम आश्रमपदं प्रपद्यते। मातलिर्हर्षजननेन वृत्तान्तेन साकं दिवं प्रतिष्ठते।

## कृष्णविजयव्यायोगः

कृष्णविजयव्यायोगस्य प्रणेता चन्द्रशेखरोऽस्ति। कविरसौ मैसूरनृपतेः कृष्णरावद्वितीयस्य ( १७३४–६६ ई० ) सेनापतिमन्त्रिपदभाजो देवराजस्य प्राप्ताश्रय आसीत्। चन्द्रशेखरः स्वपाण्डित्यप्रकर्षात् "पृथ्वीबृहस्पतिः", "सकलकलावल्लभः", "कविचूडारत्नम्" इत्युपाधित्रयेण समलङ्कृतो बभूव।

### कथानकम्

अग्निद्योतनो नाम रुक्मिणीप्रेषितो ब्राह्मणः कृष्णस्य पुरतः कृष्णैकमानसाया रुक्मिण्या दशां वर्णयित्वा तस्याः सन्देशं कृष्णाय ददाति। कृष्णोऽपि तच्छ्रवणसमनन्तरमेव दारुकसमानीतं साङ्ग्रामिकस्यन्दनं समारुह्य कुण्डिनपुरं प्रति प्रतिष्ठते।

बलरामोऽपि कृष्णस्यैकाकिनः प्रस्थानं श्रुत्वा विशालया सेनया सह द्रुतमेव कृष्णमनुगच्छति। कृष्णः प्रपूजितशिवां रुक्मिणीं भटसहस्रैः सुगुप्तां मृगराट् स्वभागमिव हरति।

साल्व-जरासन्ध-पौण्ड्रकादिभिः सह शिशुपालः कृष्णमाक्रामति। शिशुपालादिभिः प्रयुक्तानि दिव्यास्त्राणि तत्तन्निरोधकास्त्रैः प्रशमय्य कृष्णः तान् सर्वान् समवेतान् नृपतीन् प्रध्वंसयति।

रुक्मिण्या अग्रजः रुक्मी शिशुपालादीनां पराजयमसहमानः कृष्णं कदर्थयन् तमाक्रामति। परन्तु कृष्णः क्षणादेव तं विगतशस्त्रास्त्ररथसारथिवाहं विधाय तिग्मखड्गं गृहीत्वा यावत्तं जिघांसति तावदेव रुक्मिणी भ्रातृप्राणपरिरक्षणं कृष्णं याचते। कृष्णो रुक्मिणीवचनात् रुक्मिणं न

हन्ति, किन्तु तं ध्वजदण्डे निबध्य तस्य श्मश्रुकेशान् स्वकृपाणस्य तिग्मधारया वपति ।

बलरामः कृष्णं तादृशकर्मणे विनिन्द्य रुक्मिणं बहुधा समाश्वास्य मोचयति । ततो रुक्मिण्या जनकोऽग्निद्योतनेन ब्राह्मणेन सह रणभूमिमागत्य विजयिनं श्रीकृष्णमभिनन्दति । विश्वनेतारं कृष्णं जामातृरूपेणोपलभ्य भीष्मक आत्मानं सुकृतैकभाजनं मनुते ।

## त्रिपुरविजयव्यायोगः

त्रिपुरविजयव्यायोगस्य रचयितुः पद्मनाभस्य जन्म गोदावरीं निकषा कोटिपल्लीग्रामे भारद्वाजगोत्रस्य कामशास्त्रिणो गृहे बभूव। कवेर्जन्मकालस्योल्लेखो नोपलभ्यते । कृष्णमाचार्यः 'हिस्ट्री आफ क्लासिकल संस्कृत-लिटरेचर' नामके ग्रन्थे पद्मनाभं १६ ई० शतकेऽभवदिति सूचयति । पद्मनाभस्य कृतिद्वयमुपलभ्यते—

( १ ) त्रिपुर-विजयव्यायोगः । ( २ ) लीलादर्पणभाणः ।

### कथानकम्

त्रिपुरविजयव्यायोगे ( असमग्रे ) गद्येन साकं ५५ श्लोका वर्तन्ते । तत्रापि २७ श्लोकाः प्रस्तावनायां सन्ति । कथानकस्यास्योपजीव्यं शिवपुराणं विद्यते ।

त्रिपुरासुरप्रपीडितैर्देवैः प्रर्थितः भगवान् चन्द्रशेखरः त्रयाणाम् पुराणां विनाशाय समुद्यतो भवति । ब्रह्मा शङ्करस्यारोहणाय सर्वदेवमयं स्यन्दनं निवेदयति । छन्दांस्येव तस्य रथस्याश्वा आसन् । पृथ्वी रथस्य कलेवरमासीत् । सूर्याचन्द्रमसौ तस्य रथस्य चक्रेऽभूताम् । ब्रह्मा च तस्य सारथिरभूत् । एवंविधस्यन्दनं समारुह्य शिवो नोदयाश्वानिति ब्रह्माणमादिशति । ब्रह्मा रथं वाहयन् विज्ञापयति यदिमे त्रिपुरासुराणां दुराचारेण इन्द्र-वरुण-यम-कुबेर-निशाकर-दिवाकरादयो देवा, विपत्तौ निमग्नाः सन्ति । अहमपि तैः शोचनीयामवस्थां गमितोऽस्मि ।

नारदो ब्रह्मणो दुरवस्थां वर्णयति—बलि-कालेय-वैक्रान्त-मालि-सुमालि-माल्यवदभ्रचित्तिपूर्वहेति-प्रहेति-वज्रदंष्ट्रादयः त्रिदेवम् इन्द्रादीन्

देवांश्चोपहसन्ति । मयसृष्टौ ब्रह्मा पात्रेषु चित्रं लिखति । विष्णू रूपसज्जायां संलग्नः । शिवो द्वारपालो नियुक्तः ।

शिवः सर्वान् सुरानाश्वास्य स्वकीये प्रचण्डकोदण्डे वासुकिं प्रत्यञ्चीकृत्य विकरालं शरमनुसन्दधाति । शिवभ्रूकुटिसम्भूताः करालाः कृत्याः त्रिपुरं गत्वा तत्रत्यानि सुधाकुण्डानि निपीय शोषयन्ति ।

त्रिपुरवासिनोऽसुराः शिवं प्रति त्रिशूलं वर्षयन्ति । शिवस्तानि त्रिशूलानि निगिलति । शिवस्याट्टहासोद्भवाभिरग्निज्वालाभिरसुरा दन्दह्यन्ते । कतिपये दैत्य-दानवाः समुद्र उत्प्लुत्य जले निमज्जन्ति ।

## गजेन्द्रव्यायोगः

गजेन्द्रव्यायोगस्य रचयिता मुडुम्बनरसिंहाचार्योऽस्ति । अयं रङ्गम्बा-वीरराघवयोस्तनय आसीत् । असौ विजयनगरस्थिते सिंहाचले निवसति स्म । नरसिंहाचार्येण स्वाश्रयदातुर्विजयनगराधीशस्यानन्दगजपतेः ( १८८१–१८९७ ई० ) उल्लेखः स्वकृतिषु कृतः । अतो नरसिंहाचार्यस्य काल ऊनविंशशतकस्यान्तिमे चरणे सुनिश्चितः। नरसिंहो रामानुजसम्प्रदायस्य ७२ तम आचार्य आस्ते । तस्य दश रचना उपलभ्यन्ते ।

### कथानकम्

गजेन्द्रव्यायोगः श्रीमद्भागवतमुपजीवति । मूलकथानकं कविना यथेच्छं परिवर्तयति ।

वैकुण्ठनाथो विष्णुर्लक्ष्म्या सह रङ्गमञ्चं प्रविश्य कुतश्चन कस्यचित् स्वरं श्रुत्वा गरुडं पृच्छति कस्यायं स्वर इति । गरुडो विवृणोति—क्षीरसागरस्य सविधे त्रिकूटपर्वतस्योपत्यकायां केनापि नक्रेण कश्चन गजो गृहीतः । स च गजो नक्रान्मोक्षाय भवन्तं स्तौति ।

विष्णुश्चक्रेण नक्रं निहन्ति, तदानीमेव नारदसनकादय आगच्छन्ति । नारदः शङ्कराभरणं रागमाश्रित्य गायति नृत्यति च । पश्चाद्देवर्षिर्गजं वास्तविकं परिचययति—गजोऽयम् इन्द्रद्युम्नो नाम नृप आसीत् । विष्णुपूजायां त्रुटिकरणादीदृशीं योनिं प्राप्त इति । तस्मिन्नेव काले गजोऽप्यागच्छति पन्तुपरालीरागेण विष्णुं स्तौति च ।

विष्णुः 'अकुतोभयस्त्वं विचर' इति तस्मै वरं ददाति। देवाः पुष्पाणि वर्षन्ति। परन्तु गजो हरिं मोक्षं याचते। यदा विष्णुः किमपि न ब्रवीति तदा स लक्ष्मीं स्तौति। लक्ष्मीः प्रसन्ना भूत्वा स्वनासिकया गजस्य जीवमाकर्षति। गजेन्द्रश्च प्रथमं तेजो भवति। ततश्चतुर्भुजरूप-धारी शिशुः सञ्जायते। पश्चाल्लक्ष्म्याः स्तनपायी भूत्वा विष्णोः पार्षदो भवति।

नक्रो हूहूनामा गन्धर्व आसीत्। स देवलशापान्नक्रतां गतः। विष्णोश्चक्रप्रहारेण नक्रकलेवरं परित्यज्य, गन्धर्वो भूत्वा, मोहनराग-माश्रित्य विष्णुं स्तौति।

करिण्यः शोकातुरा मा भवेयुरिति भगवान् मृतगजशरीरेऽपरं जीवं निक्षिपति।

व्यायोगोऽयं विजयनगरपाठशालोपाध्यायेन श्रीमद्वुलुस-सुब्रह्मण्य-शास्त्रिणो वैशाखपट्टने श्रीवेणुभूपालमुद्राक्षरशालायां मुद्रापितः। अयं व्यायोगो मूलतः तेलुगुभाषया विरचितः।

## विजयविक्रमम्

विजयविक्रमस्य प्रणेता आर्यसूर्योऽस्ति। कौण्डिन्यगोत्रस्य कन्दर्प-सीतारामशास्त्रिणोऽयमात्मज आसीत्।

### कथानकम्

विजयविक्रमव्यायोगस्य कथावस्तु महाभारतस्य द्रोणपर्वणः संगृहीतम्। महाभारत-युद्धेऽर्जुनः कृष्णं विज्ञापयति—अहं महारथिभी रक्षितं जयद्रथं हन्तुं सन्नद्धोऽस्मि। भवान् मम जैत्रं रथं सज्जयतु। कृष्णः प्रागेव सुसज्जितं रथं दर्शयति, यस्य केतौ हनुमता क्ष्वेलया भास्कर-मनसि पुनर्ग्रास-भीतिं जनयता संस्थीयते।

कृष्णोऽश्वान् प्रणोदयति। अर्जुनो निर्दिशति—तेन मार्गेण रथो नीयतां यत्रास्मत्पितामहो वीरोचितं शयनमध्यास्ते। कृष्णस्तत्रैव रथं नयति। भीष्ममहिमानं वर्णयित्वा कृष्णार्जुनौ तं प्रणमतः।

ततः कृष्णो जयद्रथं प्रति रथं वाहयति। एकतो भगदत्तगजेन

सह पराक्रम्य युध्यमानं भीमं प्रति कृष्णोऽर्जुनं निध्यापयति। अर्जुनः प्रहर्तुकामस्य भगदत्तगजस्य शुण्डादण्डं बाणेन कृन्तति।

ततो जयद्रथगुप्तये प्राणपणेन युध्यमानान् सर्वान् महारथिनः स्वविक्रमेण विस्मापयन्नर्जुनो जयद्रथं निहत्य स्वप्रतिज्ञां सन्तरति।

## वेष्टनव्यायोगः

वेष्टनव्यायोगस्य प्रणेता विश्रान्त आई० ए० एस् डा० वीरेन्द्रकुमार-भट्टाचार्यो वर्तते। असौ कलिकातामधिवसति। भट्टाचार्यमहाभागः संस्कृतसाहित्ये आधुनिककथावस्तुसंवलितानां रूपकाणां प्रायोऽभावं दृष्ट्वा आधुनिकजीवनपद्धतिसम्बद्धघटनाचक्रमनुसृत्य कतिपयरूपकाणि प्रणिनाय। तेषां प्रकाशनम् '१६८।१ राजादीनेन्द्रस्ट्रीट कलकत्ता-४ संस्थितया' संस्कृतपरिषदा भवत्। भट्टाचार्येण संस्कृतभाषया बहूनि उच्चकोटिकानि पुस्तकानि विरचितानि।

### कथानकम्

वेष्टनव्यायोगस्य कथावस्तु वर्तमानशतकस्य तृतीयचरणभवं घटना-चक्रमुपजीवति। व्यायोगोऽयमैतिहासिकं रूपकं विद्यते।

पञ्च श्रमिकाः शिल्पाध्यक्षं श्रमाध्यक्षं च परिवेष्टन्ते। प्रस्तुते व्यायोगे प्रवेशकस्य प्रयोगो विद्यते। प्रवेशके सञ्जयो नाम श्रमिको घोषयति—श्रमिकाणां शुभदो धनिकानां विनाशकश्च समयः समायातः। इमे क्रूरा धनिका अस्मान् चिराय शोषयामासुः। सम्प्रति वयमिमान् धनिकान् मशकानिव नाशयामः।

अभिजिन्नामा श्रमिको घोषयति—वेष्टनमस्माकं दुर्बलानां नूतनममोघब्रह्मास्त्रम्। जयद्रथो नाम श्रमिको विचारधारामिमां न्यक्करोति।

अरिजित्सत्राजिदभिजिन्नामानः श्रमिका जयद्रथं विरुन्धन्ति। सञ्जयो जयद्रथं भर्त्सयति—त्वं श्रमिको भूत्वा धनिकानां क्रीतदास इव वदसि। वस्तुतः श्रमिकस्य श्रमिक एव शत्रुरस्ति।

जयद्रथो ब्रूते नाहं गृहशत्रुर्विभीषणः। अहं स्वमतात् सङ्घमतं

श्रेष्ठतरं मन्ये। एवं कथयित्वा सोऽपि वेष्टनायुधस्य गरिम्णो गीतं गायति।

प्रवेशकानन्तरं शिल्पाध्यक्षः स्वकक्षस्थः प्रविशति। शिल्पाध्यक्ष एकोक्ति श्रावयति—देशेऽस्मिन् किमिदं सञ्जातम्? अग्रतः पृष्ठतः दक्षिणतो वामतः सर्वत्रैव वेष्टनं वेष्टनं वेष्टनमेव। शिल्पसंस्थाभ्यः शान्तिस्तु चिराय क्वचिद् गता। पुरा शिल्पस्वामिभिः समुचितं वेतनं श्रमिकेभ्यो न दत्तम्। परन्तु सम्प्रति तादृशी स्थितिर्न विद्यते।

तदा श्रमाध्यक्षः शिल्पाध्यक्षं पृच्छति—अद्य भवान् चिन्तानिमग्न इव परिलक्ष्यते? शिल्पाध्यक्षः स्वचिन्तां प्रकटयति—इदानीं श्रमिकाः स्वकरणीये न तथोत्सुका यथा राजनीतिकसमालोचनासु।

श्रमाध्यक्षो ब्रूते—निष्करुणा नियतिः केन बाध्यते? यदि प्रथमत एव धनाधिपतयः श्रमिकेभ्यः समुचितं वेतनम् अदास्यन् तर्हि एतादृशः समयो नागमिष्यत्।

शिल्पाध्यक्षो ब्रवीति—सम्प्रति बहवः शिक्षितयुवानो वृत्तिविहीना वर्तन्ते। परन्तु ये तावद् वृत्तिमन्तः सन्ति तेऽधिकं याचन्ते। स्ववेतन-वृद्धये कार्यबाधामाचरन्ति। धनिका नवनवानां शिल्पसंस्थानानां स्थापनां न कुर्वन्ति। वृत्तिहीनाश्च समाजविरोधिनीं प्रवृत्तिमाश्रयन्ते। श्रमिकाणां नेतारोऽस्य परिणामं न चिन्तयन्ति।

एवं संवदतोः शिल्पाध्यक्ष-श्रमाध्यक्षयोः 'प्रचण्डो विप्लवो जयति', 'सङ्घशक्तेर्धनुर्जयति' इति घोषं कुर्वन्तः श्रमिकाः प्रविशन्ति।

शिल्पाध्यक्षस्तान्निषेधति—मैवं विधीयतामिति। सहकर्मिणः! प्रथमं भवन्तः तिष्ठन्तु। अभिजिद् वक्ति—न वयमत्र स्थातुं समागताः। इदमन्तिमं पत्रम् ( Ultimatum ) गृह्यताम्। शिल्पाध्यक्षो ब्रवीति—कथमन्तिमम्? अहमेतस्य पत्रस्योपरि शिल्पस्वामिभिः समं विचारं करिष्यामि। भवद्भिः सप्ताहान्तरे पुनरभ्यागन्तव्यम्।

सञ्जयः क्रूरहासं हसित्वा ब्रूते—विचारस्य समयो गतः। अयं प्रतिश्रुतिपूरणस्य समयः। भवन्तौ प्रतिश्रुतिमपूरयित्वा गन्तुमितो न पारयथः। शिल्पाध्यक्षः सानुनयं वक्ति—न वयं निर्णये स्वाधीना इति

भवद्भिर्विचार्यताम्। सञ्जयो ब्रवीति—भवता पत्रं लिख्यताम्। अहं तदादाय शिल्पस्वामिनं यास्यामि। अन्यथा भवतोर्मोक्षो नास्ति।

अस्मिन्नेवान्तराले वेष्टनायुधस्य प्रवर्तकः कल्किर्नाम नेता समागच्छति। सर्वे तं तस्य गुणगानपुरस्सरं प्रणमन्ति। शिल्पाध्यक्षो ब्रूते—वयं भवतामेतेन वेष्टनायुधेन धन्याः सञ्जाताः। श्रमिकाणां विजयो मामप्यानन्दयति। कल्किर्वक्ति—भोः श्रेष्ठ शिल्पाधिकारिन्! किं ते प्रियमाचरामि? शिल्पाध्यक्षो वदति—शिल्पोद्योगः श्रमिकाणां हितं साधयतु। श्रमिकाः स्वहितान्न विरमन्तु। प्रत्येकस्यां दिशि कल्केर्यशो विवर्धेत। भवताञ्च वेष्टनायुधं सम्पत्ति विजयञ्च ददातु।

## कैलासनाथविजयव्यायोगः

कैलासनाथविजयव्यायोगस्य रचयिता श्रीजीवन्यायतीर्थो विद्यते। श्रीजीवः महाकवेः पञ्चाननतर्करत्नस्य ज्येष्ठः पुत्र आस्ते। अस्य जन्म वङ्गप्रदेशान्तर्गत 'चौबीसपरगना'—जनपदस्य भाटपाड़ाभिधाने ग्रामे २६ जनवरी १८९४ ईशवीयाब्दे बभूव। अधुना ऋषिकल्पोऽयं नित्यं साहित्यसर्जने निरतः।

श्रीजीवन्यायतीर्थेन प्राच्यप्रतीच्यविद्ययोः सम्यगध्ययनं कृतम्। १९२१–१९५८ ई० संवत्सरान्तराले कलकत्ताविश्वविद्यालये प्राध्यापकपदमलञ्चकार। सम्प्रति श्रीजीवो भाटपाड़ायाः संस्कृतमहाविद्यालये प्रधानाचार्यो विद्यते।

श्रीजीवन्यायतीर्थो बङ्गीयसंस्कृतशिक्षापरिषदः सम्मानितः सदस्य आसीत्। 'प्रणवपारिजात' - 'अर्थशास्त्र' - पत्रिकयोः सम्पादनं तेन कृतम्।

अस्य पञ्चाशत्प्रायाः कृतयः समुल्लसन्ति।

### कथानकम्

रावणः पुष्पकविमानमपहर्तुं कुबेरमाक्रामति। तदानीमेव स मदात् कैलासमुत्थापयति। दोलायमानं पर्वतं दृष्ट्वा शिवः पादाङ्गुष्ठेन कैलासं स्थिरीकरोति। रावणः पर्वततले निमग्नो रोदिति। दयार्द्रा भवानी तदुद्धाराय शिवं प्रेरयति। ततः शिवो रावणं कैलासतलान्निष्क्रामयति।

रावणो गलितगर्वो भूत्वा शिवं कुबेरञ्च क्षमां याचते। भ्रातृप्रेमवशात् कुबेरो रावणाय स्वविमानं पुष्पकमर्पयति ।

## स्यमन्तकोद्धारव्यायोगः

स्यमन्तकोद्धारव्यायोगस्य रचयितुः कालिपदतर्काचार्यस्य गणना विंशशताब्द्याः संस्कृतस्य विशिष्टविद्वत्सु क्रियते। तर्काचार्यस्य जन्म पूर्ववङ्गस्य कोटालिपाड़ानाम्नि नगरे १८६५ ईशवीयवत्सरे बभूव। न्यायसांख्यशास्त्रयोः काव्यस्य चोच्चशिक्षां प्राप्य तर्काचार्यः कलिकातायाः संस्कृतसाहित्यपरिषदा सञ्चालिते संस्कृतमहाविद्यालये प्रधानाचार्यपदं समलङ्कृतवान्।

१९४१ ई० वर्षे भारतशासनेनास्मै महा'महोपाध्याय' इत्युपाधिः प्रदत्तः। भारतधर्ममण्डलेन 'विद्यावारिधिः' इत्युपाधिनायं समलङ्कृतः। १९६१ ई० वत्सरे भारतस्य राष्ट्रपतिरस्मै पञ्चशतरूप्यकाणां वार्षिकवृत्तिं मानपत्रञ्च प्रदत्तवान्। पश्चात् कालिपदतर्काचार्येण पश्चिमवङ्गस्य हुगलीक्षेत्रान्तर्गतभद्रकालीनगर उषित्वा ग्रन्थान् विरचितवान्। अस्य शताधिकाः कृतयो विद्यन्ते।

### कथानकम्

कृष्णो लोकपरिवादादात्मानं रक्षितुं स्यमन्तकमणेरन्वेषणाय ऋक्षपर्वतम् प्रतिष्ठते। वने सत्राजिदनुजं प्रसेनं तदश्वं च मृतमवलोक्य कृष्णो मणिप्राप्तिं सम्भावयन्नग्रेसरो भवति। कञ्चिदध्वानमतिक्रम्य कृष्णेन तद्वनस्वामिनः ऋक्षराजस्य जाम्बवतो गुहाद्वारं दृष्टम्। तत्र जाम्बवतः सुकुमारको नाम बालकः स्यमन्तकेन मणिना संक्रीडन् तादृशमेवापरं मणिं स्वसेवकं याचमानः कृष्णेनावलोकितः। कृष्णः सुकुमारकाय स्वकीयं कौस्तुभं मणिं प्रयच्छति।

अथ च जाम्बवति समागते कृष्णः तं स्यमन्तकं याचते। स तु न प्रयच्छति अत उभयोर्मध्ये वाग्युद्धं प्रारभते। वार्ताप्रसङ्गेन जाम्बवान् कृष्णं तत्त्वतो ज्ञात्वा तं क्षमां याचते। ततश्च कृष्णस्यानुज्ञां लब्ध्वा स्वकीयां दुहितरं तस्मै विवाहविधिना प्रयच्छति। बालकः सुकुमारकोऽपि ववाहोपलक्षे तन्मणिद्वयं कृष्णाय समुपायनीकरोति।

# विक्रमाश्वत्थामीयम्

विक्रमाश्वत्थामीयव्यायोगस्य रचयिता नारायणरायश्चिलुकुरी विद्यते। मद्रासराज्यस्यानन्तपुरनाम्निनगरेऽसौ संस्कृतान्ध्रकर्णाटकभाषाणामध्यापक आसीत्। प्रस्तुतरूपकस्य प्रस्तावनानुसारं विश्वकलापरिषदमुमनेकैरुपाधिभिरलङ्कृतवती। विक्रमाश्वत्थामीयस्य प्रकाशनं १९३८ ईशवीये वर्षेऽनन्तपुरात् सञ्जातम्।

## कथानकम्

विक्रमाश्वत्थामीयेऽश्वत्थामा स्वमित्रं दुर्योधनं चिन्तयन् कृपाचार्यकृतवर्मभ्यामनुगतः तमन्विष्यति। मार्गे गोपा निवेदयामासुर्यदेको भग्नोरुर्मनुष्यः, इतः कियद्दूरे, मूर्छितप्रायो वर्तते। त्रयोऽपि तत्रैव व्रजन्ति। कमपि परिचेतुमशक्तो दुर्योधनो जलं याचते। अश्वत्थामा जलं पाययति। चेतनामुपलभ्य दुर्योधनः सर्वान् परिचिनोति। अश्वत्थाम्ना पृष्टः स्वस्याः दुरवस्थायाः करुणकथां कथयति—अन्यायेन भीमपशुना निपातितोऽस्मि इति।

अश्वत्थामा दुर्योधनमाश्वास्य कथयति—अहं ते शत्रून् सूर्योदयात् प्राङ् निहत्य संवादमिमं ते श्रावयामि। तावत्प्राणान् धरस्वेति। श्रुत्वैतद् दुर्योधनोऽश्वत्थामानं चरमसेनापतिपदेऽभिषिञ्चति। ततश्च कृपकृतवर्मभ्यां सह पाण्डवशिविरं प्रतिष्ठते।

रात्रौ यदाश्वत्थामा न्यग्रोधपादपस्याधस्तात् तिष्ठन् सेनासमेतानां पाण्डवानां विनाशाय योजनां स्थिरयति, तदैव कश्चनोलूकस्तद्वृक्षनिलये प्रसुप्तान् सर्वान् पक्षिणो विनाशयामास। उलूकस्य तत्तादृशं कर्म दृष्ट्वाश्वत्थामापि तादृशीं योजनां सुस्थिरीकरोति। प्रसुप्तौ कृप-कृतवर्माणावुत्थाप्य तौ स्वाभिनवां योजनां ब्रूते। नैष आर्यवीराणां पन्था इति तौ निषेधतः। अश्वत्थामा स्वनिर्बन्धान्न विरमति। सेनापतिरहमिति कृत्वा तावनुगन्तुमादिशति।

अश्वत्थामा कृप-कृतवर्माणौ शिविरद्वारे नियुज्यादिशति न कश्चिदितो जीवन्निर्गच्छेदिति। अथ च स्वयं शिविरान्तः प्रविशति। प्रविशन्नेव स भयङ्कराकृतिना शिवेन प्रतिनिरुध्यते। अश्वत्थामा तं भूतविशेषं मत्वा

तं वाग्भिरायुधैश्च भीषयति। परन्तु स घोरदर्शनोऽश्वत्थाम्नः समप्राण्यायुधानि निगिलति। तदा तं शिवमवगत्य स तद्ध्यानमग्नो भवति। साधनातः प्रसन्नः शिव तस्मा अमोघं खड्गं प्रददाति। स च खड्गमादायादौ धृष्टद्युम्नस्य शिबिरं विशति। तं पशुमारं मारयित्वा अन्यानपि सर्वानुच्छिनत्ति। तत एकं शिरो वामहस्तेन धारयन्नपरेण च घोरं खड्गमादधानः शिबिरान्निर्गच्छति। कृप-कृतवर्मभ्यामनुगतो दुर्योधनसमीपं गत्वा तस्मै समेषां संहारमावेद्य भीमस्य शिरः समुपायनीकरोति। दुर्योधनो हर्षमनुभवन् प्राणान् जहाति।

ततः कृपाचार्योऽश्वत्थाम्नो भ्रान्तिं निवारयति—नेदं शिरो भीमस्य भवेत्। अनेन कृत्रिमशिरसा भाव्यम्। कथमिव कृष्णसुरक्षिताः पाण्डवाः त्वादृशस्य बालस्य हस्ते निपतेयुरिति। तद् विदित्वाश्वत्थामा कृप-कृतवर्मभ्यां वारितोऽपि महीमपाण्डवां कर्तुं ब्रह्मशिरसं नामास्त्रमनुसन्दधाति।

## गुरुनिष्कृतिव्यायोगः

गुरुनिष्कृतिव्यायोगो रविनन्दन त्रिपाठिनः कृतिः। उत्तरप्रदेश 'उन्नाव'-मण्डले सञ्जातोऽयमाचार्यः कतिपयवर्षाणि सैन्यसेवां विधाय यदृच्छया निवृत्तः। अयञ्चनः सम्प्रति पी.-एच्. डी. उपाधयेऽनुसन्धानरतः।

### कथानकम्

प्रस्तुते व्यायोगे दक्षिणाप्रदानोत्सुकान् कौरवपाण्डवानाचार्यद्रोण आज्ञापयति—ममापकारिणं द्रुपदं निगृह्य मम चरणयोर्निपातयत। इयं मे दक्षिणा। कौरव-पाण्डवा आचार्यादेशं सहर्षं स्वीकृत्य दश दश सहस्रं सैन्यमादाय द्रुपदं निग्रहीतुं प्रतिष्ठन्ते।

द्रुपदराजधानीं निकषा गत्वा प्रथमं कौरवाः दूतद्वारा द्रुपदं सन्दिशन्ति—अस्मद्गुरुचरणयोर्निपत्य क्षमां याचस्व, उताहो सङ्ग्रामाय सन्नद्धः सेनासमेतो नगराद् बहिरागच्छेति।

द्रुपदो युद्धाय सन्नद्धो भूत्वा सेनया बान्धवैश्च सह नगरान्निष्क्रामति। कौरवपाञ्चालयोर्लोमहर्षणं युद्धं भवति सर्वथा पराक्रम्यान्ततः कौरवाः

पलायन्ते। तद् दृष्ट्वा पाण्डवाः शङ्खानाध्माय पटहाँश्च निनदय्य पाञ्चालानाक्रामन्ति। पुनरपि द्वयोः सेनयोस्तुमुलं युद्धं भवति। भीमार्जुना एकरथेन जवाद् द्रुपदमाक्रमतः। भीमः शतशो गजान् निपात्य द्रुपदरथाश्वान् गदाघातान्निहन्ति। अर्जुनश्च शरजालैर्द्रुपदसैन्यं विदार्य द्रुपदं शीर्णवर्माणं कृत्वा तन्मर्मसु प्रताड्य तं क्षीणप्राणं विधाय झटिति श्येन इव स्वरथादवप्लुत्य द्रुपदं निगृह्णाति। द्रुपदसैन्यं पलायते।

ततः प्रतिनिवृत्ताः पाण्डवा निबद्धं द्रुपदं गुरवे निवेदयन्ति। आचार्यद्रोणस्तं विगतबन्धनं कारयति। द्रुपदो द्रोणं क्षमां याचते।

द्रोणः पूर्वां मैत्रीं पुरस्कृत्य तमभिनन्दति। गर्वं मा कार्षीरित्युपदिश्य तस्यातिथ्यं करोति। पाण्डवाश्चाचार्याज्ञासम्पादनेन कृतकृत्या जायन्ते।

व्यायोगोऽयमप्रकाशितो विद्यते।



# कविकुलगुरोर्वाणीविलासः

*गजाननशास्त्रिमुसलगाँवकरः*

भारतवर्षस्य वैशिष्ट्ये बहुषु कारणेषु सत्स्वपि इदं तावत् प्रधानं प्रथमं च कारणं यदत्रैव देशे लब्धजनुः कविकुलतिलकः कालिदासः। कालिदासविरचितानां दृश्य-श्रव्यभेदेन भिन्नानां ग्रन्थानां परिशीलनेन बहुश्रुतः कालिदास इति सुस्पष्टमवगम्यते। सर्वेष्वपि विद्यास्थानेषु अगाधं पाण्डित्यं राज्यतन्त्रादिषु विश्वतोमुखं नैपुण्यं लौकिकविषयेषु चानितरसाधारणः परिचय इति सर्वमिदं नैव तिरोहितं सूक्ष्मतस्तद्-ग्रन्थपरिशीलिनां विदुषाम्। व्यतीतेऽपि द्विसहस्रप्राये वर्षगणे यस्य महिमा नापचीयते किमु वक्तव्यं तस्य कवेः श्रेष्ठताविषये। प्राचीना अनेके कवयः कविवरेण्यस्य कालिदासस्य कृतीः स्वादं स्वादं तस्य भणितीश्च गायं गायं तस्य कवनगुणगणान् वर्णं वर्णं न श्राम्यन्ति। कश्चन तस्य प्रकृतिवर्णनेन, अपरस्तस्य शृङ्गारप्रतिपादनपाटवेन, इतरस्तस्य शब्दगुम्फनचातुर्येण, अन्यश्च तस्य प्रसङ्गप्रतिपादनौचित्येन मन्त्रमुग्धमिवात्मानं पश्यति। कवेरस्य एतेषु गुणेषु को वा गुणोऽन्यानतिशेते इत्यत्र नास्त्यैकमत्यमद्यावधि। सर्वेऽपि गुणास्तथा प्रकर्षं भजन्ति यथा तत्र तत्र निहितचेता अन्यान् विस्मरति।

अथापि कीदृशी अस्ति तस्य विनम्रता! कुमारसम्भवादिकाव्यैर्लब्धकीर्तिरपि आत्मनीनमार्जवं न जहाति। रघुवंशप्रारम्भे स्वपुरोगामिनं भगवन्तं वाल्मीकिम्प्रति आदरं स्वस्य च सामान्यभावं प्रकटयन् प्रतिपादयति—

> मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम्।
> प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः॥
> अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः।
> मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः॥ (रघु. १।३-४)

दृश्यतां तावत्, हृदयङ्गमयाऽनुरूपया सहजसमागतयाचोपमया

कीदृशोऽस्ति मनोरमो भावप्रकटनव्यापारः। अत्र कविशब्दो वाल्मीकिपर्यायः वाल्मीकिम्प्रति कालिदासस्य आदरातिशयं व्यनक्ति।

महाकवेरस्य काव्यकौशलं कुमारसंभवे प्रकामसभिलक्ष्यते। अत्र भावाभिव्यञ्जना, परमोदात्ता कल्पना, पदसङ्घटना च परमोत्कृष्टा। गुणैरेभिः काव्यमिदं रमयति मनांसि मानवानाम्। अस्मिँश्च काव्ये कविशक्तिः सुस्पष्टमाविर्भूता दृश्यते। क्वापि नवैः किसलयैः सौरभसमन्वितो वसन्तः कमनीयैः कुसुमैश्च सौष्ठवमाविर्भावयति। क्वापि वैवाहिकं सौख्यं प्रसारयति। क्वापि च प्रियतमवियोगानलजायमानं सन्तापं हृदये प्रज्वालयति। मनोरमम्प्रकृतिवर्णनं काव्यस्य वैशिष्ट्यं वितनोति। प्रथमे हिमवतो वैभवम्, तृतीये वसन्तसमागमेन जायमानां वनश्रीः, चतुर्थे रतेर्विलापः, पञ्चमे बटुवेषधारिणः शिवस्य संलापः। सर्वमेतत् कवेः शुभ्रं यशो विवर्धयितुं समर्थम्। अत्र च लक्षणाशक्तिः कवेर्विद्योतते। शिव-पार्वत्योर्विवाहो न केवलं रतिसुखाय, अपितु तयोः समागमेन स्वामिकार्तिकेयस्तारकासुरं संहर्तुमजायत। शिव-पार्वत्योर्विवाहो दिव्यं पारस्परिकञ्च प्रेम मानवानां कृते आदर्शभूतम्, विवाहो नाम वंशं वर्धयते, गृहसंरक्षणमपि कुरुते। कालिदासस्य निखिलापि कृतिः शृङ्गारबहुला, परं न क्वापि वासनात्मकम्प्रेम। मदनदाहं शिवं वशीकर्तुं पार्वत्याः सौन्दर्यञ्चाक्षममिति वर्णयता कविना वासनात्मिका रतिः क्षणभङ्गुरा निष्फला चेति प्रदर्श्य तपसा अर्जितं लोकहितकरं दिव्यं प्रेम संस्थापितमिति प्रकटीकृतम्।

कुमारसंभवस्य पञ्चमे सर्गे कविना भारतीयं सौन्दर्यम्प्रदर्शितम्—

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः॥ (कुमा० ५।२४)

कविना नारीणां केवलं मृदुसौन्दर्यमेव नोपवर्णितम्, किन्तु तासूग्रभावोऽपि प्रदर्शितः। लोकापवादभीत्या राघवेण रामेण परित्यक्ता सीता वनमुपगम्य रामम्प्रति सन्दिशन्ती निगदति—

वाच्यस्त्वया मद्वचनात् स राजा
वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः
श्रुतस्य किं तत् सदृशं कुलस्य ॥ ( रघु० १४।६१ )

अत्र प्रत्येकं पदं स्वीयं वैचित्र्यमभिव्यनक्ति। रामस्य कृते 'स राजा' इति पदद्वये कीदृशी मनोरमाभिव्यञ्जना। तथा न केवलं रहसि, अपितु समेषां समक्षम्। न केवलं शुद्धामपितु विशुद्धाम्। न चापि शीतले जले प्रत्युत वह्नौ। सर्वाण्यपि पदानि सार्थकान्येव-सन्ति। रघुवंशमहाकाव्यस्योत्कृष्टता न केवलं—कालिदासकृतिषु, प्रत्युत निखिलेऽपि संस्कृतकाव्यवाङ्मये स्वीक्रियते। काव्येऽस्मिन् सूर्यकुले समुद्भूतानां भूपालानां वर्णनम्। अनुकूलानां घटनानां नैसर्गिकं वर्णनम्, आदर्शमयं चरितचित्रणम्, लोकातिशायिनी रसाभिव्यक्तिश्च कवेर्नैपुणीमाविर्भावयति। इन्दुमत्याः स्वयंवरवर्णनम्, अजविलाप-वर्णनम्, सीतारामयोः पुष्पकविमानद्वारा गमनम्, एवमन्यान्यपि वर्णनानि कवेः परिपक्वाम्प्रज्ञां चरमां प्रौढिञ्च परिलक्षयन्ति। यत्र तत्रालङ्कारा अपि शब्दार्थावलङ्कुर्वन्ति। आदर्शानामनुपमासृष्टिः, सरसं भावाभिव्यञ्जनं, विविधरसाभिव्यक्तिश्च महाकवेः कालिदासस्य कीर्ति-कौमुदीं सर्वत्र सततं विस्तारयिष्यन्ति। भावाभिव्यक्तौ तु महाकविना किमपि वैचित्र्यमेवाश्रितम्—

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती ॥ ( कुमा० ६।८४ )

अत्र कमलपत्रगणनायां पार्वत्या लज्जाभावः, आन्तरिकस्य प्रेम्णः आनन्दातिरेकगोपनं कं सहृदयं नाह्लादयति भावध्वनौ कवेरलौकिकी प्रतिभा परिलक्ष्यते। करुणरसाभिव्यक्तौ कविः प्रावीण्यमुपगतः। कुमारसंभवे रतेर्विलापः, रघुवंशेऽजविलाप एवात्र निदर्शनम् भस्मीभूत-पत्युः शरीरमवलोक्य विलपन्त्या रत्या कथ्यते—

गत एव न ते निवर्तते स सखा दीप इवानिलाहतः।
अहमस्य दशेव पश्य मामविषह्य व्यसनेन धूमिताम् ॥
( कुमा० ४ ३० )

प्राणविहीनामिन्दुमतीं विलोक्य विलपन्नजः—

स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥
(रघु० ८।४६)

अलंकारा अपि काव्यमर्मविदा कालिदासेन सकौशलम्प्रयुक्ताः। अस्य कविता-कामिनी न ग्राम्या नारीव अलङ्कारभाराक्रान्ता, सा तु स्फुटचन्द्रतारका विभावरीव विद्योतमाना सहृदयान् तर्पयति। यथा—'प्रजाः प्रजानाथ पितेव पासि।' 'माधुरी मदयति मार्जना मनांसि।' 'निर्ममे निर्ममोऽर्थेषु।' शब्दचित्रे न कवेः क्वापि प्रयासोऽवलोक्यते। शब्दचित्रेण प्रायो रसानुभूतौ महती बाधा जायते। अतएव महाकविना शब्दालङ्काराः क्वचिदेव प्रयुक्ताः। अर्थालङ्कारे तु कवेरभिरुचिरासीदितिप्रतीयते। स्वभावोक्तौ तु कवेर्नैपुण्यं स्थाने स्थाने प्रकटी भवति। उभयोत्प्रेक्षार्थान्तरन्यासदृष्टान्तादिषु अमन्थरा गतिः। उपमालङ्कारे तु नामुष्य कवेः क्वापि साम्यम्। उपमा तु कालिदासस्य स्वीया सम्पत्। सुदक्षिणा-दिलीपयोरन्तराले गता नन्दिनी दिन-क्षपामध्यगतेव सन्ध्या विभाति। 'छायेव तां भूपतिरन्वगच्छत्' इत्यादिषूपमालङ्कारस्य सफलः प्रयोगः। दिलीपमनुयान्ती सुदक्षिणा 'श्रुतेरिवार्थं स्मृति'-रिवावलोक्यते।

प्रसादमाधुर्यनिवेशो भावसौष्ठवमलङ्कारप्रयोगो भाषालालित्यादयः सर्वेऽपि गुणाः काव्यस्यास्य विश्ववन्द्यतामाकलयन्ति। महाकवेरस्य कल्पनानुक्षणं नवनवानि चित्राणि संस्थापयति। वस्तुतोऽस्य कृतिषु रमणीयतानुभूयते 'क्षणे क्षणे यन्नवतामुपैति। तदेव रूपं रमणीयतायाः' इत्यभियुक्तोक्तिः पूर्णतयात्र सङ्घटते। अतएव कालिदासविषये कृष्णकविर्ब्रवीति—

अस्पृष्टदोषा नलिनीव हृष्टा
हारावलीव ग्रथिता गुणौघैः।
प्रियाङ्कपालीव विमर्दहृष्टा
न कालिदासादपरस्य वाणी ॥

न केवलं संस्कृतरसिका भारतीया एव अपि तु वैदेशिका विपश्चितोऽपि महाकविमिमं कालिदासं प्रकामम्प्रशंसन्ति।



# पुस्तक-समीक्षा

## कालिदासग्रन्थावली

संपादक : डॉ० रेवाप्रसादद्विवेदी, अध्यक्षः, साहित्यविभागस्य
प्रकाशनवर्षम् १९७६
प्रकाशक : काशीहिन्दूविश्वविद्यालयः, वाराणसी—५
पृष्ठसंख्या ६४४ D. D.
मुद्रितं मूल्यम् विशिष्टस्य संस्करणस्य रु० ५४=००
सामान्यस्य संस्करणस्य रु० ११=५०
प्राप्तिस्थानम् : कार्यालय : जनसम्पर्क-अधिकारी ( P. R. O. )
का० हि० वि० वि०, वाराणसी—५

अथवा

चौखम्भा विश्वभारती, चौक, ( चित्रा सिनेमा के सामने ) वाराणसी-१

ग्रन्थावल्यामस्याम् ऋतुसंहारम्, मेघदूतम्, कुमारसंभवम् ( १–८ सर्गाः ), रघुवंशम् (१–१९ सर्गाः), मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलं चेति सप्तापि कालिदासकृतयस्तैस्तैः पाठान्तरैः, ताभिस्ताभिष्टिप्पणीभिः, प्रक्षिप्तपद्यपरिशिष्टसहितया श्लोकसूच्या भूमिकया चालंकृत्य मुद्रिताः। अयमत्र विशेषो यत् संपादकेन शाकुन्तले वङ्गीयः पाठोऽपि रूपान्तरतया यथास्थानं दत्तः। आक्सफोर्ड-हार्वर्ड-वेल्जियम-साहित्याकादमी-निर्णयसागर-वाराणसी-प्रभृतिभ्यः प्रकाशिताभ्यः कालिदासकृतिभ्योऽकालिदासीयानंशान् परिष्कृत्य 'इतिहास-भूगोल-काव्यनाट्य-धर्मादि-शास्त्रदृष्ट्या लेखप्रवृत्तेः स्वयं कालिदासस्यापि लेखप्रवृत्तेश्च परिशीलनेनात्र निर्धारितो मूलपाठः साम्प्रतं यावत् प्रकाशितेभ्यः सर्वेभ्योऽपि संस्करणेभ्यः प्रामाणिकतरः। मूल्यमपि सर्वतो भद्रम्।

## काव्यादर्श-सुदर्शना

व्याख्याकार : डा० धर्मेन्द्रकुमारः, पटियाला-पंजाबी-विश्वविद्यालये संस्कृतविभागाध्यक्षः

पृष्ठानि ४६६—डी. डी. । प्रकाशन-वर्षम्—१६७३ । प्रकाशक : मेहरचन्द-लछमनदासः दिल्ली ।

मूल्यम् रु० १६—००

काव्यादर्शो हि संस्कृतकाव्यशास्त्रस्य प्रथमं ग्रन्थरत्नम् । तदिदं सुदुर्लभानि षोडश संस्करणानि परिशील्य डा० धर्मेन्द्रकुमारगुप्तः संस्कृतेन हिन्दी-भाषया च व्याचख्यौ । रंगाचार्यप्रभृतीनां सतीष्वपि टीकासु सुदर्शना-नाम्न्योरनयोष्टीकयोरयं विशेषो यदनयोः विविधाकर-ग्रन्थसन्दर्भाः संवादभांजि च स्थलानि तत्र तत्र लभ्यन्ते येषामभावे ग्रन्थ एष निभृताशय एव तिष्ठति । भूमिकया विदुषानेन पुस्तकेस्मि-न्नात्मनो दण्डिनमधिकृत्य कृतस्य सुगभीरस्य महतश्चाध्ययनस्य नवनी-तमपि संदृब्धं यदर्थमेतेनांग्लभाषया पुस्तकद्वयं पूर्वमेव पूर्वपीठिकारूपेणेव पृथगेव प्रकाशितम् । तत्रायं विशेषो यद् भामहस्य दण्डिनः पूर्ववर्त्तित्वं समर्थैस्तर्कैः प्रत्याख्यातम्, प्रसाधितं च भामहस्यैवोपजीविप्रायत्वम्, दण्डिन एव चोपजीव्यत्वम् । चिरोदितोऽयं विचारोऽस्माकमपि मति क्लेशयति स्म प्रमाणगवेषणार्थम् । सा चेयं गवेषणा श्रीमता गुप्तेन पर्यपूरीति तेभ्यः साधुवादानुदाजिहीर्षामः । ग्रन्थान्ते कारिकार्धसूची पूर्वोत्तरार्ध-विभाग-परिज्ञापक-लक्ष्म-युततया ससन्दर्भमुपन्यस्ता संबद्ध-सन्दर्भ-ग्रन्थ-सूची च । आभ्यां सौविध्यस्यातिभूमिमारोपिता अध्येतारः श्रीमता गुप्तेन । मूलपाठस्य पाठान्तराण्यपि पादटिप्पणीषु विदुषानेन योजितानि ।

मुद्रणं सुभगम्, मुद्राक्षराणि मूलकारिका, संस्कृतटीका, हिन्दीटीका, सन्दर्भस्थलानि चेति सर्वेषां कृते पृथक् पृथक् तथा योजितानि यथा पाठकस्य मन्दज्योतिष्कापि दृष्टिः स्तोकमात्रमपि न क्लिश्यात । मूल्यमपि नाधिकमिति व्याख्यातृ-प्रकाशकावुभावपि ममेव मन्ये समेषामपि काव्यादर्शाध्येतॄणां साधुवादपात्रम् ।

●

अभिनव-प्रकाशनम्

# आधुनिक-संस्कृत-नाटक ( हिन्दी में )

( नये तथ्य : नया इतिहास )

कतिपयवर्षैः सागरिका-सम्पादकः, सागर विश्वविद्यालयस्य प्राचार्यो डा० रामजी उपाध्यायः संस्कृत-नाटकस्य बृहदितिहासं हिन्दी-भाषया प्रस्तावयितुं व्यापृतो वर्तते ।

प्रथमो भागः अश्वघोषतो भवभूतिपर्यन्तः

४७५ पृष्ठानि मूल्यं १० रुपकाः

द्वितीयो भागः अष्टमशतकात् पंचदशशतकं यावत्

५०५ पृष्ठानि मूल्यं २५ रुपकाः

तृतीयो भागः षोडशशतकात् १९७५ ई० यावत् प्रायः

१००० पृष्ठानि मूल्यं ५० रुपकाः

भागद्वयं प्रागेव प्रकाशितम् । तृतीयो भागः सम्प्रति यन्त्रस्थः शीघ्रमेव प्रकाशमेष्यति । अत्र संस्कृतनाटकानां साहस्रं नाट्यशास्त्रीयविवेचनपुरस्सरमैतिहासिकक्रमेण परिशीलितम् ।

प्रकाशनात् प्राक् केवलं २५ रुप्यकप्रदातृभ्यो ग्रन्थोऽयं वितरणीय इति प्रचार-योजना प्रकाशकेन संस्कृत-परिषदानुगृहीता । एतदर्थमधो लिखितेन संकेतेन धनराशिः प्रेषणीयः ।

मन्त्री, संस्कृत-परिषद्

## सागर-विश्वविद्यालय

सागर ( म० प्र० )

# सागरिका

पञ्चदशवर्षे अङ्कः चतुर्थः



सम्पादकः
डॉ० रामजी उपाध्यायः
सागरविश्वविद्यालये
संस्कृतविभागस्य प्राध्यापकाध्यक्षः

प्रकाशकः
सागरिका-समितिः, सागरविश्वविद्यालयः
सागरम् ( म० प्र० )
फोन :२७०९

# सागरिका

पञ्चदशवर्षे अङ्कः चतुर्थः

सम्पादकः

**डॉ० रामजी उपाध्यायः**

सागरविश्वविद्यालये

संस्कृतविभागस्य प्राध्यापकाध्यक्षः

प्रकाशकः

**सागरिका-समितिः, सागरविश्वविद्यालयः**

सागरम् ( म० प्र० )

फोन : २७०९

प्रकाशिका
सागरिका–समितिः
सागरविश्वविद्यालयः
सागरम् ( म० प्र० )

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ३–०० रूप्यकाणि |
| वार्षिकम् | १०–०० रूप्यकाणि |
| आजीवनग्राहकस्य | २००–०० रूप्यकाणि |
| अङ्कप्रकाशः | प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र-<br>[ जून-सितम्बर-दिसम्बर-मार्च- ] मासेषु |

सूच्यम् : आजीवनग्राहकेभ्यः सागरिकायाः प्राचीना अपि सर्वेऽङ्काः सवस्त्र-पुटबन्धा निश्शुल्कमुपह्रियेरन् ।

मुद्रकः
विद्याविलास प्रेस
के. ३७/१०९, गोपालमन्दिर लेन
वाराणसी–२२१००१ ( उ० प्र० )
फोन ५२९३१

# विषय-सूची





# अन्नदाचरणस्य कृतित्वम्

*डॉ० राधावल्लभः त्रिपाठी*

ऊनविंशशतके श्रीमदन्नदाचरणः वर्णसावर्ण्यरम्यैः लावण्यमनोहरैः काव्यभूषणैः सुरवाग्वधूं मण्डयति स्म। अस्यैता रचनाः कवित्वशक्तिं वैदुषीं विदग्धतां च प्रमाणयितुमलम्—

१. श्रीरामाभ्युदयमहाकाव्यम्।
२. ऋतुचित्रम्—खण्डकाव्यम्।
३. सुमनोञ्जलिः—काव्यसंग्रहः
४. महाप्रस्थानम्—महाकाव्यम्।
५. काव्यचन्द्रिका—काव्यशास्त्रग्रन्थः।
६. शब्दशक्तितत्त्वम्।

महाभागोऽयं १८६२ ख्रिस्ताब्दे नोआखालीस्थ-सोमपादस्थानं स्वजनुषा समलचङ्कार। श्रीरामाभ्युदयमहाकाव्यस्य पुष्पिकातोऽस्य वंशावलिरित्थं प्रतीयते—

सर्वानन्दः



भूदेवः



कालीकिङ्करः



अन्नदाचरणः

अस्य प्रपितामहः सर्वविद्य इति नाम्नापि स्मर्यते। अन्नदाचरणस्य पूर्वपुरुषाः राढीयश्रेण्याः श्रोत्रिया अभवन्। स चायं कलिकातायां वाराणस्यां चाधीत्य विद्यायाः परं पारमगच्छत्। अनन्तरं च 'नोआखाली'ति नगरे संस्कृतविद्यालयं संस्थाप्य तत्र अध्यापयति स्म। ततश्चायं काश्यां हिन्दू-विश्वविद्यालये मीमांसा-सांख्य-न्याय-दर्शनानां प्राध्यापकत्वेन नियोजितः। तत्रैव च सुरसरस्वतीं सेवमानः 'सुप्रभात'-

मिति संस्कृतपत्रमयं सम्पादयति स्म। अस्य वैदुष्या समावर्जिताः काश्याः पण्डिता एनं तर्कचूडामणि-महामहोपाध्यायविरुदाभ्यां विभूषयामासुः। श्रीमदप्पाशास्त्रिराशिवडेकर-सम्पादित-संस्कृतचन्द्रिकाया अयं सर्वप्रियो लेखको मतः। सुकुमारवस्तुनि साहित्ये दृढन्यायग्रहग्रन्थिले वाङ्मये सममस्य वाणी समुल्ललास। काव्यगौरवेण पाण्डित्येन सर्वपण्डितेषु मूर्धन्योऽप्ययं मूर्तिमान् विनयो बभूव। तथाहि श्रीरामाभ्युदयमहाकाव्येऽनेनालेखि—

तर्कचूडामणिरहं तर्कज्ञानविवर्जितः।
कवित्वशक्तिहीनोऽपि काव्यं कर्तुं समुत्सुकः॥ १।६

## श्रीरामाभ्युदय-महाकाव्यम्

काव्यस्यास्य प्रकाशनं १३०२ वङ्गाब्देऽजायत। एकविंशसर्गनिबद्धमिदं महाकाव्यमन्नदाचरणस्य प्राथमिकी कृतिरिति प्रतिभाति। काव्यमुपक्रममाणः कविः आत्मचापलं क्षमापयन्नेतदेव सूचयति—

चापल्यदोषैः परिहीयते नो मूर्खः कदापीति दृढप्रवादः।
कवित्वहीनः कविताविलेखे रक्तोऽहमेवात्र परो निदर्शः॥ १।१३

रामायणकथामुपस्थापयन् कविरत्र रामस्य आजन्मन आविवाहं चरितं निबध्नाति। महती खलु अस्य रामचरित्रवर्णने आस्था—

तथापि नारायणवृत्तगीतैर्वाग्जन्मनी मे सफले भवेताम्।
इत्येव वाञ्छापरतन्त्रचेताः श्रीरामकीर्तिं गदितुं प्रवृत्तः॥ (१।१४)

काव्येऽस्मिन् कविः परैः क्षुण्णे पथि एव प्रायः प्रचलति। पूर्वसूरिणोऽनुकुर्वाणो यत्नेनासौ काव्यकौशलप्राप्तये प्रयत्नपरो वर्तते। पूर्ववर्तिकवय इव वर्णनेषु पृथुलतामसौ आविष्करोति। अष्टसु सर्गेसु अयोध्यानगरी, राजा दशरथः, तस्य मन्त्रिणः, राज्यश्च तेन वर्णिताः दशरथतनयानां जन्म चोपक्रान्तम्। एकादशे सर्गे रामं प्रार्थयमाणो विश्वामित्रो दशरथं प्राप्नोति। आद्वादशादाचतुर्दशसर्गं वर्णनानां वैपुल्यं विराजते। पञ्चदशसर्गे सुबाहु-मारीचादीनां वधः वर्णितः। एकोनविंशसर्गं यावत् रामविवाहस्य विस्तरशश्चित्रणं कविना विहितम्।

## ऋतुचित्रम्

काव्यमिदं १३०६ तमे बङ्गाब्दे ( १९०० ई० वर्षे ) प्रकाश्यतां प्राप। ऋतूनां तास्ता अवस्था वर्णयन् कविरत्र कविकुलगुरोः ऋतुसंहारस्य संस्मारयति। कालिदासीयं लालित्यं मसृणता चात्र न तथापि दृश्येते।

द्वितीयसर्गे ५२ पद्येषु ग्रीष्मवर्णनं स्वभाविकतया हृदयमावर्जयति। मनोहारिणीं सरणिं समाश्रित्य सुकविरत्र ग्रीष्मचित्रं तनुते—

क्वचिदसौ सरसीह सरस्यपि शुचिविभाकरशोषितजीवना।
दयितभूषणसन्ततिवर्जिता नवनवा महिलेव न शोभते॥ २५
इह निपानजलं महिषोऽयते तरुतले हरिणः श्रममुज्झति।
खरवराहगणो नवपल्लवे विहरति द्युमणेः करपीडितः॥ ३०
प्रवयसो युवतेर्युवकस्य च निवसने शयने स्वपनेऽशने।
विहरणे भ्रमणे दयितागमे विलसनेऽपि रुचिर्न पुरा यथा॥ ३२

काव्यरचनायामेवमभ्यसन् कविः शनैः शनैः प्रज्ञाप्रकर्षं प्राप्तवान् वर्षावर्णनप्रसङ्गे कालिदासस्य सर्वातिशायिप्रभावाद्विमुक्तः समसामयिक-विषयानपि समुन्मीलयति, निपतति च तदीया दृष्टिः दरिद्रभारतीय-जनतायां तथा च कृषकेषु—

सुवर्षणैः कुत्रचिदत्रशस्यसम्पन्निदानैः कृषकाः प्रफुल्लाः।
कचिन्निराशत्वविषण्णभावमीयुः समन्ताद्बत तद्वियोगात्॥ ११
अहो इदानीं कतिचिद् दरिद्रा अनावृते वृष्टिजलाभिषिक्ते।
गृहेऽतिदुःखैर्निजदुष्कृतानि स्मृत्वैव मर्मव्यथया रुदन्ति॥ १५
क्षेत्रं श्रियालिङ्गितमिन्द्रगोपं कीटैः समाच्छन्नमितस्ततः सत्।
अनर्घरत्नैः समलङ्कृतानामाप्नोति कान्तिं सुविलासभाजाम्॥ १६

पूर्वकविप्रभावात्स्वातन्त्र्यमवाप्य सम्प्रति कवेः कल्पनापि अनल्पां कमनीयतां कलयन्ती लावण्यच्छटां छादयन्ती तेषु तेषु रमणीयदृश्य-सन्दोहेषु प्रगाढमभिरमते—

कदाप्यवृष्टापि विधाय धीरधीरध्वनिं साधुमयूरमित्रम्।
अभ्रं नवं ग्रीष्मविडम्बितानामुत्पादयत्यङ्कुरमत्र शान्तेः॥ १०

उन्मार्गगामिन्य इव ह्रदिन्यो रसच्छटाप्लावितधीरचित्ताः।
सख्यो यथा तीरधराममन्दं श्लिष्यन्ति भूयो मृदुवीचिहस्तैः ॥ २३

कालिदासाद्यपेक्षया सामान्यजनजीवनं समधिकतरं कविरयं विषयीकरोति। हेमन्तर्तुवर्णनेऽपि कृषीवलानां कार्यपद्धतिं समुल्लासं चासौ अवेक्षते—

कृषीवलैर्नूतनधान्यराशिं निकेतनं तुष्यत एव नीत्वा।
सुखेन तेषां सरसेक्षणास्ताः हृष्यन्ति तद्रक्षणतो रमण्यः॥ १८

पूर्वकविभ्यः पदावलीं शैलीं वा समाददानोऽपि सम्प्रति कविरयं स्वमेधया एव तां संयोज्य काव्ये प्रयुङ्क्ते, अत एवानुकरणेऽपि स्वजागरूकतया मौलिकतामाविष्करोति।

## सुमनोञ्जलिः

कवेरन्नदाचरणस्य स्फुटकाव्यानां संग्रहोऽयं १३०८ बङ्गाब्दे (१९०२ खिस्तवर्षे) नोआखालीतः प्रकाश्यतामगात्। सङ्कलितरचनासु गीतिकाव्यगतं भावसौष्ठवं सविशेषं स्फुटति। प्रथमायां 'प्रणति'रिति कवितायां कविर्भावगद्गदया गिरा परमतत्त्वं प्रणमति ४३ पद्येषु। 'आशे'-ति द्वितीये काव्ये ३८ पद्येषु आशाया चमत्काराः, विलासाश्च सचमत्कारं सविलासं वर्णिताः—

आशे! प्रसादात् तव वामनोऽपि शृङ्गं सुमेरोरपि तुङ्गतुङ्गम्।
समुत्सहेताप्तुमहो सुधांशुं करेण भूमिस्थित एव नो किम्?॥ १३
त्वया विमुग्धो वधिरः शृणोति नो किं प्रियायाः प्रणयाभिगीतिम्?।
मूकोऽपि चाटुप्रियभाषणेन तुष्टिं प्रियां प्रापयतीह नो किम्?॥ २१
त्वत्तर्पिता प्रोषितभर्तृकापि वसन्तवाचालपिकालिसान्द्रे।
सुपुष्पवल्लीपरिवेष्टमाने गृहे न किं भर्तृसुखं लभेत?॥ २२
अजातदारोऽपि तव प्रसादात्प्रियामुखं चुम्बति मानसेन?।
प्रेमाभिमानं प्रणयेन वादं करोति रम्यं रमते च तत्र॥ २३

'शिशुहास्य'मिति काव्ये ३१ पद्येषु कविहृदि समुच्छलद् वात्सल्यं भावतारल्यं च अनिर्बन्धं प्रवहतः। शिशूनां चापल्यं रामणीयकं च सर्वथा कवेर्मनो जहार। तत्रत्यमकृत्रिमसौन्दर्यं विशिष्य कवेर्मनोऽभिनिविशते—

हसत रे शिशवो हसत स्वतः सुमधुरं मधुराकृतयः पुनः।
मम मनःकमलं सुखसागरे इह निमज्ज्य चिराय विभात्वलम् ॥ १
न मधुरः सकलः क्षणदाकरो न सुखदो मलयस्य समीरणः।
मलयजाम्बुततिर्न च शीतला सुखकरं शिशुहास्यमहो यथा ॥ १७
हे स्वर्गदूताः शिशवः सुखेन प्रदर्श्य तां तां मृदुहास्यराजिम्।
मुग्धं कुरुध्वं जगदेतदेव स्वर्गायतां चारु वसुन्धरैषा ॥ ३२

'दशासादृश्य'मिति काव्ये ३१ श्लोकेषु कविः सत्यप्यस्मिन् जगति धनिनां निर्धनानां च दशावैषम्ये धनिकानां जीवनगतां विषमतां निधर्नानां च मनस्तुष्टिं प्रदर्शयन् 'दशासादृश्यं' निरूपयति। एतद्विपरीतं 'किमेष भेद' इति काव्ये ३६ पद्येषु देशे परिव्याप्तम् आर्थिकवैषम्यं कविमानसं दुनोति। तस्मिन् काले प्रचारं प्राप्तवती साम्यवादविचार-धाराऽत्रान्तर्निहिता प्रतीयते—

एको रसज्ञासुखदं सुभोज्यं प्राचुर्यतो भोक्तुमहो न शक्तः।
न विन्दतेऽन्योऽपरान्नचूर्णं किमेष भेदः समदर्शि-सर्गे ? ॥ २
एकः शिरीषातिकुमारवस्त्रा वृतां सुशय्यामधिशेत एव।
न लभ्यतेऽन्येन धरापि शुष्का किमेष भेदः समदर्शि-सर्गे ॥ ३

'श्मशानम्' इति काव्ये ८० श्लोकेषु कवेर्हार्दिकवैराग्यं जीवनस्य नश्वरता च सममर्दारणं प्रकटिते। क्वचित् श्मशानदृश्यं क्वचित् तत्रस्थ शवादींश्च दर्शं दर्शं कविर्भावानुद्गिरति—

दुष्टस्वराकर्कशभाषिणी या पपा-विवायू-रसना-वचोभिः।
समर्थिनां सा क्व गताद्य कुत्र बाहू परापीडनदीक्षितौ वा ॥ ४७ ॥
अहो क्व पादौ तव ताविदानीमनारतं यौ च समाश्रितानाम्।
उरःसु पृष्ठेषु शिरःसु तीव्रप्रहारकार्येषु ललज्जतुर्न ॥ ४८ ॥
गन्तुं प्रवृत्तोऽसि शव ! प्रभावादीशस्य सत्यं व्रज साधुभावम्।
त्वं यादृशं कर्म चकार नूनं तत् तादृशस्यैव फलं लभेथाः ॥ ४९ ॥
रे चित्त ! यो यो मधुरं जहास जहर्ष सुश्राव च वन्दिगीतम्।
निहत्य शत्रून् यश आददे च व्यतीतगर्वः स इहैव पश्य ॥ ५० ॥
नितान्त रूक्षप्रकृते श्मशान ! शोकाश्रुभिः कुर्वत एव पूर्णाम्।
धरां कथं त्वं सहसे सुतारं रोरुद्यमानस्य कराहतिं ताम् ? ॥ ६१ ॥

मानः कथं चित्त कथं नु गर्वः द्वेषश्च हिंसा कथमेव तेषाम् ।
अखण्डनीयान्नियतेर्नियोगादत्रैष येषां परिणाम एषः ॥ ७२ ॥
रे चित्त ! संसर्गमिमं त्यजेस्त्वं विधेर्नियोगो बलवान् यतस्त्वाम् ।
प्रच्यावयिष्यत्यथ वासरान्ते मासान्त एवापि च वत्सरान्ते ॥ ७३ ॥
भजस्व नारायणपादपद्मं कुरुष्व नारायणनामपानम् ।
लभस्व नारायण-भक्तिमग्र्यां श्मशानभूमिं तरितुं यदिच्छेः ॥ ७५ ॥

'का गति'रिति कवितायामपि पूर्ववत् ४७ पद्येषु जगद्गतपापाचारैः विभिषिकाभिश्च संत्रस्तः कवि नारायण-शरणमेवैकमवलम्बनं मन्यमानो भगवन्तमार्त इवाह्वयति । तथैव 'आत्मनिवेदने सङ्कल्प' इति काव्ये २८ पद्येषु सर्वकामान् परित्यज्य भगवच्छरणावलम्बनस्य सङ्कल्पो दृढं प्रकटितः । अस्य सङ्कलनस्य अन्या अपि कविताः कवेरेतादृशीं मनोदशां व्यञ्जयन्ति । 'कल्पने'ति काव्ये कल्पनायाश्चमत्कारा वर्णिताः—

हे कल्पने मामरावतीं तां सुखप्रसूं प्रापय यत्र नूनम् ।
मन्दाकिनी मन्दतरङ्गवातप्रकम्पितस्वर्णसरोजमास्ते ॥ १३ ॥

## महाप्रस्थानम्

इदं महाकाव्यं १३०८ वङ्गाब्दे प्रकाश्यतां गतम् । कवेरियं पश्चिमा कृतिरिति प्रतीयते । तस्य जीवनदर्शनं चिन्तनं जगतः पर्यवेक्षणं च परिष्कृत-प्रौढ-सरण्यात्र प्रकटीकृतानि । परिसमाप्ते महाभारतयुद्धे विजय-श्रीलाभ-समृद्धेषु अपि पाण्डवेषु युधिष्ठिरस्य विषादस्तदनु पाण्डवानां महाप्रस्थानं च काव्यस्यास्य विषयः ।

जीवनस्य नश्वरता, वियोगः, विभीषिका च हृदयं सादयन्ति । महाकाव्यस्यास्य प्रथमसर्गे विषाद एवानुस्यूतः । राजपदं प्राप्यापि नायको युधिष्ठिरः बन्धुबान्धवेभ्यो रहितं जगत् शून्यमेव पश्यति । तस्मिन्नेव समये भग्नमनोरथो नियतेर्विधानेन सर्वथा पराहतः कृष्ण-निधनशोकाकुलः अन्तःपुरस्त्रीणां रक्षणेऽसमर्थः परावर्तते द्वारका-तोऽर्जुनः । नियतिचक्रवशवर्तिनो मानवस्य क्षुद्रता सामर्थ्यविहीनता च तदानीं सममर्मदारणं परिस्फुटीभवति । सर्वत्र हाहाकारः क्रन्दनं श्रूयेते । महाकाव्यस्य प्रथमसर्गे जीवनस्येयं कारुणिकता विषादगर्भता च भाव-विह्वलं कविना अङ्किता ।

द्वितीये सर्गे व्यासः पाण्डवान् प्राप्नोति, जीवनस्य द्वन्द्वेभ्यो कथं मुक्तिः स्यादिति च तान् उपदिशति। अनन्तरं च पाण्डवानां संसार-यात्राया आरोहणं प्रारभ्यते। जीवनस्य मोहादुत्थातुं ते—

भीमार्जुनौ माद्रिसुतौ कुमारौ महीसपत्नी द्रुपदात्मजापि।
विहाय हा हा चिर-भूषणानि वृक्षत्वचं शिश्रियुरक्रमेण ॥ ५।२
महीरुहत्वग्भिरपीह येषां शोके व्यपाकर्तुममामभिख्याम्।
स्वाभाविकीं नैव सुशैवलैस्तैरप्यत्र किस्याञ्जलजं विरूपम् ॥ ५।३

संसारस्य प्रपञ्चेभ्यो विमुक्ताः पाण्डवाः वनमधिगम्य निसर्गस्य विपुले क्रोडे विहरन्तः शान्तिमधिगच्छन्ति यत्र—

प्रकृतेर्मधुरे स्तरे स्तरे लहरी सा मधुरत्वसन्ततिः।
नवहास्यमयी निरन्तरमिह वाति स्वत एव दृश्यताम् ॥ ७।१०
इह नैव घटेत कामना विषयस्य क्षणमप्यहो ध्रुवम्।
सुखदुःखचयोऽत्र कस्यचित् हृदयं चालयितुं क्षमेत न ॥ १७
आधिकेन वचश्चयेन किं निपतन्तीह नु यत्र दृष्टयः।
तत एव शमो विनिःसृतोऽभ्यनुरक्तं विदधाति विस्मितम् ॥ २५

शनैः शनैः पाण्डवानां हृत्सु नीरवता अवतरति। निसर्गस्यान्तरनु-स्यूतम् अध्यात्मतत्त्वं तेऽवलोकयन्ति। ततश्च तेषामलौकिक-दिव्यभूम्या-मारोहणं भवति यत्र—

प्रकृतिचित्रपवित्ररसोदधौ परिनिमज्जयतीह मनः कविः।
क्वचिदलौकिकभावभरार्दितं धरति तज्जडतामिह कस्यचित् ॥ २०।२०
दिवसहट्टनिनादविमोहिता शममिता प्रकृतिः स्थिरनिश्चला।
परमदेवसमर्चनहेतवे किमु समाधिमिहाश्रयते स्वतः ॥ २१
इह नैव ननु प्रतारणा न च हिंसा न च पापवासना।
न च धूलिकणो न भूतयो न च विद्वेषलवोऽपि विद्यते ॥ २०।४४

'महाप्रस्थानम्' अन्नदाचरणस्य वृद्धावस्थायाः कृतिः प्रतिभाति। अत्र जीवनस्य शाश्वतप्रश्नाः कवेर्मानसमान्दोलयन्ति, तेषां समाधानान्वेष-णायासावत्र यतते। महाभारतकथाया आश्रयः कविना केवलं कथानक-कौतूहलवर्धनाय वर्णनपल्लवनाय न गृहीतः, अपितु पुराकथाया द्वारेणासौ जीवनगतां विषमतां विभीषिकां जटिलतां च साक्षात्कृत्य मानवतायाः

कल्याणाय विश्वशान्तये कमपि पन्थानं प्रदर्शयति। पौराणिकी अपि अस्य कथा आधुनिकप्रसङ्गान् सङ्केतयति। आधुनिकयुगे प्रसरन् कलहः यान्त्रिकसभ्यता-जनिता विषमता च मनुष्यतां पतनगर्तं प्रति कथमग्रे सारयतीति कविरत्र निदर्शयति। मनुष्यताया इमं सङ्कटं तीव्रतया कविरनुभवति, अतएव काव्येऽस्मिन् तस्य सरणिरपि तरङ्गिणीव असम्बाधं प्रवहति।

अन्नदाचरणस्य कृतिषु तदीयजीवन-दर्शनं शनैः शनैः विकसद् दृश्यते। तदनुरूपमेव तदीया अभिव्यञ्जनापि प्रौढिं प्राप्नोति। तस्य काव्येषु क्वचिदसंस्कृता शैली स्फुरति, तथापि कविरयं यथाऽवीक्षित-प्रसङ्गान् भावांश्च काव्यव्यूहे समुन्मीलयति तथा कर्तुं स्वल्पा एव कवयः क्षमाः। अतएवाधुनिककविषु अस्य कवित्वं समुज्ज्वलं चकास्तीति दिक्।



# संस्कृत-वृत्तम्

*डॉ० राधावल्लभः त्रिपाठी*

## अभिनन्दनं विदुषाम्

अस्मिन् संवत्सरे सागरिका-सम्पादका विपश्चिदपश्चिमाः श्रीमन्तो रामोपाध्यायवर्याः उत्तरप्रदेश-मध्यप्रदेश-सर्वकाराभ्यां मध्यकालिकसंस्कृत-नाटकस्य हेतोः पुरस्काराभ्यां सम्मानिताः। अथ च सुरसरस्वत्या अनन्याः समाराधका इमे तपस्विनः भविष्यदनेहसि समायोऽयमाने-ऽखिलभारतीयप्राच्यविद्यापरिषत्सम्मेलने संस्कृतसाहित्यविभागाध्यक्ष-त्वेन मनोनीता इत्यपि समेषामपि शेमुषीजुषां विदुषां कृतेऽतितरां हृद्यं प्रमोदावहं च वृत्तम्। सुरभारत्या मौनसमाराधका इमे द्विजाः सम्माना-दुद्विजन्ते, तथापि वयं स्वहृदयपरितोषाय निकाममेतानभिनन्दामः।

## नूतनप्रकाशनानि

अस्मिन् वत्सरे सागरविश्वविद्यालयस्य संस्कृतपरिषदा पुस्तकद्वयमिदं प्रकाश्यतां नीयते—

१. आधुनिक संस्कृत नाटक का इतिहास–डॉ० रामजी उपाध्यायः।
२. संस्कृत कवियों के व्यक्तित्व का विकास—डॉ० राधावल्लभः त्रिपाठी।

## स्वागतं नूतनवाचस्पतीनाम्

अस्मिन् वर्षे इमे विद्वांसः स्वशोधप्रबन्धं परिसमाप्य उपाधिं प्राप्तवन्तः—

१. सुश्रीः वीणा ओखदे–( संस्कृतसाहित्ये निबन्धसरण्या विकासः )
२. श्री बिहारीलाल—नागार्चः ( अष्टाविंश-शतकस्य रूपकाणि )
३. श्री जयप्रसाद-वार्ष्णेयः ( महाभारतार्थशास्त्रयोस्तौलनिकमध्य-यनम्। )
४. श्री वीरेन्द्रपटेलः ( महाभारते प्रकृतिचित्रणम् )

एतान्नूतनाचार्यान् दिष्ट्या वर्धापयामः। वर्तमान-सत्रे 'संस्कृत-

साहित्ये चाणक्यचरितस्य विकास' इति विषयमधिकृत्य श्री रामरतन-पाण्डेयः शोधार्थं पञ्जीकृतः। नूतनकुसुमानां विकासेन संस्कृतसौरभश्रीः प्रसारं प्राप्स्यतीति दृढमाशास्महे।

## उज्जयिन्यां कालिदास-महोत्सवः

प्रतिवत्सरमिव कालिदासनगर्यां श्रीमदुज्जयिन्यां कालिदासमहोत्सवः सोल्लासं समायोजितः। कालिदाससमितेः सचिवानां कर्मकौशलं सुनिपुणं तत्र प्रस्फुटितम्। शोधपरिषदः समुद्घाटनं प्रदेशस्य मुख्य-मन्त्रिपदमलङ्कुर्वाणैः श्रीमत्श्यामाचरणशुक्लवर्यैः कृतम्। प्रथमसत्रे हिन्दू-विश्वविद्यालये साहित्यविभागाध्यक्षपदमलङ्कुर्वतां श्रीमद्रेवाप्रसाद-द्विवेदानां तथा च सागर-विश्वविद्यालये संस्कृत-प्राध्यापकस्य डॉ० राधावल्लभस्य त्रिपाठिनः शोधपत्रद्वयं प्रस्तुतमभूत्। कालिदासे 'प्रथम'-शब्दस्य स्वारस्यमाश्रित्य विरचित आचार्यद्विवेदानां प्रथमो लेखः अतितरां विवादास्पदं विचारोत्तेजकश्चासीत्। 'कालिदासीयरूपकेषु प्रणयिनीः प्रति प्रणयिनां प्रणिपाता' इति विषयेण संदृब्धः डॉ० त्रिपाठिनो लेखः समुपस्थितैर्विद्वद्भिः साधुवादपुरस्सरं प्रशंसितः। अथान्येद्युः विक्रमविश्वविद्यालये संस्कृतविभागाध्यक्षाः श्रीवेङ्कटाचल-महाभागाः 'मेघदूतं वा मेघसन्देश इति वा मूलमभिधानम्' इति, जबलपुर-विश्वविद्यालयप्राध्यापकः डॉ० राजेन्द्रः त्रिवेदः 'कालिदासस्य निरुक्तयः' इति, सान्दीपनिमहाविद्यालये संस्कृतविभागाध्यक्षः श्रीभगवतीलालराजपुरोहितः 'मेघदूतीययक्षो सामान्ययक्षप्रकृतिश्चे'ति लेखान् पुरस्कुर्वाणा मौलिकगवेषणाभिः पण्डितमण्डलीमावर्जयन्ति स्म। उत्सवेऽस्मिन् संस्कृतरङ्गपीठमधिकृत्य परिसंवादस्तथा च तेषां तेषां रूपकाणामभिनयोऽपि हृदयङ्कषः सञ्जातः।

## दिवङ्गताः स्मरणार्हाः

अस्मिन् वर्षे महामहोपाध्यायाः तान्त्रिकधुरीणाः साहित्यसंस्कृत्यो-रुन्नायकेषु मूर्धन्याः गोपीनाथ-कविराज-वर्याः परब्रह्मणि लीनाः। भारतीय-विद्याया गौरवमय-मानदण्डभूतानां लोकोत्तरचरितानामेतेषां महात्मनां स्मृतौ सागरिका-परिवारः शोकाकुलं श्रद्धाञ्जलिं समर्पयति। अथ च महामहोपाध्यानामभ्यङ्करोपाह्व-श्रीमद्वासुदेवशास्त्रिणां नितरां

शोकजननं निधनं कस्य सचेतसो हृदयं न दुनोतु ? संस्कृत-गौरव-श्रीरेतादृशीं गतिं मा भजेदिति कामयमाना वयं पण्डितवरेण्यानां तेषामात्मिकीं शान्तिं प्रार्थयामः ।

## सूर्यनारायण व्यास-स्मृतिः

पद्मभूषणविरुदविभूषितः, ज्योतिर्विद्याया निकषोपलः, पारङ्गतः शास्त्राणां सूर्य इवास्तङ्गतो वर्षेऽस्मिन् सूर्यनारायणव्यासवर्यः । प्रथितयशसां पण्डितश्रेष्ठानां श्रीमन्नारायणव्यासपादानां महामहोपाध्यायपदवीसमुपेतानामयमात्मज आसीत् । अद्यापि येषाममलधवला कीर्तिर्विद्वत्सु गीयते । महर्षेः सान्दीपनेरन्ववाये समुद्भूतः सान्दीपनिनगरीं प्रखरपाण्डित्यप्रतापेन दीपयन् श्रीमत्सूर्यनारायणो रराज । यश्च भारतानां प्रथमराष्ट्रपतिभिः राजेन्द्रप्रसादमहोदयैः सप्रश्रयमवेक्षितः, काश्मीरगोपालगिरि-बड़ौदा-प्रभृतिराज्यानां राज्ञैश्चाहमहमिकया सादरं सम्मानितः । यस्य चानन्यसामान्यागतिर्ज्योतिषशास्त्रे समजायत, तथापि सर्वविधशास्त्रे योऽबाह्यो बभूव, यं च 'जीवन् विश्वकोश' इति वर्णयामास श्रीमान् इतिहासकारः करन्दीकरः ।

संस्कृत-प्राकृत-हिन्दी-गुजराती-मराठी-प्रभृति-भाषाणां साहित्यं भृशमधीतमनेन महाभागेन । १९४१ तमे वर्षे स मध्यभारत-हिन्दी-साहित्य-सन्मेलनाध्यक्षपदं समलङ्कार । १९४३ तमे च वर्षे अखिलभारतीय-हिन्दीसाहित्यसम्मेलनस्य विज्ञानविभागाध्यक्षो बभूव । विभिन्नपत्र-पत्रिकाणां सञ्चालने सम्पादनेऽपि महदवदानमस्य महाभागस्य बरीवर्ति । हिन्द्यां आ—१९४२-तमवर्षादनेन प्रकाश्यतां नीतं 'विक्रम'—मासिकपत्रं भारते कामप्यभिख्यां पुपोष । भारतीय-विद्यायां शोधपूर्णा नवीना सामग्री बहुशोऽनेन महाभागेन उपस्थापिता । विक्रमादित्य-भोज-कालिदासादीनां विषये तदीयाः स्थापनाः सबहुमानं समाद्रियन्ते । १९३८ ई० वर्षे भारतीयेतिहाससंशोधनसभाया अध्यक्षपदस्थोऽयमुज्जयिन्यामुत्खननकार्यं प्रारब्धवान् । अस्य अनवरतप्रयत्नैर्विक्रमविश्वविद्यालय उज्जयिन्यां स्थाप्यते स्म । कालिदासमहोत्सवस्य चायं महात्मा प्राणा आसन् ।

प्रकृत्या शान्तः विद्यानुरक्तः सन्नप्ययं तेषु तेषु सामाजिक-राजनीतिक-कार्येषु व्यापृतो राष्ट्रं यथाशक्ति असेवत । १९३४ तमे वर्षे सत्याग्रहा-

न्दोलनेऽयं संसक्तः। खादी-संघस्याध्यक्ष्यमप्यसावकरोत्। सिन्धिया-प्राच्यविद्यापुस्तकालया-खिलभारतीयकालिदासपरिषद् - विश्वधर्मसम्मेलन-सर्वधर्म - सम्मेलन - नागरीप्रचारिणीसभा - मालवीलोकसाहित्यपरिषद्-गान्धीनिधि-प्रयागलेखकसंघ-राजधानी-समिति-प्रभृति-संस्थाभिः स्थापकत्वेन अध्यक्षत्वेन सदस्यत्वेन वा तस्य सम्बन्धोऽभवत्। संस्कृतं प्रति सुदृढोऽस्य हृदि अनुरागो विलसतिस्म। काले काले हिन्द्याङ्ग्लप्रभृति-भाषासु लेखनीं चालयन् संस्कृतमाश्रित्याप्यसौ काव्यादीन् व्यरचयत्। तस्य पुण्यस्मृतौ तद्विरचितं गीतिकाव्यं प्रकाश्यते—

## महाकाल-वन्दना

(इयं पण्डितव्यासानामन्तिमा संस्कृतरचना)

जय जय शंकर साम्ब सदाशिव, देव महाकाल !
शिव शिव देव महाकाल !
उज्जयिनीपुरवासिन् तारय भवसिन्धो !
ॐ जय जय महाकाल !
त्रिभुवनपालक पन्नगभूषण ! कलिमलविध्वंसिन् !
शिव शिव कलिमलविध्वंसिन् !
पुरहरसुरपतिपूजित
विक्रम नगरीश !—ॐ जय जय महाकाल !
स्नात्वा पातकिनोऽपि विमले शिप्रासलिले
शिव शिव शिप्रा सलिले
सुरवरदूतैरन्ते, सुरवरदूतैरन्ते
स्वर्लोकं यान्ति, ॐ जय जय महाकाल !
पीत्वा हालाहलमतिघोरं भीत्वा निद्रादीन्
शिव शिव भीत्वा निद्रादीन्
शम्भो पालय सर्वान् शम्भो पालय सर्वान
उज्जयिनीवासिन् !
ॐ जय जय जय महाकाल !

मधुरैर्नूपुरवाद्यैः स्वरतुम्बरुगीतैः
शिव शिव तुम्बरुगीतैः
नृत्यन् शिप्रापुलिने, नृत्यन् शिप्रा पुलिने
जयति भवानीशम् ।
ॐ जय-जय-जय महाकाल !

( एतत्काव्यमस्माभिस्वर्गतपण्डितव्यासपादानां ज्येष्ठतनय-श्रीमद्रश्मिकान्तव्यासस्य सौजन्येन समुपलब्धम् । )



## राजेश्वरशास्त्रिणो दिवङ्गताः

भारतीयविद्यानां महापण्डिताः प्राचीनाचार्य-परम्परा-धुरीणाः काशिराजगुरवो ज्ञान-विज्ञानार्णवैकरत्नानुसन्धायका आत्मगुणावतारा ऋषिकल्पास्ते राजेश्वरशास्त्रिणोऽस्मान् विहाय विबुधानां सङ्गतिमवाप्नो- दिति महती क्षतिः संस्कृत-प्रणयिनाम्। तेषां महाभागानां यशःशरीरं संस्कृतनिष्ठानामादर्शभूतं भारतं भारतीयतां च शाश्वतं रक्षतु' इति कामयते शोकसंविग्नः सागरिका-परिवारः।

# कालिदासरूपकेषु नान्दिश्लोकाः

कु० कुसुम भूरिया

महाकवि-कालिदास-विरचितानि त्रीणि रूपकाणि सन्ति— मालविकाग्निमित्रं विक्रमोर्वशीयमभिज्ञानशाकुन्तलं च। त्रयाणामपि रूपकाणां आरम्भो नान्दिश्लोकाद्भवति। ते श्लोकाः सन्ति—

'एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम्।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः॥'
(मा० अ० १।१)

'वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः॥
(विक्र० १।१)

'या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे काले विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।
यामाहुः सर्वबीजप्रकृतिरिति यथा प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः॥'
(अ० शा० १।१)

अथैतेषां पद्यानां नाट्यशास्त्रीयं विवेचनं क्रियते।

नाट्यशास्त्रस्य पञ्चमाध्याये आचार्यभरतेन रूपकादीनां निर्विघ्नसमाप्त्यर्थं पूर्वरङ्गान्तर्गतं नान्दीति स्तुतिश्लोको निबन्धनीय इति विहितम्।

(अ) नाट्यशास्त्रानुसारं नान्दी आशीर्वादात्मिकी भवति यस्यां देवद्विजनृपादीनां स्तुतिर्विलसति।[1]

कालिदासस्य रूपकाणां नान्दिश्लोकेषु कवेरिष्टदेवस्य शिवस्य स्तुतिर्विद्यते। ते श्लोका आशीर्वचनपूर्णा अपि सन्ति।

(ब) नान्दिश्लोकस्य द्वितीया महत्त्वपूर्णा विशेषतेयं विद्यते यत् तस्य श्लोकस्य पाठः प्रमुखो नटः सूत्रधारः करोति। अपि च, नान्द्यां अष्ट द्वादश वा पदानि भवन्ति।[2]

उपर्युक्त नियमः कालिदासस्य रूपकाणां नान्दिश्लोकेषु न प्रतिफलितः। सर्वप्रथमं तु नान्दिपाठकस्योल्लेख एव रूपकेषु न विद्यते। रूपकेषु सूत्रधारस्तु नान्दिपाठस्य पश्चादेव रङ्गपीठमवतरति यत् 'नान्द्यन्ते सूत्रधारः' इति शब्दैः सूच्यते। नान्दिश्लोकस्य पश्चात् सूत्रधारः प्रविश्य 'अलमतिविस्तरेण' इति शब्दमपि प्रयुङ्क्ते। यदि नाम सूत्रधारो नान्दीं पठति तर्हि कथं स एव 'अलमतिविस्तरेण' शब्दं भाषते—इयं शङ्का त्वसमाधेया विद्यते। यदि सूत्रधार एव नान्दिपाठकः स्यात् तर्हि 'नान्द्यन्ते सूत्रधारः' इति स्थाने 'नान्द्यन्ते पुनः सूत्रधारः' इति उचित आसीत्।

पदनियमोऽपि नाट्यशास्त्रानुरूपः नास्ति। पदसम्बन्धे त्वाचार्याणां मतवैभिन्यं दृश्यते। केचित् श्लोकपादं केचित् सुप्तिङन्तं केचिच्च अवान्तरवाक्यमेव पदं मन्यन्ते।[3]

कालिदासस्य त्रिष्वपि रूपकेषु चतुष्पादमयी नान्दी विराजते। मालविकाग्निमित्रेऽभिज्ञानशाकुन्तले च यथाकथञ्चिदष्टपदानि विद्यन्ते—पदमत्रावान्तरवाक्यमिति न्यायात् किन्तु विक्रमोर्वशीये त्वयं पदनियमः

---

१. आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥ (ना० शा० ५।२४)

२. सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः।
नान्दीं पदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृताम्॥ (ना० शा० ५।१०६)

३. श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे॥ (नाट्यप्रदीप)
(शाकुन्तलटीकायां नान्दिश्लोकस्य विवेचने राघवभट्टः)

पूर्णत उल्लङ्घितः । अष्टद्वादश वा पदानि तत्र कथमपि न भवितुं शक्यन्ते । इत्थं प्रतीयते यदयं पदनियमः कालिदासेन न स्वीकृतः ।

समस्तनान्दिश्लोकैः किञ्चित् काव्यार्थसूचनमपि भवति अतस्ते "पत्रावली"[1] संज्ञिता नान्दिश्लोकाः सन्ति ।

## निष्कर्षः

नान्दिश्लोकानामुपर्युक्तविवेचनया इदं प्रतीयते यत्तेषां श्लोकानां सम्बन्धो मङ्गलाशंसया एवासीत् । नान्द्या उद्देश्यं तु कवेरिष्टदेवस्याराधना एवासीत् । पदगणनाया महत्त्वं किञ्चिदपि नासीत् । रूपकस्यारम्भे नान्दी भवेत् इदमेवोद्देश्यं कवेरासीत् । नान्द्याः पाठकः कोऽस्ति कति च पदानि नान्द्यां विद्यन्ते न इमे महत्त्वपूर्णे तथ्ये ।



१. यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः ।
श्लेषेण वा समासोक्त्या नान्दी पत्रावली तु सा ॥ ( नाट्यप्रदीप )
( शाकुन्तलटीकायां नान्दिश्लोकविवेचने राघवभट्टः )

# मेघदूते नगरोचित्रम्

*( श्रीविश्वनाथ मुखोपाध्यायः )*

कस्य वा नास्ति मुग्धं मनः स्मृत्वा नगरीवर्णनं[1] मेघदूतस्य ? तत्रास्ति पूर्वमेघे उज्जयिनी, अलका चोत्तरमेघे।

अलकायामस्ति यक्षगृहमतः प्रवासिनः विरहिणश्च यक्षस्य मनसि स्वदयिता-सहितेयं नगरी नगर्य्युत्तमेव प्रतिभाति मेघसमीपे तथैव च वर्णिता, अन्यत्र खलु आविर्भूतवाणीवरतनयधन्या महाकालवसति-पवित्रीकृतमहीरत्नोज्जयिनी गौरवेणालकाप्रतिस्पर्धिनीव प्रतिभाति। ननु द्वयोर्मध्ये का नाम गरीयसीत्येतद् विचारसहम्—तदेवात्र विचार्यते।

सत्यं कालिदासलेखनी यत्रैव प्रसरति तत्रैव भासते परमा कापि रमणीयता—नगरीद्वयवर्णनेऽपि चारुत्वस्य नास्ति सुमहदन्तरमिति, तथापि वर्णनवैशिष्ट्यानुधावनेन कुत्र लसति कवेः समधिकः समुल्लास-स्तत् स्पष्टमनुभूयते नास। भवतु, प्रथमतस्तावदलकावर्णनमालोच्यते।

यद्यप्युत्तरमेघे कृतमलकावर्णनं तथापि दूतगन्तव्यकथनावसरे पूर्वमेघ एवास्याः 'गन्तव्या ते वसतिरलका नाम यक्षेश्वराणा'मित्यादिना समासतः समुल्लेखो दृश्यते—यत्रोक्तं सौधमयी चेयमलका धनपति-वसतिरतः रत्नमयी च। दीप्तिमयी चेयं नक्तं हरशिरश्चन्द्रचन्द्रिकयातो-ऽस्याः दिव्यं चारुत्वमप्यस्तीति।

रामगिरित उत्तराशां प्रस्थितस्य मेघस्य अलकायाः प्राक् पतति

---

१. नगरी = नग इव प्रासादादयः सन्ति यत्र ( सा )—शब्दकल्पद्रुमः पृ० ८७। तु :—नगरीलक्षणमुक्तं रघुनाथेन—

देवतायतनैश्चित्रैः प्रासादापणवेश्मभिः।
नगरं दर्शयेद्विद्वान् राजमार्गैश्च शोभनैः॥

( कादम्बरी—हरिदासीया टीका पृ० १८३ )

तु :—तत्र सिद्धान्तकौमुद्यामुदाहरणम्—

'बहुपरिव्राजिका नगरी' इति।

कैलासः। तत्र नानाचेष्टैर्विहरमाणस्य यक्षद्रुतस्य नयनमार्गे मार्गायते स्वर्गमर्त्ययोरन्तरालवर्त्तिनी कैलासाङ्के निषण्णा स्वाधीनपतिकेव स्रस्त-दुकूलाऽपि पवित्रं गङ्गादुकूलं वसाना अलका, या प्रावृषि अभ्रवृन्दमेवा-लकपुञ्जमिव धारयति। मेघकाले नवोन्नेयमलकसज्जा तस्मादत्रास्ति मेघस्य गमनप्रीतिरिति। अपि चाभ्रंलिहसौधैरियं सर्वथा मेघरूपै-वाभाति। नित्यानन्दमयीयं नगरी यत्रास्ति सर्वर्त्तुभवः कुसुमहासः। कविनोक्तं 'आनन्दोत्थं नयनसलिल' मित्यादि। अपरञ्च 'नान्यन्यस्मात् प्रणयकलहाद् विप्रयोगोपपत्ति' रित्यहो! विरहपातः दारुणोऽस्यैव यक्षस्योपरि। तथापि सर्वथा विलासवतीयमलका यस्यां यक्षा उत्तमस्त्री-सहायाः पिबन्ति कल्पवृक्षप्रसूतं मधु, केऽपि विशन्ति वैभ्राजं समम्प्स-राभिः। कामिन्यश्चात्राभिसरन्ति दिव्याभरणभूषिताः। नायिकाश्चान्त-मुग्धाः व्रीमूढाः नायकरागाकृष्टाः रतिविलासमेव तन्वन्ति। महेशभयान्ना-कर्षति चापं कुसुमेषु परं वनिताभ्रूभङ्गैरमोघास्तत्रास्य वाणमोक्षाः। बालांश्चात्र देवा अपि कामयन्ते, किमप्यधिकं सर्वमबला मण्डनमत्र कल्पवृक्षेणैव प्रसूयते।

चारुशिल्परसिकानां यक्षाणां प्रतिगृहं शोभन्ते चित्रपटाः येष्वहो! अन्याः जलमुचो मेघेन द्रष्टव्याः। अपि च नक्तं चन्द्रकान्तकान्तिर्दृश्यते मेघापगम एव। सत्यं नित्यज्योत्स्नाप्लावितायामलकायां नास्तिमेघ-स्थितिः शाश्वतिकी। इत्थमैश्वर्ये सौन्दर्ये, विलासे, सर्वथा अलकेय-मत्युत्तमेति।

अन्यत्र खलु दृश्यते—उज्जयिनी मर्त्यनगरी, विशालापरनाम्नी च। पूर्वमेघे तस्याः वर्णनमस्ति। राजधानीयमवन्त्याः। उत्तरपथमनुसरतः मेघस्य ऋजुमार्गे नेयमुज्जयिनी पतति, तथापि मेघं नयति तत्रायं कविः—'वक्रः पन्था यदपि भवतः' इत्यादिना। अपि च वर्त्तते निर्विन्ध्या नाम तटिनी उज्जयिनीमार्गे, मेघोदय एवास्या विरहावसानमित्यस्ति कारणान्तरं मेघस्योज्जयिन्याः सरणिसरणे।

केयमुज्जयिनी? 'दिवः कान्तिमत् खण्डमेकम्' इति मर्त्येऽपि स्वर्ग-रूपा सा। अद्याप्यत्र ग्रामवृद्धाः स्मरन्ति वत्सराजवार्त्तायाः समृद्धा चेयं 'विशाला' इत्यन्वर्थनाम्नीराजतेतराम्।

अलका खलु नायकाङ्के निषण्णा नायिकेव, मेघस्तु नायक इवोज्जयिन्याः सौधोत्सङ्गे सीदति सत्यं मेघं प्रति परमा प्रीतिरस्ति उज्जयिन्याः, अत्रैव विद्युच्चकिताः रमण्यः विद्युच्चञ्चलैः कटाक्षैः दरीदृश्यन्ते मेघं यदिधनाम जनयति नयनसार्थक्यं मेघस्य। शिप्रावेष्टितायामुज्जयिन्यां सौधविहारी मेघः कदापि प्रासादाभ्यन्तरं यात्यध्वखेदनयनाय, यत्रास्ति तस्मै चित्तविनोदकरः भवनशिखिनां नृत्योपहारः। केशसंस्कारधूपैरत्र देहपुष्टिरपि सम्भाविता भवति मेघस्य, नयति दृष्टिसुखं ललितवनिता पादरागाङ्कमिति। स्वकान्त्या नीलकण्ठकण्ठछविमनुकुर्वाणोऽयं जातश्रद्धैः प्रमथैः वीक्ष्यमाणः चलति चण्डीश्वरमन्दिरम्। एतत्तु पुण्यार्जनं नाम मेघस्य।[1] सान्ध्यं रक्तं तेजः तनौ धारयन् महाकालपश्चाद्दण्डायमाणः महाकालमूर्त्तेरभिनवतामापादयन् शिवभक्तरूपेण भवान्याश्चापि प्रसादं लभतेऽयं मेघः। महाकालसन्निधाने सायमार्त्तिकवादनं स्वगर्जनेनैव कृत्वा गर्जनस्य सफलतामापादयति च। विद्युत्स्फुरणे इमा लोलापाङ्गाः रमण्यस्तथातिकसमयेऽपिदैशिकनृत्यरताः वाराङ्गनाः सुखकरान् वर्षाग्रबिन्दूनवाप्य मेघमुद्दिश्य सानुरागान् कटाक्षान् पातयन्ति। अत्रापि मेघश्चेन्न रमते वञ्चितः सः।

इत्थमुत्तीर्णायां सन्ध्यायां नक्तं नरपतिपथे निवृत्तालोके रमणीनामभिसरणमार्गं दर्शयति विद्युत्प्रभयेति। ततो श्रान्त्या विद्युद्दयितया भवनवलभौ यापयति रात्रिमेवं प्रातः कालादारभ्य रात्रिं यावत् मेघविहारः वर्णितः।

दृश्यते मेघः स्वच्छन्दविहारी खलु उज्जयिन्याम्, परमलकायां कर्त्तव्यस्मरणं प्रतिपदमेव। उज्जयिन्यां मेघः कदाचित् सौधोत्सङ्गे, कदाचित् गृहेषु, कदाचिच्च भवनवलभौ सीदति, लभ्यते तेनैवात्र भवान्याः प्रसादः। श्रद्धाः प्रमथानां, नृत्योपहारः भवनशिखिनां, सार्थक्यं गर्जनस्य, पुष्टिर्देहस्य, लोलापाङ्गविक्षेपाः रमणीनामेतत् सर्वं मेघेनात्र लभ्यते।

---

१. उक्तञ्चस्कान्दे—'आकाशे तारकं लिङ्गं पाताले हाटकेश्वरम्।
मर्त्यलोके महाकालं दृष्ट्वा काममवाप्नुयात्॥'
(सञ्जीवनी टीका श्लोक, ३३)

अत उज्जयिनी मेघसमीपे परमाकर्षणं तन्वन्ती विद्यते—यस्मात् कारणात् उत्तरपथमुत्सृज्यापि मेघस्य गतिरिति वक्तुं युज्यते उज्जयिनी उज्जयिनीव[1] प्रतिस्पर्द्धिनी अलकायाः नातिरिच्यते गरिम्णा इमां कापि नगरी त्रिभुवनस्य यतोऽत्रैव 'त्रिभुवनगुरोर्धामचण्डीश्वरस्ये'ति दिक्।



१. स्वकान्त्या स्वसमृद्ध्या वा उत्कर्षेण जयति सर्वा नगरीरित्युज्जयिनी
(कादम्बरी—पृ० १८३)

तु :—कथासरित् सागरे—'यस्यां वसति विश्लेशो महाकालवपुः स्वयम्।
शिथिलीकृतकैलासनिवासव्यसनो हरः॥'
एतेन कैलासादप्युत्कृष्टस्थानमुज्जयिनीति ध्वनितम्॥
(कादम्बरी टीका—हरिदाससिद्धान्तवागीशः पृ० १८८)

# पञ्चीकरण-प्रकारः

बाबूलाल शर्मा

मधुसूदन सरस्वती-महोदयैः शङ्कराचार्यविरचितदशश्लोकीस्थाष्टमश्लोकस्य व्याख्यायां वेदान्तसम्मतपञ्चीकरणप्रक्रिया प्रदर्शिता, यस्या मूलं शङ्कराचार्योक्तम् उपलभ्यते—

'पञ्चानां भूतानामेकैकं द्विधा विभज्य स्वार्ध-
भागं विहायार्धभागं चतुर्धा विभज्येतरेषु ।
योजिते पञ्चीकरणं मायारूपदर्शनं अध्यारोपा-
पवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ॥'[1] (पृ० १४)

सुरेश्वराचार्यैरपि पञ्चीकरणवार्तिके उक्तम्—

[2]"पृथिव्यादीनि भूतानि प्रत्येकं विभजेद्द्विधा ।
एकैकं भागमादाय चतुर्धा विभजेत्पुनः ॥ ८ ॥
एकैकं भागमेकस्मिन्भूते संवेशयेत् क्रमात् ।
ततश्चाकाशभूतस्य भागाः पञ्च भवन्ति हि ॥ ९ ॥
वाय्वादिभागाश्चत्वारो वाय्वादिष्वेवमादिशेत् ।
पञ्चीकरणमेतत्स्यादित्याहुस्तत्त्ववेदिनः ॥ १० ॥'

सुरेश्वरवार्तिकस्य दशमे पद्ये पठितस्य 'तत्त्ववेदिनः' इति पदस्य अवतरणिकायां पदव्याख्याने च आनन्दगिरिणा पञ्चीकरणविषये शङ्कासमाधाने उपस्थापिते—

[3]"अत्र केचिद्वाचस्पतिमिश्रमतानुसारिणः—पञ्चीकरणं यद्यपि सम्प्रदायसिद्धं तथापि युक्तिविधुरत्वात् त्रिवृत्करणमेव आदरणीयम् । पञ्चीकरणपक्षे पृथिव्यादिभागानामाकाशवाय्वोः प्रवेशे रूपवत्त्वान्महत्त्वाच्च तयोश्चाक्षुषत्वं स्यात् । यद्यपि आकाशादि—भागानामाधिक्यादि-

१. पञ्चीकरणम्, गुजराती प्रेस, बम्बई, १९२०

२. पञ्चीकरणम् पृ. १४

३. पञ्चीकरणम् पृ० १५

तरभागानां च स्वल्पत्वादधिकेन स्वल्पत्वाभिभूतत्वात्, 'वैशेष्यात्तु तद्वादस्तद्वादः' ( ब्रह्मसूत्र २. ४. २२ ) इति न्यायेन चाक्षुषत्वाभावः तर्हि आकाशादौ पृथिव्यादिभागकल्पना व्यर्था, तेषां व्यवहारागोचरत्वात्। अथापि श्रुतिसिद्धत्वादेव कल्प्यत इति यद्युच्येत तथापि त्रिवृत्करणमेव श्रुतिसिद्धम्। 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति श्रुतेर्न पञ्चीकरणं तत्र श्रुतेरभावादित्याहुस्तत्राह इत्याहुस्तत्त्ववेदिन इति। श्रुतिस्मृतिन्यायवेदिन इति। श्रुतिस्मृतिन्यायवेदिन इत्यर्थः। श्रुतिस्तावदाथर्वणे—'पृथ्वी च पृथ्वी मात्रा च' इत्यादिना स्थूलसूक्ष्मभेदं दर्शयति। स्थूलत्वं च पञ्चीकृतत्वमेव, अन्यस्यासंभवात्, 'पञ्चीकृतानि भूतानि स्थूलानीत्युच्यते बुधैः' इत्युक्तत्वाच्च। स्मृतिरपि स्कान्दे ब्रह्मगीतासु 'पञ्चीकृत्य शिवाज्ञया' इत्यादिना।'

आचार्यवाचस्पतिना उक्तम्—' यद्यप्याकाशाद्या भूतसृष्टिः, तथापि तेजोऽबन्नानामेव त्रिवृत्करणस्य विवक्षितत्वात्तत्र तेजसः प्राथम्यात्तेजः प्रथममुक्तम्'—अस्या एव पङ्क्तेः स्पष्टीकरणे कल्पतरुकारेण उक्तम्—

[2]"सम्प्रदायाध्वना पञ्चीकरणं यद्यपि स्थितम्।
तथापि युक्तियुक्तत्वाद्वाचस्पतिमतं शुभम्॥
पृथिव्यबनलात्मत्वं गगने पवने च चेत्।
रूपवत्वमहत्त्वभ्यां चाक्षुषत्वं प्रसज्यते॥
अर्धभूयस्त्वतः क्षित्याद्यविभावन कल्पने।
व्यवहारपथा प्राप्ता मुधा पञ्चीकृतिर्भवेत्॥
अनपेक्ष्य फलं वेदसिद्धेत्येषेष्यते यदि।
त्रिवृत्कृतिः श्रुता पञ्चीकृतिर्न क्वचन श्रुता॥

अयं छान्दोग्योपनिषदो मन्त्रः—'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' ( ६. ३. ३ ) तत्र पृथिवीजलतेजसां त्रिवृत्करणं तत् त्रिवृत रज्ज्वा सदृशं नास्ति या समानाकारत्रिसृभिः रज्जुभिः निर्मीयते, किन्तु गुणप्रधानभावं निर्वहन् पृथिवी-जल-तेजांसि द्विधा विभज्य द्वितीयार्द्ध भागं पुनः द्विधा विभज्य अन्येषां प्रथमार्द्धेषु निःक्षिपति। यथा आनन्द-

१. ब्रह्मसूत्रशाङ्करभाष्यभामती, निर्णयसागरप्रेस, १९३८, पृ० १३८
२. ब्रह्मसूत्रशाङ्करभाष्यभामती कल्पतरु

गिरिणाप्युक्तम्—[1] 'प्रथममेकैकां देवतां द्विधा द्विधा विभज्य पुनरेकैकं भागं द्विधा द्विधा कृत्वा तदितरभागयोर्निक्षिप्य त्रिवृत्करणं विवक्षितम् ।'

व्याख्यातृणां त्रिवृत्करणप्रकारोऽयं औपनिषदेन मन्त्रेण विवक्षितो न वा इति तत्त्वं निश्चेतुं उक्त मन्त्रस्य अवशिष्टभागस्य दृष्टिगोचरीकरणं परमावश्यकम् । स तु इत्थम्—

'तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा तु खलु सोम्ये मास्तिस्रो देवतास्त्रिवृदेकैका भवति तन्मे विजानीहीति ।।' ( ६. ३. ४ )

'यदग्ने रोहितँ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ।।' ( ६. ४. १ )

यद्यपि मन्त्रेऽस्मिन् वाचारम्भण' इत्यनेन पृथिव्यादि भूतवर्गस्य प्रतीत्यसमुत्पन्नतायां दृष्टौ समयातायां मिलिन्दराजं प्रति भिक्षुनागसेनेन प्रतिपादितो रथवृत्तान्त झटिति दृष्टिगोचरताम् अञ्चति । उपक्रान्तेन औपनिषद-मन्त्रेण न हि सा प्रक्रिया स्मार्यते या अद्वैतवेदान्तिभिः विशेषसम्मिश्रणप्रक्रिया प्रख्यापिता । 'त्रिवृता यूपं परिवीय आग्नेयं पशुमुपाकरोति' इत्यादि संहिता वाक्यप्रयोगेषु यद्यपि त्रिवृच्छब्दस्य त्रिसृभिस्तन्वीभी रज्जूभिर्निर्मापिता स्थूला रज्जुरित्ययं अर्थः गृह्यते, तथापि छान्दोग्योपनिषद उक्त मन्त्रे 'त्रिवृतं त्रिवृतं एक एकां' इत्यनया उल्लेख भङ्ग्या इदं स्पष्टं भवति यत् प्रत्येकं त्रिवृत्करणं क्रियते न तु त्रिभिरेकीकरणं त्रिवृत्करणमुच्यते । त्रिवृत्कृताग्नौ यच्छुक्लं रूपं तदग्नेमौलिकं तत्त्वं यज्जल-पृथिवीरूपाबद्धमस्ति । यद्यग्नेः किमपि स्वरूपविशेषं न प्रदर्श्य केवलं पररूपावलम्बितं तस्य मिथ्यात्वेन किमपि रूपं प्रदर्शितं स्यात् तदावश्यमेव प्रतीत्यसमुत्पादवादशैली मूर्धानम् उन्नमयेत् । अत्रत्यं मिश्रिततत्त्वं केवलं पराश्रितं निस्तत्त्वं नास्ति किन्तु तस्यापि स्वकीयं किमपि स्वरूपं निश्चितम् अस्ति अतः सम्मिश्रणस्य विशेषप्रक्रिया या आचार्यपरम्परानुगतास्ति तामेव आधारीकृत्य त्रिवृत्करणं पञ्चीकरणं च उपपाद्यते । श्रीमधुसूदनसरस्वतीमहोदयैस्तस्या एव प्रदर्शनं सिद्धान्तबिन्दौ कृतमिति ।

१. छान्दोग्योपनिषत्, आनन्दाश्रमप्रेस, पृ० ३४०

## सप्तदशशतकस्य संस्कृतरूपकाणि

*( रविनन्दन त्रिपाठी )*

## मृगाङ्कलेखानाटिका

### कविपरिचयः

मृगाङ्कलेखानाटिकायाः[1] प्रणेता त्रिमल्लदेवस्य सूनुः विश्वनाथदेवो वर्तते। कविरयं गोदावरीपरिसरस्थितं धारासुरनगरं विहाय काशीमध्युवास। यतो हि तदानीं भारतस्य सर्वेभ्यो भागेभ्य आगत्य विद्वांसः कवयः काशीमलङ्कुर्वन्ति स्म।

कविना नाटिकेयं १६०७ खिष्टाब्दे प्रणीता। नाटिकायामादौ शिवस्तुतेर्वर्तमानत्वात् काशीविश्वनाथमहोत्सवेऽस्या अभिनयाच्च कविः शैव आसीदिति सम्भाव्यते।

मृगाङ्कलेखाभिनयावसरे नानाप्रदेशादागताः सामाजिकाः प्रेक्षका आसन्। यथा—

एते वङ्गकलिङ्गसिंहलवलत्तैलङ्गभूलिङ्गगा-
श्चञ्चद्द्राविडगौडचोलविलसत्काश्मीरसौवीरजाः।
अन्ये लाटवराटभोटतटगाः कर्णाटचेद्युद्भवाः
केऽप्यन्ये कविवाक्यकौशलकलाविज्ञा महाराष्ट्रजाः॥ १.४॥

### कथावस्तु

कलिङ्गानां नृपतिः कर्पूरतिलको मृगयावसरे रूपसम्पत्त्या महिषीं विलासवतीमतिशयानां राजकुमारीं मृगाङ्कलेखामवलोकयामास। प्रथमावलोकनेनैव नृपस्तां प्रत्युत्सुको बभूव। तत आरभ्य तदवस्था अन्यथैव सञ्जाता।

यथा—

कर्पूरो दहनायते कुमुदिनीनाथोऽपि सूर्यायते
हारोऽस्या भुजगायते मलयजो वातः कृतान्तायते।

---

1. नाटिकायाः प्रकाशनं सरस्वतीभवनप्रकाशनमालायाः २६ संख्यायां सम्पन्नम्।

गानं कर्णविषायते मृगमदालेपोऽपि भस्मायते
तस्या एव विधूदये प्रतिदिनं दृक् चन्द्रकान्तायते ॥ २. ५॥

अपरतो दानवः शङ्खपालोऽपि तां कामयमानो हर्तुमानस उपयुक्त-समयं प्रतीक्षमाण आसीत्। कलिङ्गाधिपतिर्भगवत्याः सिद्धयोगिन्याः प्रभावेण मृगाङ्कलेखां स्वकीयान्तःपुरे समानयत्। तत्र सा विलासवत्याः सखीभूता उवास।

वसन्तसमये विदूषकेण सह परिभ्रमन् राजा मदनोद्याने लवङ्गिका-कलहंसिकाभ्यां सह वसन्तश्रियं समवलोकयन्तीं तामपश्यत्। तत्र नायको यावत् प्रेयसीं मिलति तावदेव सिद्धयोगिन्या आज्ञानुसारं सोऽन्यत्र गच्छति।

नायिकापि नायकवियोगे मदनातङ्किता भवति। नायकस्तस्याः सखीभिः समं वार्तालापं शुश्रूषुस्तत्समीपे लतानिलीनस्तिष्ठति। तस्या अपि तादृशीं मन्मथाकुलां वार्तां श्रुत्वा तत्सम्मुखीनस्तामालिलिङ्ग। तदानीमेव नायिका वसुमतीसंदेशानुसारं मृगाङ्कपूजायै गच्छति।

दानवश्शङ्खपालोऽपि मृगाङ्कलेखासक्तस्तां हृतवान्। श्मशाने कालीमन्दिरे भगवतीमर्चयित्वा यावत्तस्याः पाणिग्रहणमिच्छति तावदेव तामन्विष्यन् भूपालस्तत्राजगाम।

अथ च भूपाल-दानवौ क्रोधान्धौ अन्योन्यमाह्वयतः। दानवः खड्ग-मानेतुमन्यत्र जगाम, किन्तु राजतो भीतो न पुनर्बहिर्न्यवर्तत। नायको नायिकां परिरभ्य तामन्यतोऽनयत्।

विवाहात् प्राङ् नृपालो मृगाङ्कलेखायाः पित्रे सर्वं वृत्तान्तजातं दूत-द्वारा न्यवेदयत्। कन्याया जीविते निराशः पिता तस्याः प्रवृत्तिमुपश्रुत्य तत्राजगाम। नायकस्तमवलोक्याब्रवीत्—

ईदृशी रूपसम्पत्तिरितरस्मात् कथं भवेत्।
नोदेति कैरवानन्ददायिनी चन्द्रिका रवेः॥

तयोर्विवाहात् सर्वे मुमुदिरे। अस्मिन्नेव समये राज्ञो गजराजोऽम्बष्ठं हत्वा राजमार्गं उन्मत्तं विचचार। राजा तं नियन्तुं यावदुपक्रामति तावदेव शङ्खपालभ्रातरं वल्गन्तं पश्यति। संयोगात् स गजेन्द्रेणैव हतः। दानवभ्रातरमुद्दिश्य मुक्तो राज्ञः शरो मोघं गतः।

## मदनमञ्जरी-महोत्सव।

### कविपरिचय:

मदनमञ्जरीनाटकस्य[१] रचयिता विलिनाथश्चोलप्रदेशस्थस्य विष्णुपुराभिधानस्याग्रहारस्य विद्वन्मूर्धन्यस्य यज्ञनारायणस्य वंशोद्भव आसीत्।

यज्ञनारायणो विजयनगराधीशस्य ( १५३०-१५४१ खीष्टाब्दं यावत् ) वरेण्यः सभापण्डित आसीत्, अतो यज्ञनारायणप्रपौत्रस्य कवेः प्रतिभाविलासस्य समयः सप्तदशशतकस्य प्रथमचरणे भवितुमर्हति।

### कथावस्तु

पाटलपुरस्य राजा चन्द्रवर्मा शिवप्रीत्यै तपस्यन्तं पञ्चालराजं भास्करं न्यगृह्णात, तद्राज्यञ्चाधिकृतवान्। तत्रैव तपस्यन्ती—प्रज्ञावतीतिनाम्नी परिव्राजिकापि तेन निगृह्य दासीकर्मणि नियुक्ता। भक्तवत्सलाय शिवायैतन्नारोचत, अतः स चन्द्रवर्माणं दण्डयितुं न्यश्चिनोत्।

अथ च पुष्करपुरभूपालस्य राजर्षेर्धर्मध्वजस्य जायायां हैमवती अवततार। तां चन्द्रवर्मा प्रसह्य पत्नीरूपेण प्राप्तुं प्रातिष्ठत। तद्रक्षणाय शिवो राजशिखामणिर्भूत्वा, कुबेरो विदूषको भूत्वा, महाकालादयश्च शिवगणा मन्त्रिपदमङ्गीकृत्य रथारूढाः पुष्करपुरं प्रति प्रातिष्ठन्त।

मार्गे सर्वान् विहाय विदूषकद्वितीयश्शिखामणिराश्रमं प्रविश्य तत्र मनोहारि सङ्गीतकं श्रुत्वा मन्त्रमुग्धः समजनि। विदूषकेणोक्तं—कन्यारत्नं तवैवाङ्गभूषणं भविष्यतीति। नायकस्य कृते नायिकेयं जीवितसर्वस्वमासीत्। यथा—

> अङ्गेषु चन्दनासक्तिरक्ष्णोरमृतवर्तिका।
> आनन्दपरिवाहेण हृदये चाभिसेचनम्॥

गायनानन्तरं मदनमञ्जरी कन्दुकेन चिक्रीड। कन्दुकविलासे तस्याः सर्वाङ्गिकं सौष्ठव वीक्ष्य नायकः तत्परवशः समक्षमागतः। तदापि सा क्रीडां न परित्यक्तवती, परन्तु तत्सान्निध्ये साप्यस्वतन्त्रा सती स्वेदार्द्रशरीरा संवृत्ता, सकटाक्षञ्च नायकमवलोकयामास। सखीभिश्चिन्तितं

१. अस्य हस्तलिखिता प्रतिः सागरविश्वविद्यालयस्य पुस्तकालये वर्तते।

क्रीडातिशयादियं श्रमजलक्लिन्नकलेवरा सञ्जाता, अतस्ताभिर्गृहगमनाय निवेदितम् । सखीनिवेदनमुपश्रुत्य सोवाच—इह तु समवलोकनाय नायकोऽयं विराजते। ततः सर्वे सरसवार्तालापव्यापृतास्तत्रैव व्यलसन्। राजा तस्याः सङ्गीतं प्राशंसत । यथा—

सौवर्णे यदि कुसुमे सौरभसम्पत्समागमोऽपि स्यात् ।
अस्यामभिरूपायां साम्प्रतमेतत्तदा हि सङ्गीतम् ॥

ततो वार्ताप्रसङ्गेन नायिकासखीभिः तस्या अद्भुतं जन्मवृत्तान्तं राज्ञे निवेदितम् । तद्यथा—कन्याजन्मकामोऽस्याः पिता धर्मध्वजः पुष्करिण्याः सविधे तपस्तताप तत्र कात्यायनो नाम मुनिः कोकनदपत्रोपरि कन्यामिमामवलोकितवान् । अथ च इमामानीय स तपस्यते नृपाय दत्तवान् । स च कृतकृत्य इमां राज्ञै प्रादात् । सैवेयं मदनमञ्जरी नाम।

एतस्मिन्नेवावसरे नीराजनार्थं मदनमञ्जरी मात्रा समाहूता। तेन सर्वे ससंभ्रममुत्तस्थुः । नायिका नायकं ननाम । मम पुण्योदयेन भवत्याः पुनर्दर्शनं भविष्यतीति नायकः संदिशन्निव प्रत्युवाच ।

तस्या वियोगमसहमानो नायको विदूषकेण 'अचिरमेव भवानिमां लप्स्यती'ति सान्त्वितः स्वशिविरं संन्यवर्तत ।

चन्द्रवर्मणश्चण्डतयाभिभूतो धर्मध्वजो भवत्प्रस्तावं स्वीकृत्य मदनमञ्जरीं भवते दित्सुरस्तीति राजशिरोमणये विदूषको न्यवेदयत्। चन्द्रवर्मणो दासीभूता प्रज्ञावत्यपि मदनमञ्जरीं राजशिखामणिना सङ्गमयितुं प्रापयत ।

चन्द्रवर्मणः कोशगृहे सिद्धमणिरासीत् । तत्प्रभावेण सोऽजेयोऽभूत्। कोशागारस्य गोप्ता मित्रगुप्त आसीत् ।

चन्द्रवर्मणो गणिका चन्द्ररेखा मदनमञ्जर्या रूपसम्पदा धर्षिता, शूरमर्दननामा सेनापतिश्च तं तस्यै प्रैरयेताम् । प्रज्ञावत्या योजनानुसारं राजशिखामणिः स्वसचिवं कृतमुखं शूरमर्दनस्य मर्दनाय सिद्धमणेश्चोपलब्धये समाज्ञप्तवान् ।

राजशिरोमणेः कृते समग्रं जगन्नायिकामयमासीत् । स कदाचिन्नायिकया सह स्वप्ने प्रणयव्यापारमाप्तवान् । ततः प्रभृति तत्कृते निखिलं जगत् तां विना अन्यथैव सञ्जातम् । तत्कृते उद्यानेनासिपत्रवनायितम्

किसलयैः क्षुरिकायितम्, मकरन्देन क्षाररसायितम्, पुष्परजसा च स्फुलिङ्गायितम्।

अतः पश्चान्नाटकमिदं पूर्णतया कपटव्यापारसङ्कुलं वर्तते। कृतमुखाभिधानः सचिवो राजानं प्रणम्य विज्ञापयामास ह्यस्तनेऽहं मदनमञ्जरीं प्रज्ञावतीञ्चापश्यम्। प्रज्ञावत्या मते स्थितोऽहं सुरङ्गां निर्माय चन्द्रवर्मणः कोशागारं प्राविशम्। तत्र शयानो मित्रगुप्तो जागर्ति स्म। परन्त्वहमुत्तरतो गत्वा मणिपेटिकां गृहीत्वा सुरङ्गातो बहिरागच्छम्। मित्रगुप्तोऽपि भूरि धनं संगृह्य गणिकायै चन्द्रलेखायै प्रायच्छत्। ततः शूरसेनोऽहं त्वां राजप्रवञ्चनपरां दण्डयामीति कथयित्वा गणिकाया नासिकां कर्णौ चाच्छिनम्। तत इमं सर्वं वृत्तान्तं सद्यः प्रज्ञावत्यै न्यवेदयम्। धावत धावत। एष भूताविष्टो ममात्मजः पलायते। गृह्यतां गृह्यतामयमिति सा चुक्रोश। रक्षका मामन्वधावन्। अहं च जीर्णमन्दिरे मणिपोटिकां निक्षिप्य जवादधावम्। एवमहं तया रक्षितः।

अपरेद्यू राजा चन्द्रवर्मा प्राणसमां गणिकां छिन्नकर्णनासां दृष्ट्वा तामपृच्छत्। तया निवेदितं यच्छूरमर्दनो मित्रगुप्तं ममानुजया सहावलोक्य तां जघान। मां चेदृशीमवस्थां प्रापयामास। श्रुत्वैतद्राजा सेनापतेर्वधं प्रतिज्ञातवान्। एवम्प्रकारेण तस्य चित्तवृत्तिर्मदनमञ्जरीतः पराङ्मुखा बभूव।

निवेद्यैनं समग्रं वृत्तान्तं कृतमुखो व्यजिज्ञपत्—अद्य प्रज्ञावती मदनमञ्जरीं महेश्वरवनं प्रेषितवती, अतो भवानपि तत्रैव वर्तस्व। प्रेमियुगलं तत्र परस्परममिलत्। ततो यावद्राजा गान्धर्वविवाहं प्रस्तौति तावदेव नेपथ्ये श्रूयते—

'अये राजहंस! मुञ्च मुञ्चेदानीं पद्मिनीम्। तस्या मुखसरसीरुहप्रसादापसरणाय समागता सायन्तनी सन्ध्या'।

अथ च मदनमञ्जरी गच्छन्ती साकूतं संदिदेश—'तव सङ्गेन लतागृह! विहृतः खल्वद्य सन्तापः। यथा स पुनरपि न भवेत्तथा यतनीयम्। त्वं हि मे शरणम्।'

मदनमञ्जरी मदनातङ्केन पीडिता समपद्यत। वीक्ष्यैतत् कञ्चुकी चिन्तितोऽभूत् कदाचिद् धर्मध्वजस्य परिचारिका राजमणिना लिखितं मदनमञ्जर्याश्चित्रं चन्द्रवर्मणे प्रायच्छत्।

भगवती प्रज्ञावती चन्द्रवर्मणे निवेदितवती यद् भवतां सम्बन्धी सौराष्ट्रभूपालः सत्यवर्मा समागतोऽस्ति। तस्य सविधे खड्ग एको वर्तते, यस्य प्रभावेण तदधिकारी त्रिलोकीशः पूर्णमनोरथश्च भवति। भवांश्च तस्य खड्गेन स्वकीयं खड्गं विनिमयतु। इतश्च प्रज्ञावतीमतमनुसृत्य विदूषकः सत्यवर्मवेषं दधार। स चन्द्रवर्मणा सह सङ्गतः प्रज्ञावतीनिर्दिष्टोपायैः खड्गस्य विनिमयं व्यधात्। प्रथमं तौ परस्परं मिलित्वा शिष्टाचारमाचेरतुः। ततो द्वावपि स्वं स्वं खड्गं प्राशंसेताम्। चन्द्रवर्मणा खड्गविनिमयस्य प्रस्तावः प्रस्तुतः। सत्यवर्मणा तत्रानिच्छा प्रकटिता। चन्द्रवर्मा सत्यवर्मणश्चरणयोः स्वकीयं खड्गं धृत्वा तस्य चरणाववन्दत। एवं हि खड्गयोर्विनिमयः सम्पन्नः। तस्य प्रभावशीलं खड्गमादाय कृतकृत्यः सत्यवर्मा तं खड्गं राजशिरोमणये प्राददात्।

अनन्तरं कृतमुखो दैवज्ञो भूत्वा चन्द्रवर्माणं पुनरमिलत्, राजानं वीक्ष्यावोचच्च—'भवान् कस्मैचिच्चित्रगताय श्रेष्ठरूपाय स्पृहयति। अहं तद्वदेव सुन्दरं भवतो रूपं रचयिष्यामि। भवांस्यावन्मया सह विमुक्तेश्वरदेवतायतनं चलतु। स खलु दिष्टाद्विनष्टधीस्तत्र गतः। तस्मिन् स्थाने प्रथमत एवोपस्थितः राजशिखामणिः तस्य शिरश्छित्त्वा वह्नौ हुतवान्।

अतः परं चन्द्रवर्मैव रूपपरिवर्तनेन राजशिखामणिर्जात इति लोकधारणां समुत्पाद्य तस्यान्तःपुरे राजशिखामणिः स्थापितः। सत्यवर्मरूपधारी विदूषकोऽपि तत्रागत्य न्युवास। महोत्सवेऽस्मिन् सर्वे वन्दिनः कारातो विमुक्ताः। एतद्योजनानुसारं पुष्करपुरे समानीतो वन्दीभूतः पराक्रमभास्करो नाम राजा स्वतन्त्रः कृतः। प्रज्ञावतीदं सर्वं रहस्यं राज्ञे धर्मध्वजाय निवेदयामास। ततोऽतिप्रमोदमये वातावरणे मदनमञ्जरी-राजशिखामण्योः परिणयः सम्पन्नः।

# रघुनाथविलासम्

## कविपरिचयः

रघुनाथविलासनाटकस्य[1] रचयितुः यज्ञनारायणदीक्षितस्य पिता गोविन्ददीक्षितस्तञ्जौरराजवंशस्य प्रधानामात्य आसीत्। कविरसौ सम्प्राप्तसम्मानोऽवर्तत, यथा कृष्णयज्वसोमनाथादीनां समकालिक-कवीनां प्रशस्तिभिर्ज्ञायते। कविः साहित्यविद्यायां, व्याकरणे, दर्शने च पारङ्गत आसीत्।

प्रस्तुतनाटकातिरिक्ता यज्ञनारायणस्य तिस्रः कृतयः सन्ति— (१) रघुनाथभूपविजयम्, (२) साहित्यरत्नाकरम्, (३) अलङ्कार-रत्नाकरञ्च।

## कथावस्तु

तञ्जौरनृपालो रघुनाथस्तीर्थान्यटन् स्नान्तं कमपि ब्राह्मणं मकराद्र-रक्ष। राजा ग्राहस्योदरं बिभेद। तदुदरे रत्नसमुद्गक एको दृष्टः, यस्मिन्नुरुकान्तिमानेको नासामणिरासीत्। मणेः सुगन्धेन राज्ञावगतं यद् रत्नधारिणी मणिनानेन समलङ्कृतासीत्। तस्याः सौन्दर्यासव-पानाय स जलयानेन समुद्रं तरन् लङ्कां प्राप। तत्रैरावत्यास्तटे उपवने सैव राजदुहिता दृष्टा। सा लङ्काधिपस्य विजयकेतोः पुत्री चन्द्रकलासीद्, यस्या रत्नं समुद्रतटे मकरो जहार।

नायिकोपवने सखीभ्य इदन्निवेदयन्ती आसीत्, यत्तस्या विवाहो रत्नसमुद्गकवाहकेन रघुनाथनायकेन सह भविता। तस्मिन्नेवावसरे रघुनाथः समक्षं बभूव, स्वस्य च परिचयं प्राददात्। राजकीयजनानां संमर्दान्नायिका सखीभिरन्तःपुरं प्रविवेश।

नायकोऽप्यन्यत्र गत्वा नायिकायाश्चित्रं लिखित्वा यथाकथञ्चित् कालं निनाय। अथ कापालिकी प्रतिभावती वियोगसन्तप्तं नायकमवादीत्— राजदुहितुश्चन्द्रकलायाः पिता भवतां पितुः सहायतया पारसीकान्

1. अस्य प्रकाशनं 'सरस्वती-महल-तञ्जौरात्' सम्पन्नम्।

पराजित्य प्रतिज्ञातवान् यद् भवान् तस्य जामाता भविष्यति। ततः कापालिकी विरहव्यथाकुलाया नायिकाया हृदयद्रावकं वृत्तं निवेदयामास। अन्ते च रघुनाथस्य तया सह सम्मेलनं प्रतिजज्ञे। राजा तस्या योगसिद्धिप्रदायिन्यौ मणिपादुके वेत्रलताञ्च गृहीतवान्। तत्प्रभावेण स आकाशमार्गेण वियोगिन्या नायिकायाः सान्निध्यमलभत। तां स्वकीयशरणमानेतुं स वेत्रलतया मायाहस्तिनं रचयाम्बभूव। नायिका हस्तिनो भीता सा नायकसनाथे निकुञ्जे समागता। द्वावपि क्षणं मिलित्वा स्वं स्वं स्थानं जग्मतुः। लतानिकुञ्जे तयोर्गान्धर्वविवाहः सम्पन्नो बभूव।

चन्द्रकलाया मातापितरौ तस्या विवाहं रघुनायकेन सार्धं कर्तुकामावास्ताम्। प्रभावती सपरिवारं नायिकां तञ्जौरमानयत्। तस्याः कृते इन्दिराभवनं सुरक्षितं कृतमासीत् तत्रैव तयोः पाणिपीडनसंस्कारः सम्पन्नः।

## पारिजातहरणम्

### कविपरिचयः

पारिजातहरणस्य[1] रचयिता ताताचार्यः श्रीनिवासस्य पौत्रो, वेङ्कटगुरोश्च पुत्र आसीत्। कविना पितुरेवाधीतम्। अस्य जन्म निवासस्थानञ्च अर्काटमण्डलस्य बन्दवाशीजनपदे बभूव।

तञ्जौरस्य नृपालोऽच्युतनायकः एकवर्षपर्यन्तं ताताचार्यस्याश्रममध्युष्य तच्छिष्यतामङ्गीचकार। अनेन राज्ञा आचार्यस्य कृते कावेरीतटे भगवतो नीलमेघस्य मन्दिरं निकषा भवनमकारयत्। आचार्योऽत्र सकुटुम्बमुवास। तत्र विविधयज्ञानां सम्पादकत्वादाचार्यश्चतुर्वेदशतक्रतुरिति जनैरभिधीयते स्म। आचार्यस्य प्रभावेण राजा सुवृत्तो विद्वद्गुणग्राहकश्चासीत्। कविरसौ अच्युतनायकस्य (१५७२–१६१४ ई०), रघुनाथनायकस्य (१६१४–१६३३ ई०), विजयराघवनायकस्य च (१६३३–१६७३ ई०) राजगुरुरासीत्।

---

१. अस्य प्रकाशनं तञ्जौरस्थ-सरस्वती-महल-पुस्तकालयात् १९५८ ख्रिष्टाब्दे सम्पन्नम्।

## कथावस्तु

पारिजातहरणस्य कथा हरिवंशे, विष्णुपुराणे, भागवते चोपलभ्यते। देवर्षिरिन्द्रकृष्णयोर्युद्धं द्रष्टुकामः पारिजातस्यैकं कुसुममादाय कृष्णायार्पयत्। द्यूतक्रीडायां रुक्मिण्याः पराजितः कृष्णस्तत्पुष्पं पणबन्धमुक्तये तस्यै प्रत्यर्पयत्। ततो देवर्षिः सत्यभामाया भवनं गत्वा तद्वृत्तं तामुवाच।

तच्छ्रुत्वा सत्यभामया मानः कृतः। कृष्णोऽवदत—तुभ्यमपि तादृशं पुष्पमुपायनीकरिष्यामि।

तदानीमेव तपस्विन आगत्योचुः—नरकासुरस्यात्याचारैस्त्रिलोकी रुद्यताम्। षोडशसहस्रकुमारीणां प्रेमपत्रं चित्रञ्च दूतायितो राजहंसः कृष्णायाददात्। कृष्णः समुद्रमार्गेण प्राग्ज्योतिषपुरं गत्वा तत्र नरकासुरं ससैन्यं निहत्य राजकुमारीः कारातो मोचयामास। कुमारीणां प्रार्थनामभिनन्द्य ता बलदेवेन सह द्वारकां प्रेषयामास।

अथ च कृष्णः प्रद्युम्नेन सत्यभामया च सार्धमिन्द्रपुरीमाक्रामत्। देवराजं पराजित्य पारिजातं सत्यभामायै न्यवेदयत्। गगनमार्गेण द्वारकां प्रतिनिवर्तमानः स तस्यै मेरुं, मन्दरं, ताम्रपर्णीं, चोलं, श्रीरङ्गं, काञ्चीं, गङ्गां, सरयूं, हिमालयं, कैलासप्रभृतीनि च दर्शनीयानि दृश्यान्यदर्शयत्। ततो द्वारकायां नरकाद् विमुक्ताभिः कुमारीभिः साकं कृष्णविवाहस्य वर्णनं विद्यते।

# प्रभावती-परिणयम्

## कविपरिचयः

प्रभावतीपरिणयनाटकस्य[1] रचयिता हरिहरोपाध्यायः सप्तदशशतकस्य पूर्वार्धे मिथिलायां प्रादुर्बभूव। अस्य मातापितरौ लक्ष्मीराघवावास्ताम्। तस्य पितामहो हृषीकेशः, मातामहश्च रामेश्वरमिश्रः प्रख्यातविद्वांसावास्ताम्। कवेर्निवासस्थानं बिट्ठोनामा ग्राम आसीत्। अस्यापरा कृतिः सूक्तिमुक्तावली हरिहरसुभाषितं वा वर्तते।

१. अस्य प्रकाशनं हरिदास-संस्कृत-ग्रन्थमालायां २८५ संख्यायां 'चौखम्भा-संस्कृत-सीरीज आफिस, वाराणसीतः' अभूत्।

## कथावस्तु

दैत्यराजस्य वज्रनाभस्य दुहितुः सौन्दर्येणाकृष्टः प्रद्युम्नो वज्रनाभ-नगर्यां प्रच्छन्नो गच्छति। नायिकायाश्चित्रेण च मनो विनोदयति। नायिकापि नायकं प्रत्यासक्ता विद्यते। मदनातङ्केन प्रपीडितां नायिकां शुचिमुखीनाम्नी हंसी वदति—मया तव चित्रं प्रद्युम्नाय प्रदत्तम्। सोऽपि त्वामेव चिन्तयन्नास्ते। नायिका-वचनात् सा नायकस्य चित्रं लिखित्वा तस्यै प्रयच्छति। नायिका दयितस्य चित्रमवलोक्य तामाद्रियते।

मदनातङ्कितो नायकः शुचिमुखी-भद्रयोर्योजनानुसारं नाट्यमण्डल्या नायकीकृत्य वज्रनाभपुरं नीयते। अभिनयवेलायां तं नायिकालोकते समधिकं च स्मरोन्मत्ता भवति।

एकस्मिन् दिवसे शुचिमुखी प्रद्युम्नस्य मन्मथलेखं नायिकायै ददाति। नायकोऽपि भ्रमररूपं धृत्वा नायिकया प्रेमिवदाचरति। अन्ते च प्रद्युम्न-रूपमङ्गीकरोति, किन्तु केनापि न दृश्यते। स्फटिकशिलावेदिकायां तस्य रूपं दृश्यते। नायिकायाः कृते तस्य रूपद्वयं समस्यायते। शुचिमुख्या वास्तविकं चित्रं प्रच्छाद्यते।

अन्ते नायकः प्रकटीभवति। नायिका शनैः शनैस्तस्य सम्पर्कं आगच्छति। तौ द्वावपि पर्यङ्किकामन्दिरे रात्रिं गमयितुं गच्छतः। सखीनां संविधानेन नायकस्य मित्रे गदसाम्बौ कन्यान्तःपुरे प्रच्छन्नतया प्रवेष्टुमुपक्रामतः।

प्रद्युम्नादिप्रच्छन्ननायकैः सह प्रभावतीप्रभृतीनां नायिकानां गान्धर्व-विवाहाः सम्पद्यन्ते। नायिका स्वप्नं पश्यति यत्तस्या दयितः तस्याः पितरं यमलोकं नयति। नायकेनायं वृत्तान्तस्तया सखीभ्यो निवेद्यमानः श्रूयते।

अतोऽनन्तरं दानवैर्ज्ञायते यद् यादवैः कन्यान्तःपुरं दूषितम्। इन्द्रशेषनागाभ्यां यादवानां सम्यक् साहाय्यमाचर्यते। प्रद्युम्नो मायामयं युद्धं करोति। वज्रनाभः स्वयमेव तेन सह युद्धाय सन्नद्धो भवति। इन्द्रस्य सेना तस्य सहायतायै समापतति। श्रीकृष्णोऽपि द्वारकातो युद्धायागच्छति। गरुडोऽसंख्यान् दानवान् निहन्ति। कृष्णदत्तेन चक्रेण प्रद्युम्नो वज्रनाभस्य शिरश्छिनत्ति। अन्येऽपि दानवा निहन्यन्ते।

# पाखण्डधर्मखण्डनम्

## कविपरिचयः

पाखण्डधर्मखण्डननाटकस्य[1] रचयिता दामोदरः संन्यासी आसीत्। कविर्गूर्जरभूमिं स्वजनुषा समलङ्चकार। अनेन विविधविद्यानां गहनमध्ययनं कृतम्। कलेः प्रभावात् धर्मस्य प्रवृत्तीर्दूषिता दृष्ट्वा स घृणापरवश इदं नाटकं रचयाम्बभूव।

## कथानकम्

नाटकेऽस्मिन् चारित्रिकभ्रष्टाचारस्यातिरेकपूर्णं वर्णनं कवेरभीष्टम्। दिगम्बरसिद्धान्तावलम्बी मलसंभृतस्य कलेवरस्य शुद्धिं विडम्बयति। तन्मतेनाधोलिखितप्रकारेणाध्यात्मिकज्ञानस्योपलब्धिर्भवितुं शक्नोति—

दूरात् पादतले नतिः सुविधिना सत्कारतो भोजनं
मिष्टं स्वादुतरान्नमेव मधुरं पानं ततः सेवनम्।
ईर्ष्या स्वल्पतरापि नैव कुलिनैर्दारैः समं क्रीडतां
कार्यं स्वच्छमनः प्रमोदबहुलं त्वेतदृषीणां मतम्॥ १.२०॥

ततः सौगत आगत्य ब्रवीति अस्माकमेष सौगतो धर्मः श्रेष्ठतरः, यत्र सौख्येन साकं मोक्षस्यापि व्यवस्था विद्यते। तद्यथा—

आवासो निलयं मनोहरमभिप्रायानुकूला वणिग्-
नार्यो वाञ्छितकालमिष्टमशनं शय्या मृदुप्रस्तराः।
श्रद्धापूर्वमुपासते युवतयः क्लृप्ताङ्गरागोत्सवैः
क्रीडानन्दभरैर्व्रजन्ति यमिनां ज्योत्स्नोत्सवा रात्रयः॥ १.२४॥

तत एको वैष्णवनामधारी पुरुषो रङ्गं प्रविश्य वैष्णवमतस्य श्रेष्ठतां प्रतिपादयति—

आलिङ्गनं भुजनिबन्धनमायताद्या, स्वच्छन्दपानमशनं न परस्वभेदः।
स्वात्मार्पणं युवतिभिर्गुरुषु प्रयुक्तं धन्यञ्च वैष्णवमतं भुवि मुक्तिहेतुः॥१.२६॥

---

१. अस्य प्रकाशनं १९३१ ख्रिष्टाब्दे ब्रह्मर्षिणा 'हरे राम सुन्नरामपण्डितेन' ऋष्याश्रमेण 'तलीआनी पोल, सारङ्गपुर, अहमदाबादेन' कृतम्। अस्य प्रतिर्वाराणस्याः संस्कृतविश्वविद्यालयेऽस्ति।

वल्लभाचार्यमतानुसारी वैष्णवः स्वमतोत्कृष्टतां प्रतिपादयन्नाह—धर्म-व्रेद-गङ्गा-शम्भु-गणेश-दुर्गा-सूर्य-सरस्वीन्द्र-ब्राह्मणादयो गणनामात्रम्। अस्माकं कृते तु गुरुचरणयोः पादुके रमण्यश्च वाञ्छिताः। स स्वकीयां प्रेयसीं ब्रवीति—

परस्परं भोज्यमहर्निशं रतिः स्त्रीभिः समं पानमनन्तसौहृदम्।
श्रीगोकुलेशार्पितचेतसा नृणां रीतिः परा सुन्दरि सारवेदिनाम्॥

तं दूरयित्वा श्रुतिधर्मो रङ्गमञ्चं प्रविश्य यावद् वेदं हरिञ्च प्रशंसति तावत् कलिः तमुन्मूलयितुं दयितया श्रद्धया सहागच्छति—

ततो महामोहरूपधरो मध्वाचार्य आगत्य कलये स्वकृतित्वं श्रावयति—

मोहिताः सकलधर्महापिताः, प्रापिता हरिपदादधोगतिम्।
वर्णभेदरहिताः कृता मया शूद्रधर्मनिरताः स्वयं स्थिताः॥ १.५५॥

ततो महामोहसचिवो रङ्गमञ्चमाविश्य निजमहिमानं निगदति—मया सर्वे वर्णाः, समग्रो देशः, निखिलञ्च धरातलं श्रौतागम-विरलं सम्पादितम्।

अथ कले राजदूतो रङ्गमञ्चं प्रविश्य निवेदयति यन्मया सर्वे लोका धर्मविमुखा विहिताः। ततस्तेनोक्तं यद् वाराणस्यां श्रौतागमप्रचारोऽस्ति भवन्तस्सर्वे काशीनिवासिनो विपथगामिनः कुर्युः। वैदिकब्राह्मणाश्च स्वकीयानुगामिनः सम्पाद्याः। तदानीमेव अनृत-दम्भ-काम-क्रोधादयः समागताः। तैस्सह मोहादयो दिग्विजयाय प्रतिष्ठन्ते।

तदनन्तरं निरञ्जनमार्गी विटावतंसनामा व्यासः स्वप्रेयसीभिर्बालाभी रङ्गमञ्च उपस्थितो भवति। ततः पश्चात् सर्वाङ्गोच्छिष्टाभिधाना रजकी रङ्गमञ्चं प्रविशति। सा कथयति—निरञ्जनकृपया व्यासः सुन्दरोऽस्ति। तस्य पञ्चषा युवत्यशिष्या अपि सुन्दर्यः सन्ति। एका ब्राह्मण्यप्यस्मिन् पथि समानीता वर्तते। तस्याः परिचयो यथा—

वैधव्यदुःखे परितप्यमाना, शोकातुरा ब्राह्मणवंशजाता।
व्रतोपवासैर्बहुखिन्नदेहा, स्थूलाम्बरैर्वेष्टितपुण्यरूपा॥ २. ८॥

ब्राह्मण्याः कृते रजक्याश्चरणवन्दनं करणीयमासीत्। तया तत्करणेऽसमर्थता प्रकटिता। रजक्योक्तं—मम गुरुश्चाण्डालाचार्योऽस्ति।

अहमनुदिनं तच्चरणौ वन्दे। नित्यं तच्चरणसेवामप्यनुतिष्ठामि। परन्तु ब्राह्मण्यै नैष कदाचारो रोचते। ततः सा व्यासनामधारिणो विटस्य सविधे प्रापिता। व्यासस्तां स्वैराचारं शिक्षते। श्रुत्वैतत् सा ब्राह्मणी तं भर्त्सयति—

निरञ्जनालम्बितमार्गसक्ताः कथं भवेयुः परदाररक्ताः।
ये विष्णुधर्मा अपि ते कथं स्युः स्वकीयपुत्रीयभनोद्यतेहा॥

## नलचरितम्

### कविपरिचयः

नलचरितनाटकस्य रचयिता नीलकण्ठदीक्षितो नारायणदीक्षितस्य सूनुरासीत्। अस्य पितामहभ्रातुरप्पय्यदीक्षितस्य कृतित्वघोषो दक्षिण-भारते विशेषरूपेण व्याप्त आसीत्।

नीलकण्ठस्य गुरुः सुप्रसिद्धो विद्वान् वेङ्कटेश्वरो बभूव। कविना स्वपितुरप्यधीतम्। अप्पय्यदीक्षितस्तस्य व्याकरणगुरुरास्त। प्रस्तुत-नाटकातिरिक्ताः कवेरनेकशः कृतयो विलसन्ति।

### कथानकम्

नलः कामप्यपूर्वसुन्दरीं स्वप्ने लुलोके। तस्याः सौन्दर्यं विदूषक-समक्षं वर्णयामास। अतः परं पूर्वेद्युर्वनविहारसमये स्वर्णहंसं गृहीत्वापि दयापरवशो मुमोच। ततो हंसेन परिज्ञातं यदङ्काभरणरत्नेन तव संस्तवं कारयिष्यामि।

विदूषकेणोक्तं—स्वप्ने उषा अनिरुद्धं विलोक्य तं प्राप। अतो भवानपि स्वप्नदृष्टां नायिकां प्राप्स्यति। भवांस्तावत्तस्याश्चित्रं लिखतु, यद् दृष्ट्वा सामुद्रिकदैवज्ञस्तत्फलं वक्ष्यति।

नलेन स्वप्नविलोकितायाश्चित्रं लिखितम्। सत्याचार्यः तद्-दृष्ट्वोवाच—

सप्तद्वीपपतेस्तु कस्यचिदियं राज्ञोऽवरोधोचिता॥ १.३४॥

अस्या विवाहे प्राक् पश्चाच्च बहवः प्रत्यवाया भविष्यन्ति। ततो राजन्युद्यानं गतवति स हंसः पुनरागच्छत्। तेन निवेदितं—विदर्भादहं

सरस्वतीवचनाद् दमयन्तीदशां वक्तुमागतोऽस्मि। ततस्तेन सरस्वत्याः पत्रं प्रदत्तं यत्र लिखितमासीत्—

निर्माय रत्नं किमपि त्रिलोकीलावण्यसारेण पितामहो वः।
निर्माणवैफल्यभियादिशन्मां, भोक्तारमस्यानुगुणं वरीतुम्॥

सरस्वत्या योजनासीद् यद् यदा दमयन्ती कुलदेवतां पूजयितुमुद्यानमागच्छेत्तदैव तस्या नलेन सह विवाहो सम्पद्येत।

प्रतिनायक इन्द्रोऽपि तां प्रत्युत्क आसीत्। बृहस्पतिर्नैतदैच्छत्। स विश्वासुना दूतेनेन्द्रं संदिदेश—

नलासक्ता भैमी स्वयमनुमतं तच्च विधिना।
त्रिलोकीनाथस्तामभिलषति शक्रोऽप्यति बली॥ २.११॥

दमयन्तीस्वयंवरे वाचस्पतियोजनानुसारं नल इन्द्राय दौत्ये नियोजितः। अतः परमपि नैषधमहाकाव्यादिषु विन्यस्तं कथासूत्रमेवोपन्यस्तम्।

नाटकस्यास्य भाषामाञ्जुल्यं, वर्णानां नृत्यत्प्रायत्वं, सारल्यञ्च मनो मोहन्ते। नाटकमिदं सप्तदशशतकस्य रूपकाणां प्रतिनिधित्वं कर्तुं पारयति।

## कुशकुमुद्वतीयम्

### कविपरिचयः

कुशकुमुद्वतीयनाटकस्य[1] प्रणेता नीलकण्ठदीक्षितस्यानुजोऽतिरात्रयाजी अस्ति। अस्य प्रतिभाविलासः सप्तदशशतकस्य मध्यभागो वर्तते।

### कथानकम्

प्रस्तुते नाटके भगवतो रामस्य ज्येष्ठपुत्रस्य कुशस्य कुमुदनागस्यात्मजया सह विवाहस्य वर्णनमस्ति।

अयोध्यानगरी रामस्य पश्चाद् अराजधानीत्वात् ह्रासोन्मुखी संवृत्ता। एकस्मिन् दिवसे अयोध्याया अधिष्ठात्री देवी नागरिका सरयूसरितोऽधिष्ठातृदेव्या सहामिलत्, रामसूनोः कुशस्य स्वां प्रत्युपेक्षायाश्चर्यां चकार। ततो द्वेऽपि तिरस्करिण्या विद्यया प्रच्छन्ने नागलोकादागतयोः

१. अस्य हस्तलिखिता प्रतिः सागरविश्वविद्यालयस्य पुस्तकालये वर्तते।

कलावती-फणावत्योः कन्ययोर्वार्तां श्रुतवत्यौ। वार्ताश्रवणेन ताभ्यां ज्ञातं यदनुदिनं ज्योत्स्नाविहाराय कुमुदनागस्य दुहिता परस्सहस्रसखीभिः सममयोध्यायामागच्छति।

कदाचित् कुमुद्वती सरय्वां स्नानसमये हारमवमुच्य नदी-पुलिनेऽरक्षत्। स्नात्वा च सा नागलोकं गता। सरय्वाः अधिष्ठात्री देवी सागरिका तस्यास्तं हारं गृहीत्वा कृतकृत्यामात्मानममन्यत।

सागरिका नागरिकया सह कुशावतीं गत्वा कुशाय दिव्यं चक्षुः प्रदायायोध्याया जीर्णप्रायामवस्थामदर्शयत्। तत्रारण्यग्रस्ते राजप्रासादे गौरीपूजायायागतां कन्दुकेन क्रीडन्तीं नागकन्यामपश्यत्। नायकदृष्ट्यां सा—

इन्दीवरप्रतिममक्षियुगं मुखं तु, राकेन्दुकान्तमनयो रुचितो हि योगः।
वक्षोरुहौ मदनपूर्णसुपूर्णकुम्भौ, रम्भापि सा कथमुपैष्यति साम्यमस्याः॥

राजा तस्यां नितरां मुग्धमना अभवत्। ततो नायकेन दृष्टं यत् ता नागकन्या प्रासादभित्तिचित्रमवलोकयन्ति। कुमुद्वती तु तस्यैव चित्रं सप्रेम वीक्षमाणा तिष्ठति। विदूषकः सर्वमेतदवलोक्य राजानं प्रोवाच—इयमेव ते पट्टमहिषी भविता। नागरिकया च विदूषकवचः समर्थितम्। राजा चाधिष्ठातृदेवीः सान्त्वयन्नुवाच—अयोध्यापुरीमहं नवीकृत्य प्रवेक्ष्यामि, द्रक्ष्यामि सरयूमपि।

कुशोऽयोध्यां नवीकृत्य तत्रैवोवास। सागरिका कुमुद्वत्या मूर्धन्या सखी समपद्यत। तस्यै सागरिकया राज्ञः चित्रं प्रदत्तम्। राज्ञः कृते कुमुद्वतीं विना जीवनधारणं कठिनं बभूव।

अयोध्यायां पुनर्जनसम्मर्दस्य वार्तां श्रुत्वा कुमुदस्तनयां तत्र गन्तुं निषिषेध। अपवादरूपेण सा वारमेकं तत्र देवीपूजनाय गन्तु शक्तासीत्।

कुमुद्वती सागरिकामनुनयति स्म यदेकवारं नायकं दर्शयान्यथाहं जीवितं हास्यामि। सागरिका तयोर्मिलनस्य व्यवस्थामचीकरत्। रहस्यमयप्रकारेण तयोः प्रणयव्यापारः सम्पन्नः।

कञ्चुकिमुखेन कुमुद्वती-कुशयोः प्रणयवार्तां ज्ञात्वा कुमुदस्तां शङ्खपालस्य गृहे ररक्ष, येन सह तस्याः पिता तद्विवाहं चिकीर्षति स्म।

विदूषको नायकस्य विवाहेऽवरोधं वीक्ष्य लवसहायतया तं दूरयितुमियेष।

वन्दिनी कुमुद्वती कुशाय नखलेखं प्रैषयत्—विश्वसितु भवान्, जीविता सत्यहं भवन्तमवश्यं मिलिष्यामि। नागरिका राजानमाश्वासयत् परश्वः पर्यन्तं भवतां विवाहस्तया सार्धं भविष्यति। राजापि कुमुद्वत्याः आश्वासनाय फणावतीद्वारा स्वकीयमङ्गदं प्रैषयत।

सागरिकाया योजनानुसारं कुमुद्वती प्रमत्तायते स्म। तस्या उपचाराय कुमुद-शङ्खपालौ चिकित्सकमान्त्रिक-मौहूर्त्तिकान् आनयामासतुः। परन्तु तस्या अवस्थायां सुधारो नाभवत्। चिन्तितस्तत्पिता सागरिकां कमप्युपायं पप्रच्छ। सोवाच—अहमेकां सिद्धयोगिनीं जानामि, यस्याः हस्ते सदा सर्वज्ञो नाम शुको विराजते। सैवास्या उपचारं कर्तुं शक्ष्यति। ततो नागरिका योगिन्या रूपं कुशश्च शुकस्य रूपं दधतुः।

सिद्धयोगिन्या आदेशानुसारं शुकः स्वाङ्गैस्तस्या अङ्गानि पस्पर्श। एवं स स्वं नायिकाञ्च सहैवोपचचार। राजा तु आजीवनं कुमुद्वत्याः शुको भवितुमिच्छति स्म। यथा—

> राज्यं रक्षतु मे लवः स चतुरः संरक्षणे शिक्षितः,
> देवी कान्तिमती तपश्चरतु मामुद्दिश्य कालान् बहून्।
> नाहं यामि पुनः पुरं ध्रुवमिदं तिर्यग्वपुश्चास्तु मे,
> कान्तास्पर्शसुखादतोऽपि भविता किं वान्यदेतादृशम्॥

अपरतो लवो नागान् भीषयते स्म। स शरवृष्ट्या नागान् पीडयामास। विदूषको नागयज्ञमनुतस्थौ। गरुडश्चासंख्यान्नागान् विलिलेख। अन्ततः कुमुदः प्राणरक्षार्थं विवाहमिममनुमन्यते स्म। लवस्यापि विवाहः कुमुदवत्या अनुजया कमलिन्या सह बभूव। विदूषकोऽपि फणावत्या सह पाणिग्रहणं लेभे।

## अद्भुतदर्पणम्

### कविपरिचयः

अद्भुतदर्पणस्य[1] रचयिता बालकृष्णस्य शिष्यो महादेव आसीत्।

1. अद्भुतदर्पणस्य प्रकाशनं काव्यमालायाः ५५ संख्यायामभवत्।

रामचन्द्रनामापरकविरस्य सतीर्थोऽवर्तत। द्वावपीमौ शाहराजप्रदत्ताग्रहारभागिनावास्ताम्। महादेवो रामचन्द्रात् त्रिगुणमधिकमंशं लब्धवान्। एतेन कवेः सर्वोपरि वैदुष्यं सिध्यति।

महादेवस्य पिता कृष्णसूरिः कौण्डिन्यगोत्रीयः तञ्जौरं निकषोपकावेरि पलमारनेरीमध्युवास। कविना प्रस्तुतनाटकस्य रचना प्रायो युवावस्थायां कृता

## संविधानम्

नाटकस्यास्य संविधानं मयप्रदत्तेन दर्पणेन भवति, यः खलु रावणाय तेन समुपायनीकृतः। दर्पणेऽस्मिन् त्रियोजनगतं सर्वं वृत्तं प्रत्यक्षायते स्म।

## कथावस्तु

सेतुरचनापूर्वकं लङ्कां प्रविश्य रामः सन्धिप्रस्तावमङ्गदद्वारा प्रास्तावयत्। नैष केभ्यश्चिदरोचत। इतश्च मेघनादो विभीषणगृहं ज्वालयितुमैच्छत्, किन्तु सम्पातिस्तत्कुटुम्बं मैनाकपर्वते नीत्वा प्राच्छादयत्।

मायाप्रायं योद्धव्यमिति रावणयोजनया मय-शम्बर-विद्युज्जिह्वादयो मायाविनो लङ्कायामाहूताः।

शम्बरेण वानरायितम्। स कदाचिदङ्गदरूपं दधार। जाम्बवता धृतः सन् पार्श्वगतं दधिमुखं तस्य हस्ते कृत्वा स्वयमन्तर्दधे।

राक्षसानां मायायाः सूचना रामदले प्रसारिता। विभीषणो वास्तविकावास्तविकविवरणे नियुक्तः।

एवमेवास्मिन् रूपके पदे-पदे मायाविडम्बनं विद्यते। अन्ततः सर्वा माया निरस्य रामो वैदेहीमलभत।

# शृङ्गारकोशभाणः

## कविपरिचयः

शृङ्गारकोशभाणस्य[1] रचयिता नीलकण्ठदीक्षितस्य पुत्रो गीर्वाण-

१. शृङ्गारकोशभाणस्य हस्तलिखिता प्रतिः सागरविश्वविद्यालयस्य पुस्तकालये तथा तञ्जौरस्य सरस्वती-महल-पुस्तकालये ४६११ संख्यायामास्ते।

दीक्षित आसीत्। 'काशीविश्वनाथाय नमः' इति पद्यलेखात् कृतेः काश्यां विरचनं सम्भाव्यते। कृष्णमाचार्यमतानुसारं कवेरपरा कृतिः 'अन्यापदेशशतकम्' अपि विद्यते।

## कथानकम्

विटश्चन्द्रशेखरः प्रातरुत्थाय प्राभातिकीं श्रियमवलोकयति। तन्मते ब्रह्मनिर्मितानां चक्षुषां साफल्यं वाराङ्गनानामवलोकनेऽस्ति। तदनुसारं स चन्द्रकला-मधुरिका-वैजयन्तिका-चन्दनलताप्रभृतीनां वारविलासिनीनां विलासवृत्तान्तं प्रस्तौति।

ततो विटोऽयं मार्गे चाचिरवेशवधूमार्गावलम्बिनीं वासन्तिकाभिधानां गजाक्षीतां कुलवधूमभिसारपथप्रवृत्तामुपभुज्य मध्याह्नम् बकुलोद्याने गमयामास।

तदनु शृङ्गारशेखरः कस्याश्चन ग्रामजरत्याः शृङ्गारितचेष्टाः प्रकाशयति। ततः परं विटेन पथि रुद्रभट्टो दृष्टः। काचन वाराङ्गना देयधनार्थं तन्मार्गं निरुणद्धि। अकिञ्चनो ब्राह्मणो वेशवाटे मदनचर्यायाः फलं भुञ्जान आसीत्। अन्ते विटः सायङ्कालारम्भे ग्राहकान् लोभयितुं प्रसाधनव्यापृता वारवधूरालोकते।

## हरिजीवनमिश्रस्य प्रहसनानि

### कविपरिचयः

हरिजीवनमिश्रस्य आमेरनरेशस्य रामसिंहस्य (१६६७-१६७५ ई०) समाश्रये प्रतिभा विललास। अस्य पितामहो वैद्यनाथः, पिता च लालमिश्र आसीत्। कविः (१) अद्भुततरङ्गम्, (२) प्रासङ्गिकम्, (३) पलाण्डुमण्डनम्, (४) सहृदयानन्दम्, (५) विबुधमोहनं चेति प्रहसनपञ्चकं प्रणिनाय। एतदतिरिक्तं विजयपारिजातमिति नामकं नाटकमपि व्यरचयत्।

# वसुमतीचित्रसेनीयम्

## कविपरिचयः

वसुमतीचित्रसेनीयनाटकस्य[1] रचयिता अप्पयदीक्षितस्तृतीयोऽभवत्। असौ अप्पयदीक्षितप्रथमस्य पौत्रो नीलकण्ठस्य च भ्रातासीत्। वस्तुतो नारायणदीक्षितोऽस्य जनक आसीत्। अप्पयदीक्षितद्वितीयेनायं सुतीकृतः। कविना मदुरायाः सामन्तस्य समाश्रयः सम्प्राप्तः।

## कथानकम्

कलिङ्गराजः शान्तिमान् वसुमत्या आत्मजायाः कल्याणार्थं प्रयागे तपस्तताप। तदानीमेव निषादराजः तद्राजधानीमाक्रम्य लुलुण्ट। अन्तःपुरजनांश्च वन्दिनो विधाय न्यवर्तत। पथि मृगयामटता महाराजेन चित्रसेनेन स पराजितः। शान्तिमान् चित्रसेनस्य पत्नीभगिन्या ज्वालावत्याः पुत्र आसीत्। निषादराजद्वारा लुण्ठितवस्तुप्रतिनिवर्तने सौन्दर्यराशिं राजा राजमहिलासु वसुमतीमवलोकितवान्। तां प्रत्युत्कमना अपि स ज्वालामत्या वैपरीत्यात् तां तदानीमेवात्मनीनां कर्तुं न शशाक।

शान्तिमतोऽमात्योऽपि वसुमतीं चित्रसेनाय दातुमना आसीत्। अमात्ययोजनया राजा योगिवेशं विधाय नन्दननाम्नि बहिरुद्याने ध्यानस्थोऽतिष्ठत्। वसुमत्यपि मन्त्रिमते स्थिता भूताविष्टोपचाराय योगिनः सविधे समानीता। नन्दनोद्याने योगी भूर्जपत्रोपरि यन्त्रलेखनस्थाने नायिकायाश्चित्रं लिलेख। विदूषकेच्छानुसारं सर्वे जना यन्त्रनिर्माणकाले बहिरागच्छन्। यन्त्रबन्धनवेलायां विदूषकोऽपि सह चतुरिकया बहिरागतः। ततस्तयोस्तत्रैव गान्धर्वविवाहः सम्पन्नः।

तदनन्तरमेव पद्मावत्याः पत्रानुसारं ज्वालावती नगरे कस्यापि तेजस्विनः पुरुषस्यागमननिरोधं घोषयामास।

चित्रसेनस्य मन्त्रिणा सुनीतिना मलयकेतुलुण्टाकद्वारा बकुलोद्यानमारभ्य कलिङ्गान् यावद् गुहामार्गं राज्ञः प्रणयव्यापाराय कारयामास।

एवं हि मन्त्रिप्रयत्नैः पद्मावत्याश्च कृपालुतया राजा वसुमतीं लेभे।

---

१. अस्य प्रकाशनं केरलविश्वविद्यालयेन 'संस्कृत-सीरीज' २१७ संख्यायां कृतम्।

# रामभद्रदीक्षितस्य रूपकाणि

## कविपरिचयः

रामभद्रदीक्षितो यज्ञरामदीक्षितस्य तनय आसीत्। कविराचार्यनीलकण्ठात् साहित्यविद्यां, चोक्कनाथाद् व्याकरणं, बालकृष्णभगवत्पादात् दर्शनमधीतवान्। तञ्जौरनृपतिकारिते शाहजिपुराग्रहारेऽसौ निवसति स्म।

रामभद्ररचनासु अष्टप्रासः, चापस्तवः, जानकीपरिणयं, पर्यायोक्तिनिष्यन्दः, प्रसादस्तवः, विश्वगर्भस्तवः, शृङ्गारतिलकभाणश्चोपलभ्यन्ते।

## जानकीपरिणयम्[1]

### कथानकम्

नाटकेऽस्मिन् सप्ताङ्का विलसन्ति। कथावस्तुन आरम्भो रामस्य मिथिलां प्रति प्रस्थानेन भवति। विघ्नकारिणां रक्षसामुपद्रवोऽस्मिन्नुपन्यस्तः।

रावणो रामस्य, सारणो लक्ष्मणस्य, विद्युज्जिह्वो विश्वामित्रस्य, रूपं गृह्णन्ति। सीतारामयोर्विवाहो जनकपुर्याः स्थाने विश्वामित्राश्रमे सम्पद्यते।

पञ्चमाङ्के रावणनिर्देशानुसारं शूर्पणखा-विद्युज्जिह्वौ मन्थराकैकय्यो रूपं स्वीकुरुतः। सारणश्च दशरथे समाविश्य रामं वनाय निर्वासयन्ति।

सप्तमाङ्के शूर्पणखा तापसी भूत्वा भरताय रामनिधनवृत्तान्तं श्रावयति। एवम्प्रकारेण प्रसिद्धा रामायणी कथा विविधैर्मायाचारैरन्यविधैश्च परिवर्तनैर्नाटकानुकूला कुतकोत्पादिका च विहिता।

## शृङ्गारतिलकभाणः[2]

### कथानकम्

शृङ्गारतिलकभाणे प्रधानतया पाण्ड्यराजमित्रस्य भुजङ्गशेखर-विटस्य विहारवृत्तान्त उपन्यस्तः। मकरन्दमन्दारकविटयोः, नारायणभट्टपौराणि-

---

१. अस्य प्रकाशनं १९०६ ई० तञ्जौरतः संजातम्।

२. अस्य प्रकाशनं काव्यमालायाः ४४ संख्यायां संवृतम्।

कस्य, गुरुशिष्ययोः कलहस्य च प्रस्तावनया स्मरविजृम्भणेन समाजस्य कियती विरूपता भवतीति भाणेऽस्मिन् निरूपितम् ।

## सामराजदीक्षितस्य रूपकाणि

### कविपरिचयः

सामराजदीक्षितो नरहरिबिन्दुपुरन्दरदामोदरस्यात्मज आसीत् । अस्य प्रतिभाविलासस्य समयः सप्तदशशतकस्यान्तिमश्चरणोऽष्टादशशतकस्य च प्रथमश्चरणो विद्यते। वृद्धावस्थायां कवि रतिकल्लोलिनीति नामानं कामशास्त्रीयं ग्रन्थं प्रणिनाय। शृङ्गारलहरीति नाम्नी कवेरपरा कृतिर्विद्यते।

सामराजस्य काव्यलहरी व्रजभूमौ विललास। स बुन्देलखण्डस्य आनन्दरायस्य समाश्रये बहुकालमुवास।

## श्रीदामचरितम्

### कथावस्तु

श्रीदामचरितस्य[1] नायको ज्ञानपरायणः सुदामा नाम प्रसिद्धो ब्राह्मणोऽस्ति । भावात्मिका प्रकृतिस्तस्याः कार्यकलापाश्च कविना नियोजिताः। दारिद्र्यमस्मिन् प्रमुखं पात्रं येन दुर्मत्यभिधानया भार्यया सार्धम् अतिथियज्ञपरायणस्य सुदाम्न आतिथ्यमुपलभ्यते। श्रीदामा ब्राह्मणोचितायां दरिद्रतायामपि मुत्सम्पन्नो वर्तते, किं तु तस्याः पत्नी वसुमती प्राप्त्याशयोपायनं दत्वा कृष्णं समया पतिं प्रेषयत्येव' सोऽपि पत्न्या अभिलाषमभिनन्दन् पुरुषोत्तमस्य दर्शनलाभो भवितेति सञ्चिन्त्य द्वारकां प्रतिष्ठते ।

कृष्णेन सुदाम्नश्चरणौ रुक्मिण्या सत्यभामया च साकं प्रक्षालितौ। ततश्छात्रजीवनस्य चर्चां कुरुतः। प्रमदोद्याने उद्यानपाल-विदूषकप्रभृतिभिः काव्यपाठः कृतः। रात्रौ कृष्णस्तस्मै प्रेयसीभिः समं रासलीलां दर्शयति

1. इदं नाटकं चतुरङ्कं यावद् 'भण्डारकर ओरिएण्टल इन्स्टीट्यूट'-पूनायां प्राप्यते । विलसनेनास्य पञ्चमोऽप्यङ्को दृष्टः ।

अथ श्रीदामा द्वारकातः प्रतिनिवृत्य स्ववसतिमागतः। तत्र कुटीरस्थाने प्रासादं, दरिद्रातायाः स्थाने लक्ष्मीं, पत्नीं च समलङ्कृतां रमणीमिवावलोकयति। सर्वमेतत् कृष्णस्य प्रसादेन संवृत्तमिति तेन निश्चितम्।

## धूर्तनर्तकप्रहसनम्[1]

### कथावस्तु

धूर्तनर्तकप्रहसने कथानायकस्य मूढेश्वरस्य, तस्य नायिकाया वसन्तलतियाश्च चरित्रं मुख्यतो हासहेतुकं वर्तते। मूढेश्वरो मुखर-जगद्वञ्चकशिष्याभ्यामनुगतो वसन्तलतिकया मिलितुं प्रतिष्ठते। जगद्वञ्चको गुरोरागमनं निवेदयितुमग्रतो गच्छति, किन्तु स तस्याः प्रणयपाशे स्वयमेव निबद्धो न प्रतिनिवर्तते। गुरौ समागतवति तौ शिष्यौ ततः प्रणश्यतः। क्षणादेव द्वावपि राजरक्षकानाकार्य प्रत्यागतौ। गुरुर्वसन्तलतिकायाः प्रणयपाशे प्रत्यक्षं दृष्टः। रक्षिणस्तौ परस्परं केशपाशयोर्निबध्य तयोर्दण्डाय पापाचारनाम्ने राज्ञे निवेदयन्ति।

राजा वसन्तलतिकां वीक्ष्यात्मानं विस्मरति का वार्ता दण्डस्य। इतश्च मूढेश्वरो विदूषकं वक्ति यन्मम सिद्धयो महत्तराः सन्ति। अहं राज्ञा देवदर्शनं कारयितुं पारयामि तदानीमेव।

## वरदाचार्यस्य नाट्यसाहित्यम्

### कविपरिचयः

वरदाचार्योऽम्मलाचार्यो वा रामानुजमतानुयायी काञ्चीपुर्या दार्शनिको विद्वानासीत्। अस्य पिता घटिकाशतसुदर्शनोऽवर्तत, यतो हि स घटिकायामेकस्यां पद्यानां शतं विरचयति स्म।

वसन्ततिलकभाणो वेदान्तविलासश्चेति तस्य रचनाद्वयं प्राप्यते। वेदान्तविलासेन कवेर्दार्शनिका प्रवृत्तिः पुष्यते। यद्यपि वसन्तविलासस्य शृङ्गारितवृत्तिस्तस्य लोकान्तिकत्वं प्रमाणयति।

---

1. अस्य हस्तलिखिता प्रतिर्वाराणस्याः सरस्वती-भवन-पुस्तकालये ३७९९५ संख्यायां वर्तते।

## वसन्ततिलकभाणः[1]

### कथावस्तु

वसन्ततिलकभाणस्यापराभिधानम् अम्माभाणोऽप्यस्ति। शृङ्गारशेखरनामा विटो वसन्तोत्सवे वसन्तसेनानुजाया वासन्तिकायाः प्रथमरङ्गाधिरोहणमहोत्सवे तस्या नृत्यं द्रष्टुं प्रातःकालादेव बहिर्निःसरति। तेन प्रधानविटा निमन्त्रयितव्याः सन्ति। स वासन्तिकानुरक्तहृदयो भावुकश्चास्ते। तेन राजधान्याः काञ्चीपुर्या वसन्तलक्ष्मीः प्रशस्यते।

सर्वप्रथमं शृङ्गारशेखरस्य दर्शनपथि विटस्यानङ्गशेखरस्य प्रेयसी चित्रलेखा समायाति। ततस्तस्य भूतपूर्वा प्रेयसी तारावल्यवतरति। स तस्या धूर्ततां तज्जरत्याश्च गालीः संस्मरति। गाल्यो विटानां कृते कर्णामृतं भवन्ति। ततोऽग्रे वीरसेनशूरसेनौ ताम्रचूडयुद्धं सम्पादयन्तौ दृश्येते।

शृङ्गारशेखरस्तदनन्तरं वीणावतीमवलोकयति। तया सहैका नवीना वेश्याप्यस्ति या स्वकीयं ब्राह्मणं पतिं विटायितं वीक्ष्य स्वयमपि वेशवाटमधिवसति। तदानीं सा पुष्पिणी आसीत्। विटोऽयं तया सह संगतिमिच्छन्नवीनं सिद्धान्तं स्थापयति—

पण्यस्त्रीषु परस्त्रीषु पुष्पदोषो न विद्यते। इति।

ततोऽग्रे विट आहितुण्डकं विलोकयति। तस्य खेलं दृष्ट्वा श्रुत्वा स कन्दुकक्रीडाव्यापृताया हारावल्याः सविधे गच्छति। मा मम क्रीडायां विघ्नमाचरतु भवानिति सा विटं ब्रूते।

अथ विटो दाक्षिणात्यब्राह्मणं देवराजभट्टं वेशवाटं प्रविशन्तं पश्यति यस्य पत्नी गृह एव व्यभिचारमाचरन्ती आसीत्। गन्धहस्ती मार्गमाकुलं विदधाति। तदानीं हारिणीनाम्नी वेश्या विटस्य पुरतो मध्याह्नातपादात्मानं रक्षितुं प्रस्तावयति। विटस्तदनुमोदते—

त्वदर्थानुभूतकामानलस्य मे कोऽयमातपो नाम।'

अतः परं चन्द्रशालायां कामशास्त्रमध्यापयन्नुपाध्यायोऽवलोक्यते।

---

१. अस्य प्रकाशनं १८७२ ई० कलकत्तामहानगरीतः संवृत्तम्। अस्य प्रतिः उज्जयिन्याः सिन्धिया-पुस्तकालयेऽस्ति।

विटस्तं प्रणमति । 'अनङ्गविद्यापारङ्गतो भूयाः' इत्याशीस्तेन प्राप्यते। किमध्याप्यते ? इति पृष्ट उपाध्यायो ब्रूते—जातिभेदः, अर्धचन्द्रवैचित्री, बिन्दुमालान्तरम्, उत्तानकरणम्, क्षीरनीरम्, तिल-तण्डुलविवेकश्चेत्यष्टौपरिष्टकान्यध्यापितानि। विटो वासन्तिकनृत्यावलोकनायोपाध्यायं निमन्त्रयति ।

ततोऽग्रे शृङ्गारशेखरेण गणिकाहेतोः खड्गाखड्गिव्यापृतौ वीरावव-लोक्येते । विटस्य मते पतिगृहं व्यभिचारिणीनां कृते कारागृहकल्प-मस्ति—

कार्येणापि विडम्बनं परगृहे श्वश्रूर्न सम्मन्यते
शङ्कामारचयन्ति यूनि भवनं प्राप्ते मिथो यातरः ।
वीथीनिर्गमनेऽपि तर्जयति च क्रुधा ननान्दा पुनः
कष्टं हन्त मृगीदृशां पतिगृहं प्रायेण कारागृहम् ॥

रङ्गशेखरनामा विटः शृङ्गारशेखरं निजवृत्तं श्रावयति यत् केन विधिना तस्या भूताविष्टायिता प्रेयसी मान्त्रिकायितेन तेनैकान्ते नीता भुक्ता च ।

तदनु रङ्गशेखर-शृङ्गारशेखरौ परवधूरमणस्य निरतिशयानन्दतां प्रतिपादयतः। वीराणां युद्धचर्चां कृत्वा मेषयुद्धं वर्ण्यते। ततस्तेन नेपाल-चोलादिदेशीया वाराङ्गना विलोक्यन्ते। मन्दारमालिकाया गृहं गन्तुमाश्वास्यते ।

अन्ते च शृङ्गारशेखरो रङ्गोत्सवं प्रविशति। तत्र द्यूतादिक्रीडासु व्यापृतान् विटान् पश्यति। नाना देशागता वारविलासिन्योऽपि तच्चक्षु-र्गोचरतामाप्नुवन्ति। विलासपुरादागता चन्द्ररेखा सकललोकलोचना-नन्ददायिनी घोषिता।

शृङ्गारशेखरो वासन्तिकायाः सौभाग्यमाशंस्य तदुपभोगैकाधिकार-पत्रं ददाति—

मासान् सप्त ममेयमस्तु दयिता दास्यामि चास्यै शतं
दीनारान् प्रतिमासमम्बरयुगं नित्यं शतं वीटिकाः ।
आमोदं कुसुमञ्च वाञ्छितमसौ मध्येऽन्यमीक्षेत चेद्
दत्वा तद्द्विगुणं कलत्रं तु पुनर्मासानियं सप्त च ॥

रतिवल्लभ-रागवर्धन-कुसुमसौरभनामानो विटाः साक्षिणो भवन्ति अथ जनान्तिके शृङ्गारशेखरो भणति—

अहं चौरकर्मणि द्यूते चातिशयप्रवीणोऽस्मि। एकद्वमासेषु तव गृहं स्वर्णराशिना पूरयिष्यामि।

## वेदान्तविलासम्[1]

### कथावस्तु

वेदान्तविलासनाटके वेदान्तो नाम राजा मायावादेन चमत्कृतः सन्मार्गात् च्युतो भवति। स स्वपत्नीं सुमतिं तिरस्कृत्य भ्रष्टाचार-परायणाया मिथ्यादृष्टेः पाणिं गृह्णाति। कर्मण्यस्मिन् बौद्धचार्वाकौ तस्य मन्त्रिणौ भवतः। अन्ततो यतिराजसङ्गत्येयमन्धकारस्य स्थितिः समाप्यते। ज्ञानस्य प्रकाशेन राजा स्वकर्तव्यं विन्दति। अतः स सुमतिं पुनर्महिषीं विधाय तां समाद्रियते। एवं प्रकारेण तस्योद्धारो भवति।

## चोक्कनाथस्य नाट्यसाहित्यम्

### कविपरिचयः

तिप्पाध्वरिणः पञ्चमः पुत्रश्चोक्कनाथः शाहजीपुराग्रहारमधिवसति स्म। तञ्जौरस्य शाहजी तस्याश्रयप्रदातासीत्। किञ्चित् कालं यावत् स कर्णाटाधीशस्य वसवभूपालस्य सभामप्यलञ्चकार।

चोक्कनाथप्रणीतानि त्रीणि रूपकाणि सन्ति—(१) सेवन्तिका-परिणयम्, (२) कान्तिमतीशाहराजीयम्, (३) रसविलासभाणश्च।

## कान्तिमतीशाहराजीयम्[2]

### कथावस्तु

कान्तिमतीशाहराजीये नृपतेश्चरितमभिवर्णितम्। भागनगरनरेशस्य चित्रवर्मणो राज्यं यवनैरात्मसात्कृतमासीत्। तञ्जौरमहाराजस्तं यवनान् पराजित्य तद्राज्ये पुनः प्रतिष्ठापितवान्। चित्रवर्मणः पुत्री कान्तिमती

१. अस्य प्रकाशनं १९५६ ईसवीये तिरुपतिस्थ-तिरुमलतिरुपतिदेवस्थान-द्वारा सञ्जातम्।

२. अस्य हस्तलिखिता प्रतिः तञ्जौरस्य सरस्वती-महल-पुस्तकालये वर्तते।

मासपूर्वं तञ्जौरस्यानन्दवल्लीं देवीं पूजयितुं गतासीत्। तत्र शाहजिमहाराजं दृष्ट्वानङ्गपरवशा संवृत्ता।

चित्रवर्मणः पुरोहितस्य पत्नी सुलोचना तञ्जौरमहाराजविदूषकस्य कविराक्षसस्य स्वसासीत्। पुरोहितः कान्तिमत्या मदनातङ्कं विदूषकस्यासूचयत्। न्यवेदयच्च भवान् शाहजिमहाराजमिह कुम्भकोणं नयेति।

शाहजी चित्रवर्माणमवलोकयितुं यामीत्यपदेशेन कुम्भकोणं जगाम। तत्र रथोत्सवं द्रष्टुं सौधोपरि विललास। विदूषकपरामर्शानुसारं कान्तिमती सुलोचनायाः सौधे तिष्ठति स्म। अपरतो विदूषकनिर्देशेन महाराजस्तां ददर्श।

कान्तिमतीमवलोक्य महाराजमनसि तां प्रत्यभिलाषं दृष्ट्वा विदूषकः सान्त्वयामास—अचिरमेव भवानिमां मम व्यवस्थया लप्स्यति।

महाराज-विदूषकयोः कान्तिमतीगतां वार्तां महाराज्ञी स्तम्भान्तरिता शुश्राव। तेन सा राज्ञोऽन्यस्यां प्रेयस्यामनुरागं ज्ञात्वा तत्समक्षमागता। विदूषको महाराजस्य स्थितिं सुदृढयन्नलीकमुवाच—वयस्यस्येयं वार्ता भवत्याश्चित्रचारुतां प्रत्यासीत्। राज्ञी कान्तिमतीति नाम तयोर्वार्तायां श्रुतपूर्वासीदतोऽवदत्—तर्हि सम्प्रत्यहं कान्तिमत्यभिधानास्मि संवृत्ता?

कुम्भकोणे चित्रवर्मा शाहजिमहाराजस्य भव्यमभिनन्दनं चकार। बहुविधञ्चोपायनं निवेद्य सश्रद्धं प्रणनाम। तस्मिन्नुपायने तादृश एको हार आसीत्, यस्य धारणेन धारकोऽदृश्यो भवति। महाराजस्य इदमर्चनं चित्रवर्मणा स्वकीयान्तःपुरे कृतम्। ततः स मन्त्रिभिः सार्धमावश्यकपरामर्शाय सभां गतः। इतश्च कान्तिमतीमहाराजयोः परस्परासक्तयोर्मिलापः समभूत्। तदानीमेव चेटी समागत्याब्रवीत् भागानगरे शत्रुभिर्भयमुत्पन्नम्। अद्यैव सर्वैस्तत्र गन्तव्यमस्ति।

महाराजस्य कृते स्थितिरियमस्वाभाविका संवृत्ता। दिष्ट्या स्थित्यां परिवर्तनं सञ्जातम्। भागानगरसंरक्षणाय रणधीरनामानमन्तपालं नियुज्य चित्रवर्मा कमलालयनृपेण तद्दुहितुः परिणये निमन्त्रितस्तन्नगरं जगाम।

शाहजिमहाराजोऽपि तत्र निमन्त्रित आसीत्। कान्तिमती तत्र मदनातङ्केन प्रपीडिता सख्या उत्सङ्गे शिरो निधायोत्स्वप्नायते स्म।

नायकस्तस्या इमां दशामवलोक्य तस्याः समक्षं बभूव। ततस्तयोर्मित्राणि तौ विहाय चेलुः। तयोः प्रणयव्यापारसमये विदूषको वृक्षात् पपात। सर्वे तस्य सविधेऽधावन्। तेषु चित्रवर्माप्यासीत्। महाराजोऽदृश्यकरं हारं कान्तिमत्याः कण्ठे समारोपयत्। तेन सादृष्टा बभूव। एवं हि नायिका लोकह्रिया रक्षिता।

कान्तिमत्या जननी ज्ञातवती यत्तस्या कन्यायाः प्रणयसम्बन्धो महाराजेन सह वृद्धिमाप्तः। परन्तु महाराजः पूर्वविवाहित आसीत्। अतस्तद्राज्ञ्या अनुमतिमन्तरा कथमिवैतयोर्विवाहः सम्पद्येतइति चिन्तासीत्। एतदर्थं प्रयास आरब्धः।

महाराजस्ततः प्रतिनिवृत्तः। कान्तिमतीविरहज्वालया ज्वलति स्म। एतस्मिन्नेवान्तरे कान्तिमती विदूषकहस्तेन महाराजाय पत्रं प्रेषयामास। राज्ञी तत्सर्वं ज्ञात्वा विमना बभूव। नायिकापि तदुदन्तं श्रुत्वा चिन्ताशोकपरायणाभूत्।

अथ चित्रवर्मणो मन्त्री कान्तिमत्याः परिणयसन्देशं महाराजाय न्यवेदयत्। महाराजेनोक्तं—राज्ञ्या अनुमतिं विना नैतद् भवितुं शक्नोति। तदानीमेवागत्य ज्योतिर्विद्याविशारदोऽवोचत्—महाराजोऽवश्यं कान्तिमतीं परिणयतु। अथ च राज्ञी समक्षमागता। तामागतां दृष्ट्वा सर्वे विदूषकमेवापराधिनं समर्थयामासुः। ततः पश्चात् कमलाम्बिकाविष्टा शोभावती समागत्य कान्तिमती-महाराजयोः कल्याणम् (विवाहं) अभ्युदयोदर्कं समर्थयाम्बभूव। तच्छ्रुत्वा राज्ञ्यपि तयोः परिणयस्यानुमतिं ददौ।

## सेवन्तिकापरिणयम्

### कविपरिचयः

गोदवर्मणा युद्धे केरलराजो वन्दीकृतः। तस्य च परिवारो मूकाम्बिकानगरे सुरक्षितः। मूकाम्बिकानगरं केलदिनरेशस्य वासवभूपालस्याधीनमासीत्। स स्वयमेव तन्नगरं गतस्तेषाञ्च कृते राजप्रासादस्य समक्षं नवीमेकं सौधं कारयामास। राज्ञा तत्सौधोपरि सौन्दर्यराशिः कुमारी दृष्टा। तां प्रत्यासक्तमनाः स विदूषकस्य पुरतः स्वमनोभावं

प्रकाशयति स्म। तदानीमेव कुमार्या मातुर्मूकाम्बिकां देवीं प्रति प्रार्थ्यमानायाः स्वरं शुश्राव। यथा—

मूकाम्बिके मम सुतां तव चरणप्रान्तनिपतितामेताम्।
अनुरूपवल्लभेन क्षिप्रं घटयस्व सार्वभौमेन॥ १. ५२॥

एतदन्तराले राज्ञी (वसवपत्नी) महाराजं द्रष्टुमागता। विदूषकेण सह नवप्रेयसीगतं वार्तालापं कुर्वाणो नृपो ब्रूते स्म—

कुम्भोन्नतस्तनभरा नतमध्यभागा,
राकानिशाकरनिराकरणोद्यतास्या।
दृष्टैव मे नयनयोर्मुदमातनोति,
सेवन्तिका कुसुमवेष्टितवेणिकेयम्॥ १. ५६॥

देव्या चिन्तितं केयं सेवन्तिका नाम मम सपत्नीपदमारूढा? विदूषकेणोक्तं—सेवन्तिकेति पुष्पविशेषस्य नाम, न तु नायिकायाः।

सेवन्तिका वसवभूपालं पतिरूपेण लब्धुं प्रतिदिनं पदातिरेव वनस्थितं चण्डिकायतनं प्रयाति स्म। एकदा जलवृष्टिकारणात् सा सारङ्गिकामन्दारिकाभिधानाभ्यां सखीभ्यां सह तत्रैव नक्तमुवास। अथ च रात्रौ निषादास्तां जह्रुः। देवलक इमं वृन्तातं राज्ञे न्यवेदयत्। राजा प्रजविनमश्वमारुह्य तत्र सद्यो जगाम। तां तेभ्यो ररक्ष। अतः परं तयोः प्रेमाधिकाधिकं विवर्धते स्म। राजाब्रवीत्—

मयीयमनुरक्ताहमस्या वश्यस्तथापि तु।
सस्यपाक इवात्रापि समयः कोऽपि साधकः॥ २. १६॥

नायिका नायकस्यानुमतिं गृहीत्वा गता। ततः प्रभृति वन्यप्रकृत्यां सर्वत्र प्रणयप्रवृत्तिरेव वीक्ष्यते। तस्य कृते सर्वं जगत् सेवन्तिकामयं जातम्।

तत एकाद्भुता घटना घटिता। सेनापतिना निषादाक्रमणे स्थपतिरेको वन्दीकृतो, योऽदृश्यो भूत्वा घोटकारूढः पलायमान आसीत्। तेनैका मूलिका नायकाय दत्ता, यस्याः प्रभावेण जनोऽदृश्यायते। स्थपतिना निवेदितं यद् गोदवर्मा मित्रवर्माणं कन्यां ययाचे। गोदवर्मणा तद्याच्ञा प्रत्याख्याता। ततस्तयोर्युद्धं समजनि। वयञ्च राजदुहितुर्ग्रहणाय नियुक्ताः।

विदूषको नायकमवादीत्—सेनापतिना नायिकायाः पिता मुक्तो विधीयताम्। एवं हि स उपकृतः सन्, कन्यायाश्च भवन्तं प्रति प्रेम ज्ञात्वा तां भवत एव प्रदास्यति। गणको गणनां विधाय विदूषकमतं समर्थयामास।

नायिका नायकमिलापस्य द्वितीयमप्यवसरं प्राप। सा ब्राह्मणानां सहस्रं भोजयित्वा चण्डिकाया आशीर्वच इयेष। राजापि मृगयापदेशेन चण्डिकायतनपरिसरमाजगाम। तयोर्मेलापके विदूषको मध्यस्थ आसीत्। सविदूषको नृपो लतान्तरितस्तस्याः सखीभिर्मिथो निभृतं वार्तालापं शुश्राव। 'महाभाग! दृढं मा परिष्वजस्व' इति नायिकयोत्स्वप्नायितम्। नायिकामुत्सुकामभिवीक्ष्य स तस्याः पुरतो बभूव। तावेकान्ते विहाय क्षणाय सर्वे इतस्ततो गताः। ततो राजा सेवन्तिकामब्रवीत्—

ममान्तिके सम्प्रति याचितं त्वया, पयोधरालिङ्गनमङ्गनामणे!
अवश्यदेयं खलु तत् समागतं, भवेत् प्रतिज्ञा विफला ममान्यथा ॥३.३१॥

नायिकयोक्तं—तत्खलूत्स्वप्नायितमासीत्। स तु अङ्कनिपतिताया नायिकाया मनोरथं पूरयन्नाह—

लज्जासरसि निमग्नं वदनाम्बुजमेतदुन्नमय कान्ते!
श्रमजलदूषितमलके मृगमदतिलकं समीकरोम्यधुना ॥ ३.३२ ॥

कामक्रीडासमारम्भे विदूषको वृक्षात् पतित्वा नवां विपत्तिमारचयति स्म। सर्वे जनास्तत्रागताः। नायकोऽदृश्यकारिण्या मूलिकया नायिकामन्तरयति। तदानीमेव राजा नायिकायाः पितुर्मित्रवर्मणः पत्रमप्राप्नोत्। तत्र लिखितमासीत्—अहं सामन्तेन चित्रवर्मणा मोचितः पुना राजाभवम्। मम परिवारं प्रतिनिवर्तयस्व।

नायिका विदूषकहस्तेन चित्रयोर्विनिमयं कर्तुमैच्छत्। परन्तु गजाद् भीतः स चित्रं विहायात्मानं कथञ्चिदरक्षत्। तच्चित्रं गजशुण्डादण्डेन गृहीत्वा राजप्रासादोपरि चिक्षेप। नायिका नायकं प्रत्युत्सुकासीत्। किन्तु पितृपरवशा केरलान् गता। तदैव तया मन्दारिकामुखेन श्रुतं—श्व एव ते पितोपकारिणे चित्रवर्मणे त्वां प्रदास्यति। तच्छ्रुत्वा नायिका मरणमेव शरणं मन्यते स्म। गणकानामाश्वासनेन सा कथञ्चित् प्राणान् दधार।

मित्रवर्मा वसवभूपालस्योपकारैः कृतज्ञः सन् तस्मै वस्त्राभरणचित्रवस्तुपूरिता मञ्जूषाः प्रेषयितुमैच्छत् । एकस्यां मञ्जूषायां नायिका सारङ्गिकया सख्या सहात्मानं पिदधे । एवं सा वसवभूपालसमीपं गता।

मित्रवर्मा चित्रवर्मणे सर्वं वृत्तं लिखित्वा प्रैषयत् । एतदपि सूचयामास यदहं पञ्चषदिनाभ्यन्तरे तत्र गत्वा दुहितरं वसवभूपालाय सविधि दास्यामि ।

वसवभूपालः सेवन्तिकाविरहव्याकुलो यावद् मित्रवर्मप्रेषितां मञ्जूषां अवलोकयति तावत् स ससखीं नायिकामवलोकयति । महिषी तु सपत्नीभूतां तां दृष्ट्वा विमना बभूव । एतस्मिन्नेव काले मित्रवर्मणः पत्रं सम्प्राप्तम् । तत्र लिखितमासीत्—वस्तुस्थितिं ज्ञात्वा मम हर्षोऽभवत् । सेवन्तिका भवन्तमुचितमेव वृतवती ।

निजकन्यकानुरागं जानन्नपि नैवमन्यथाकरवम् ।
मन्दारिकामुखेन ज्ञात्वा सकलं ततोऽभिनन्दयमहम् ॥

आवेशान्महिषी प्रत्यक्षमागत्य सेवन्तिकां वन्दिनीं चकार ।

अथ मित्रवर्मा यथासमयमागच्छत् । एतदाशातीतमासीद् यन्महाराज्ञ्या स्वयमेव वैवाहिकैराभूषणैः सेवन्तिकां विभूष्य सहर्षं तां सपत्नीकर्तुमुद्यता दृष्टा । राजा तादृशीमुदारां महाराज्ञीं प्राशंसत्—

सेवन्तिकामिदानीं प्रेमातिशयेन लालयन्तीम् ।
नलिनीं विकासयन्ती ज्योत्स्नेव विभाति मे देवी ॥

ततस्तयोर्मोदमये वातावरणे परिणयः सम्पन्नः ।

## अप्पादीक्षितस्य नाट्यसाहित्यम्

### कविपरिचयः

अप्पादीक्षितः 'अप्पाशास्त्री', 'पेरिया-अप्पाशास्त्री' इति नामभ्यामप्यभिधीयते । अस्य जनयिता चिदम्बरेश्वरदीक्षित आसीत् । अनेन तञ्जौरनृपतेः शाहजिनः समाश्रय उपलब्धः । अयं तञ्जौरस्य नातिदूरे किलयूरनाम्नि अग्रहारे निवसति स्म । अस्य विद्वत्तया प्रभावितास्तत्कालिका विद्वांसोऽमुं 'कवितार्किकसार्वभौमः' इत्युपाधिना मण्डयाञ्चक्रुः । अस्यानेककृतिषु चतस्रः कृतय उपलभ्यन्ते—

( १ ) शृङ्गारमञ्जरीशाहराजीयम् ।
( २ ) मदनभूषणभाणः ।
( ३ ) गौरीमायूरचम्पूः ।
( ४ ) आचारनवनीतम् ।

## शृङ्गारमञ्जरी-शाहराजीयम्[1]

### कथानकम्

नायिकां सिंहलराजकुमारीं शृङ्गारमञ्जरीं नायको महाराजः शाहजी स्वप्ने व्यलोकयतत् । ततः स स्वप्नदर्शनस्वरूपानुरूपं तस्याश्चित्रं लिलेख । तद् दृष्ट्वा ज्योतिर्विदुवाच—इदं चित्रं सिंहलराजदुहितुरास्ते । तदानीमेव महाराज्ञ्याहूतो महाराजः सविदूषकोऽन्तःपुरमगात् । तत्र चेटी विदूषकस्य कक्षस्थितं सिंहलराजकुमार्याश्चित्रं चकर्ष । तदवलोक्य महाराज्ञी विमनाः संवृत्ता ।

सिंहलनरेशं सिन्धुद्वीपेशोऽभिषेणयति स्म । सिंहलराजस्तञ्जौर-महाराजं साहाय्यं ययाचे । महाराजेन सैन्यं प्रेषितम् ।

शृङ्गारमञ्जरी महाराजस्य गुणगणैः समाकृष्टा प्रहर्षनिर्भरासीत् । सा योगिन्याः सहायतया नभोमार्गेण महाराजसविधे समागच्छति स्म । कालान्तरे रहस्यमिदं महाराज्ञ्या ज्ञातम् । तया तयोः सङ्गमे समुपस्थितया तत्प्रेममार्गे विघ्नायितम् ।

नायिकाया वियोगे नायकस्य समग्रं जगत् शून्यं बभूव । स चराचरं विश्वं शृङ्गारमञ्जरीं पप्रच्छ । अथ च नायिकायाः सङ्गतये महाराज्ञी-मन्वनयत् । अनुनीता महाराज्ञी तस्य प्रसादं चकार । ततो महाराजः शृङ्गारमञ्जरी च सर्वान् मनोरथान् प्राप्तवन्तौ ।

## मदनभूषणभाणः

### कथावस्तु

मदनभूषणभाणे मदनभूषणाभिधानस्य विटस्य चरितगाथाया अनुरणनं विद्यते । अस्याभिनय उपकावेरि भगवतो गौरीमायूरनाथस्य

1. अस्य प्रतिलिपिद्वयं मद्रासस्य राजकीय-संस्कृतपुस्तकालयस्य डीसंख्यायां १५२६९ तत्रैव तृतीयभागस्य २५७५ संख्यायां च वर्तते ।

मन्दिरे वसन्तोत्सवे सम्पन्नः। नगरं वासन्तिकसौरभेनालङ्कृतमिवावर्तत।

तस्मिन्नगरे मदनमञ्जरीगणिकाया अपत्यं बकुलमञ्जरी बभूव। तस्याः प्रथमविटसङ्गमाय मदनभूषणो निमन्त्रित आसीत्। रात्रौ चन्द्रोदये सति तेन तस्या अपूर्वसुन्दर्या गृहं गन्तव्यमवर्तत।

नायकस्तस्मिन् दिने प्रातरुदतिष्ठत्। तदानीं तस्य कृते सर्वस्मिन् निसर्गे नायिकानायकयोविलासव्यापारविकास एव दरीदृश्यते स्म। नगरं परिभ्रमन् तस्य शृङ्गारितवृत्तीरवलोकयन् सायं समये नायिकागृहप्रवेशनमित्यासीत्तस्य कार्यक्रमः। सर्वप्रथमं मदनभूषणेन कनकवल्ल्या भगिनी चम्पकमाला दृष्टा। तस्याः शुल्कोऽधिको वर्तत इति बभूव तत्र वार्ताविषयः। तस्यै नित्यसौन्दर्यस्याशीः प्रदाय सोऽन्यतोऽसाधयत्। ततः स मालतीं दृष्ट्वा तस्यास्तं बालप्रणयं संस्मारयाञ्चकार। वर्धतां तव सम्मानो लोके इत्याशीः प्रयुज्य वृद्धं विटं विश्वनाथं ददर्श, यो नवयुवत्या वारविलासिन्या वसन्तमालिकायाः प्रणय्यासीत्। त्यज्यतामिदं कृत्यं वार्धक्ये इत्येवमुक्तः स मदनभूषणमुवाच यावज्जीवं नायिकावीरेण भाव्यमित्येष पुरुषार्थः।

ततः स वसन्तमालिकां वृद्धप्रणयं प्रति जिज्ञासमानः पप्रच्छ। सा विषण्णा प्रोवाच—

स्त्रीणां जन्मैव कष्टं जगति पुनरियं वारनारीषु सूतिः
तत्राप्यन्यन्तदुःखं वसति जरतिका यद्गृहे दीर्घकालम्।
खेदस्तत्रापि घोरः स्मरनिगममहातन्त्रसारार्थवित्त्वे,
यत्स्वेच्छाधीनभोगे भवति बहुविधा प्रायशो विघ्नपङ्क्तिः॥

अथ च मदनभूषणो मध्याह्न गमयितुमुद्यानमाससाद। तत्र स नवोदितवाराङ्गनां चन्द्रकलां कन्दुकेन खेलन्तीमवलोकयत्। तस्याः प्रणयिनं मदनपालमप्यपश्यत्, यः प्रभूतां पैतृकसम्पदं तदर्थं व्ययीचकार। तत्प्रकारो ज्ञायताम्—

प्रत्यग्रं वसनद्वयं प्रतिदिनं सूक्ष्मं दुकूलद्वयं
कालेयेन्दुविमिश्रितो मलयजः कस्तूरिकामोदितः।
ताम्बूलानि यथेप्सितान्यभिनवाल्पस्य दानं शतं
निष्काणां पुरुषायुषेऽन्यवनिता नालोकनं चाश्रुतम्॥

मदनभूषणसमीक्षणे सम्यगेवानुष्ठितं मदनपालेन। यतो हि कोटि-व्ययसाध्या यज्ञाः क्रियन्ते। तत्र स्वर्गप्राप्तिः सन्देहसमाकुला वर्तते। परन्त्विह कोटिव्ययकारिणा तेन (मदनपालेन) स्वर्गसुखोपमश्चन्द्रकला-सङ्गमस्तु प्रत्यक्षमेव सम्प्राप्तः। एष वास्तविकः पुरुषार्थः।

अपराप्यस्ति यज्ञमुद्दिश्य मदनपालस्य मीमांसा। सा यथा—यज्ञ-द्वारा कलेवरान्ते यजमानो रम्भामप्सरसं कामयते। किं यज्ञसमारम्भे पत्नी एतदर्थमेव साहाय्यमाचरति यत् सा भर्त्रा परित्यक्ता भवेत्?

अतोऽनन्तरं स रत्नमालिकां, तस्या जरातुरां मातरं, दर्शनमात्रात् परितृप्तिसम्पादिकां पद्मिनीं, तस्याश्च प्रणयिनं भानुनामानं धनकुबेरं, यथानामगुणां हस्तिनीं वाराङ्गनां, शैलूषादींश्च ददर्श। ततश्च ब्रह्मचारि-णोऽवलोक्य तेषां कष्टानि स्मृत्वा स रुराव।

ततोऽग्रे मदनभूषणः कामिनी-कामिनोर्द्यूतं, ऐन्द्रजालिकचमत्कारं, कुक्कुटयुद्धं, मल्लयुद्धं, कञ्चुकिनः कन्यां मञ्जीरणीं, अधर्मपरान् धार्मि-कान्, शिखामणिविटचरितं, मदनपालपत्न्याश्चरितगाथां, लीलावत्या नृत्तं, चन्द्रकान्तस्य स्वैरिण्याः पत्न्याः कामयोगं, बकुलमञ्जर्याश्च सौन्दर्यं विलोकयन् वर्णयँश्च लोकस्य प्रच्छन्नवृत्तान्तमुद्घाटयामास।

## अद्भुतपञ्जरम्[1]

### कविपरिचयः

अद्भुतपञ्जरनाटकस्य रचयिता नारायणदीक्षितो शाहजि-महाराजस्य सभां समलङ्चकार।

तिप्पाध्वरी रामभद्रदीक्षितश्च तस्य गुरू आस्ताम्। प्रस्तुतरूपकस्य कथानकं कविना स्वपितू रङ्गशायिप्रणीतायाः पञ्चशदधिकशतपद्यात्मि-कायाश्चरितगाथाया गृहीतम्।

### कथावस्तु

तञ्जौरमहाराजस्य शाहजिनो महाराज्ञी सारसिकाभिधानामपूर्व-सुन्दरीं (काशिराजदारिकां) महाराजदृष्टेः प्रच्छन्नां राजभवने रक्षति

---

१. अद्भुतपञ्जरस्य प्रकाशनं केरलविश्वविद्यालयस्य 'संस्कृतसीरीज'–२१० संख्यायां १९६३ ईशवीयाब्दे सञ्जातम्।

स्म । महामघे देवी तामाससाद । मेधावी नाम सचिवस्तां काशिराजस्य कमलकेतोः कन्यां लीलावतीं शङ्कते स्म । तां काशिराज सुमेधाभिधानेन स्वमन्त्रिणा सह महामघं द्रष्टुं प्रैषयत् । १६८२ ईसवीये मेधावी लीलावतीं-शाहजि-परिणयं प्रतिश्रृणोति स्म । लीलावत्येव सारसिकाया वास्तविकमभिधानम् ।

एतस्मिन्नेवान्तराले तुरुष्काः काशिराजमभ्यषेणयन् । तत्सन्देशमुपलभ्य तञ्जौरनरपतिर्विशालां सेनां प्रास्थापयत् । तुरुष्काः पराजिताः । सेनापतिर्विजयसेनः पत्रद्वारा काशिराजकुमार्या लीलावत्या लोपं चर्चितवान् । काशिराजात्मजा महाराज्ञ्या मातुलस्य तनयासीत् ।

महाराजो मणिशिखरसौधे स्थितो नवरात्रसमारम्भे भगवतीं चण्डिकां पूजयितुं प्रस्थिताया महाराज्ञ्या अनुसरणपरे महिलावृन्दे तामव्याजसुरूपवतीं लुलोके । दृष्ट्वा च तां महाराजः स्वमनोभावं विदूषकस्य पुरतोऽभिवक्ति स्म । यथा—

अव्याजसुन्दरमनुक्षणदर्शनीयमव्याहतस्फुरणमद्भुतसन्निवेशम् ।
आसिञ्चदान्तरमिदं करणं सुधाभिरानन्दनं किमपि वस्तु ममाविरस्तु ॥

स तु तां स्वकीयां भाग्यरेखामेवामानयत् । तद्धृदये सापरा देवीव प्रतिष्ठिता ।

तस्मिन् पूजने महाराज्ञ्या महाराजोऽपि समामन्त्रित आसीत् । अतो महाराज्ञी सारसिकां महाराजदृष्टेर्दूरयितुं तां शृङ्गारसरसि स्नातुं प्रास्थापयत् । सा खलु महाराजावलोकनकुतूहलिनी तस्य प्रतिबिम्बं सरसो रत्नभित्ताववलोकयन्ती स्थिता । अथ च महाराजे गतवति तत्प्रतिबिम्बाभाव एव सा ततश्चचाल ।

महाराजस्तद्ध्यानलीन एकल आत्मनात्मानं मन्त्रयते स्म—

स्वप्नः किन्नु भवेदयं न हि तदा यज्जागरूकोऽभवं
भ्रान्तिः किं न न यद्विशेषविषयैर्बोधैर्न बाधोदयः ।
सङ्कल्पः किमसौ न नैव यदभूत्तत्तादृशी भावना
कन्दर्पस्य तदीदृशं मनुमहे कौतस्कुतं चेष्टितम् ॥

कियद्दूरे महाराजध्यानपरायणा नायिकापि आत्मनैव मन्त्रणां कुर्वाणा तद्वशंवदा ब्रूते स्म—'भगवति लज्जे ! नमस्ते । यस्यास्तव

प्रभावेण प्रियसखीसन्निधाने स महाभागो न विस्रब्धं दृष्टः। तदिदानीं दयां कुरु। एकाकिनी किमपि मन्त्रयिष्ये।'

महाराजो लतान्तरितस्तस्यास्तत्तादृशमुत्कण्ठितमुपश्रुत्य चेतसि चिन्तयाञ्चकार—

अलङ्कारः शङ्के स किल सकलाया अपि भुवः
स सर्वेषां यूनामुपरि शिरसि न्यस्यति पदम्।
त्रिलोकीसाम्राज्यश्रियमपि स एवार्हति यतः
स्वयं यस्मिन्नेव बलवदियमुत्कण्ठितवती॥

पश्चान्महाराजेनावगतं यदियं तु मय्येवानुरक्ता। अतस्तत्समक्षीभूय प्रोवाच—

पर्युत्सुका भवसि पङ्कजपत्रनेत्रे, यस्मिन् जने निभृतमेव निबद्धभावा।
सोऽयं प्रिये स्वयमिहावसरप्रतीक्षः पर्युत्सुकः परवशश्च पुरस्तवास्ते॥

अस्मन्नेव समये तत एवागच्छन् विदूषकः कलावत्या निवारितोऽन्यां दिशं प्रातिष्ठत। तस्याः स्वरं श्रुत्वा महाराजो लतानिकुञ्जे निलीनो बभूव। सा सारसिकामब्रवीत्—शीघ्रमलङ्कृता भवती पूजयितुमागच्छतु। महादेवी भवतीं प्रतीक्षते।

नवरात्रस्य चरमे दिवसे लोकपावनी मरुद्विधाद्वारा महाराज्यै संदिदेश—एकस्मिन्नेव मण्डपे पूजाद्वयेन न भाव्यम्। महाराज्या निर्णीतम्—अहं कुसुमाकरोद्याने पूजामनुतिष्ठामि सारसिका च वसन्तोद्याने भगवतीमर्चयतु।

सारसिकायाः प्रेमण्युन्मत्तं महाराजं नीत्वा विदूषकस्तत्र प्रागेव तां प्रतीक्षमाणोऽवर्तत। ताभ्यां कलावत्या सार्धं नायिका दृष्टा। ते पुष्पावचये व्याप्ृतेऽवर्तेताम्। तौ तयोर्निभृतं वार्तालापमश्रृणुताम्। अन्ततः सारसिकामहाराजयोः प्रेम महाराज्ञी ज्ञातवती। सा सारसिकां दारुपञ्जरे निरुरोध।

राजसभायां महाराजस्य देव्याः, कमलावत्याः, कमलकेतोः मेधाविप्रभृतीनाञ्च समागमोऽभवत्। कमलकेतुर्न्यवेदयामास यत् केन विधिना तुरुष्काः काशीं रुरुधुः, केन च प्रकारेण—'जीवग्राहं गृहीतो जरठयवनभूनायकस्तावकेन'।

अनन्तरं मन्त्रिणो मेधाविनो योजनानुसारं कमलकेतुना महाराजायोपायनानि प्रदत्तानि। एका च सारसी महाराज्यै समुपायनीकृता। प्रसन्ना देवी विदूषकं प्रोवाच—आनीयतां भावत्कीना सारसी। एतदर्थं विदूषकेण चन्द्रकलानामतो महाराज्या अनुमतिपत्रं मुद्राक्षरसम्पन्नं गृहीतम्। ततस्तु चन्द्रकला सारसिकामानीतवती। सा कमलावतीकमलकेतुभ्यामभिज्ञाता। ततो मोदमये वातावरणे तया सह महाराजस्य परिणयः सम्पन्नः। तदानीमेव समाचारः प्रातः—दिल्ल्यां सफलमाक्रमणमभूत्। काश्याञ्च विश्वनाथः पुनः प्रतिष्ठापित.। अथ महाराजः सम्राट्-पदेऽभिषिक्त आनन्दवल्लीमवन्दत।

## अमृतोदयम्[1]

### कविपरिचयः

अमृतोदयनाटकस्य प्रणेता गोकुलनाथः सुप्रसिद्धमहाकवेः पीताम्बरस्यात्मज आसीत्। विहारान्तर्गतमिथिलायामयं फणदहाभिधानं ग्रामं स्वजनुषालङ्कृतवान्।

गृहस्थाश्रमस्य प्रारम्भिकं जीवनमनेन गढ़वालनृपतेः फतहशाहस्य (१६८४–१७१६ ई०) समाश्रये यापितम्। यथा तद्रचनायामेकावल्यामुल्लिखितम्—

वृत्तसागररत्नानां सारमुद्धृत्य निर्मिता।
एकावली फतहशाह ! तव कण्ठे लुठत्यसौ॥

मासमीमांसाभिधानापरा कृतिस्तेन मिथिलाया राघवसिंहस्य प्रीत्यर्थं प्रणीता। कुण्डकादम्बरी, पदवाक्यरत्नाकरः, वाक्यप्रकाशविवरणम्, सूक्तिमुक्तावली, मुक्तिमदालसा नाटिका, इत्येता अपि तस्य प्रकाशिताः कृतयो विलसन्ति। आयुषो नवतितमे वर्षे काश्यां कविर्दिवङ्गतः। कवेरप्रकाशिता ग्रन्था प्रायेण त्रिंशत् सन्ति।

### कथानकम्

अमृतोदयनाटकस्यारम्भः सुगतागमनामकसेनापतिद्वारा श्रुतिकन्यायाः प्रमितेरपहरणेन भवति। श्रुतिं सुगतागमस्य सैनिका भर्त्स-

१. अमृतोदयनाटकं काव्यमालायाः ५९ संख्यायां प्रकाशितम्।

यन्ति। तस्या रक्षायै तर्केण सहान्वीक्षिकी प्रयतमानास्ते। युद्धे प्रमिती रक्षिता पुरुषस्य च सविधे प्रेषिता। इतश्च परामर्शेण पक्षता समूढा। उदयनश्च पक्षता-परामर्शयो रक्षायै चार्वाकं युद्ध्यति। चार्वाको हतः। अतिक्रूरः सोमसिद्धान्तो वर्धमानेन पञ्चत्वं प्रापितः।

पुरुषः पुरुषोत्तमवियोगे विषण्णो वर्तते। तस्य विलापं श्रुत्वा पतञ्जलिस्तं सिद्ध्या योजयति यया स परमात्मानमवलोकयेत्।

पुरुषः संयमेन समाधि-सिद्धिमाप्तवान्, यद्द्वारा स पुरुषोत्तमं साक्षात् करोति। पुरुषोत्तमेनोक्तम्—पात्रवदाचरन्तः पुरुषा मम हासमुत्पादयन्ति। पुरुषः पुरुषोत्तमेन सह विवादं रोचयन् स्वस्य विलीनतायै तमभ्यर्थयामास। विवादद्वारा पुरुषपुरुषोत्तमयोः सम्बन्धः स्वरूपञ्च विशदीक्रते। जीवन्मुक्तिस्थितौ कर्मगणो महामोहश्च विलीनौ। अपवर्गः क्षेत्रज्ञनगरस्याधिपतिः सञ्जायते।

आन्वीक्षिक्या सह विवादे जायमाने बुद्धमतं नैरात्म्यस्य क्षणिकवादस्य च, सिद्धान्तं प्रतिपादयति। जैनमतं निर्जरासंवराभ्यां विमुक्तेरुपादेयतां समर्थयति। पाशुपतेन शिवसारूप्यमेवापवर्ग इति स्थिरीक्रियते। वैष्णवमतेन भक्तिद्वारा वैकुण्ठसारूप्यं प्रतिपाद्यते।

आन्वीक्षिक्याः पुरतः सर्वमतानि परास्तानि भवन्ति। ब्रह्म-विद्या-मीमांसा-सांख्य-योगप्रभृतिभिरपवर्गोऽभिनन्द्यते।

एवं हि रूपकमिदं प्रतीककोटिकं नाटकं विद्यते।

## राघवाभ्युदयम्[1]

### कविपरिचयः

राघवाभ्युदयस्य रचयिता भगवन्तराय-गङ्गाध्वरी तञ्जौरनरेशस्य एकोजिनः (१६७६–१६८३ ई०) अमात्य आसीत। मुकुन्दविलास-काव्यम् उत्तरचम्पूश्चास्य प्रस्तुतनाटकातिरिक्तमस्ति रचना-द्वयम्।

### कथानकम्

राघवाभ्युदयनाटके रामायणीयमुपाख्यानम् बहुधा परिवर्तितम्।

१. राघवाभ्युदयनाटकस्य हस्तलिखिता प्रतिः तन्जौरस्य सरस्वती-महल-पुस्तकालये वर्तते।

अस्य कथारम्भो रामलक्ष्मणाभ्यां विश्वामित्रस्यानुगमनेन भवति। अस्मिन् रामः सीतायाः प्रासादसंस्थितायाश्छायां सरोवरे पश्यति। तद्दर्शनेनैव तद्वशो भवति। सीतापि तं दृष्ट्वा नेत्रकज्जलेन तस्य चित्रं लिखति।

सीताया मिथिलानगरादेवापहरणमस्यापरा नवीना सङ्घटना। अस्मिन् रामो बालिनं तत्सम्मुखमागत्य निहन्ति। सप्तमाङ्के रावणहननानन्तरं सीतया रामस्य विवाहो भवति।

## कमलिनी-कलहंसम्[1]

### कविपरिचयः

कमलिनीकलहंसनाटकस्य प्रस्तावनायां सूत्रधारेण प्रस्तुतनाटकप्रणेतुः परिचय उत्तरोक्तप्रकारेण प्रदत्तः—

अस्ति केरलेषु सङ्गमग्रामनाम गृहम्।

अभूवन् गाधिकुलजाः कुशलाः सर्वकर्मसु।
द्विजा हरिपदाम्भोजस्मरणाहतकिल्विषाः॥
आसीन्महत्तरस्तेषां नीलकण्ठ इति स्मृतः।
तृतीयस्तस्य तनयो नीलकण्ठः कविस्त्विह॥

### कथावस्तु

कमलिन्याः परिणयः कलहंसेन भवतादिति भगवत्या दुर्गाया आशीरासीत्। एकदाचार्याया विज्ञानवत्या योजनानुसारं सख्या कुमुदिन्या सह पुष्पावचयं कुर्वाणा नायिका श्रीदुर्गाया मन्दिरस्य सविधेऽगात्। तत्रैव नातिदूरे कलहंसोऽपि विद्यमानोऽवर्तत। नायिकां दृष्ट्वा परवशेन तेनोक्तम्—

का न्वियं कमनीयाङ्गी कामं जनयती मम।
उद्याने विद्युदुल्लास हृद्यद्युमती भवेत्॥

कमलिनी-कलहंसौ परस्परं मिलितौ। तयोर्मित्रे तौ विहाय कियद्दूरे तिष्ठतः स्म। नायकस्तामालिङ्गितुमैच्छत्। नायिका ह्रिया तं वारयति स्म।

---

१. कमलिनी-कलहंसस्य प्रकाशनं केरल-विश्वविद्यालयद्वारा १९६ संख्यायामभूत्।

स्म। अस्मिन्नेव समये भगवती विज्ञानवती कुमुदिन्या सार्धमागता। युवां पार्वती-शिवाविव योग्यदम्पती भूयास्ताम् इत्याचार्याशिषं ददौ।

निशायां कमलिनी कलहंसाय व्याकुलासीत्। कलहंसश्च विज्ञानवत्या आह्वानेन तत्समीपं गतः। तदानीमेव त्रायस्व त्रायस्वेति स्वरोऽश्रूयत। गजः कमलिनीमाक्रामन्नासीत्। कलहंसस्तां ररक्ष। स संज्ञाशून्यां कमलिनीमादाय विज्ञानवत्याः सामीप्यमाससाद। कुमुदिन्या निर्णयानुसारं कलहंस एव कमलिन्याः पतियोग्योऽवर्तत। अथ तौ परिणीतौ। नायकस्तामनुनयन्नुवाच—

'प्राप्ते सुन्दरि! कामुको न सहते कालक्षयं सङ्गमे।'

ततो नायिकयोक्तं—'यत्ते छन्दो भवति सर्वं विदधातु। अहं तावल्लज्जया अनीशास्मि।'

अथ नायिका पतिगृहं प्रतिष्ठते स्म। तस्याः सख्याः कुमुदिन्याः पाणिग्रहणं नायकस्य मित्रेण चक्रवाकेन सह संवृत्तम्।

## नल्लादीक्षितस्य नाट्यसाहित्यम्

### कविपरिचयः

नल्लादीक्षितस्यापरमभिधानं भूमिनाथ इति वर्तते। अस्य जन्मभूमिः चोलप्रदेशान्तर्गतकण्डरमाणिक्यस्याग्रहार आसीत्। अयं ग्राम उपकुम्भकोणमवर्तत। अस्य पिता बालचन्द्रकौशिकोऽभूत्। तस्य कृतौ अद्वैतमञ्जर्यां परमशिवेन्द्राचार्यः तच्छिष्यश्च सदाशिवस्तस्य गुरुपदभाजौ स्तः। षड्दर्शनीसिद्धान्तसंग्रहे तस्य गुरो रामनाथमखीन्द्रस्य चर्चोपलभ्यते। कवेः रचनापञ्चकं प्राप्यते—

१—शृङ्गारसर्वस्वभाणः।
२—सुभद्रापरिणयनाटकम्।
३—जीवन्मुक्तिकल्याणनाटकम्।
४—चित्रवृत्तिकल्याणनाटकम्।
५—अद्वैतमञ्जरी।

एतासु निर्मितिषु प्रथमद्वयस्य रचना सप्तदशशतकेऽन्यासाञ्चाष्टादशशताब्दौ सम्पन्ना।

# शृङ्गारसर्वस्वभाणः[१]

## कथावस्तु

शृङ्गारसर्वस्वेऽनङ्गशेखरविटस्य एकदिवसीयाया दिनचर्याया वर्णनमस्ति। तस्य हृदयं काचित्तरुणी समचूचुरत्। सा किल दृगञ्चलेन तं ताडयित्वा गतवती। तव तया सङ्गमो भवितेति विषण्णो विटश्चन्द्रमुखीनाम्न्या कुट्टिन्या समाश्वासितः।

क्षणदा व्यतीतप्रायासीत्। कुलटा विटानां सङ्गतिं विहाय पतिगृहगमनोन्मुख्यः सञ्जाताः। अनङ्गशेखरदृष्ट्यां सूर्योऽपि विटायते स्म। यथा—

प्राचीकुचमुदयाद्रिं परिरभमाणैः करैस्तपनः।
कञ्चन विकासयोगं कुरुते सरसीमुखाब्जेषु॥

अनन्तरमनङ्गशेखरः पण्यवीथिकायां भ्रमित्वा वलयवीथिकामाससाद। तत्र तेनोपभुक्तपूर्वा विद्युल्लता दृष्टा। ततः कावेरीपरिसरप्रणयिनी कलभाषिणी नेत्रविषयमागता, या पतिगृहनिवासं बन्धनं मनुते स्म। यस्यै च विटः परामर्शं ददौ—

'अद्य प्रभृति विशृङ्खलीभूय सफलीकुरुष्व तारुण्यम्! अरण्यचन्द्रिकां मा कुरु करभोरु! सुकुमारतरं शरीरम्।'

अथोऽनङ्गशेखरः शृङ्गारवीथिकां प्रविवेश यत्र वेशवाटोऽप्यासीत्। तत्र स सर्वप्रथमं पद्मावतीं ददर्श। तयोपेक्षितः स पादप्रणत्या तां प्रसादयामास। इयमप्यस्य पूर्वकालिका प्रणयिन्यवर्तत। ततोऽनेन सारसाक्षीविटशेखरौ कलहायमानौ दृष्टौ। तयोर्निर्णयं विधाय चक्षुःपिधानविहारे व्यापृताः सुमध्या-काञ्चनमाला-कलभगमना विलोकिताः। ततोऽग्रेऽम्बरकरण्डकविहारे प्रवीणा कलकण्ठी। कन्दुकेन क्रीडन्ती वसन्तकलिका, द्यूतक्रीडारतौ पद्मलाक्षी-मन्दारकौ च समवलोकिता भाषिताश्च।

अथ मध्याह्नेऽरविन्दमुख्याः सङ्गतिलाभं गृहीत्वा कम्बुकण्ठीरत्न-

१. शृङ्गारसर्वस्वस्य प्रकाशनं काव्यमालायाः ७८ संख्यायां समवर्तत।

चूडादियुगलेभ्यः सार्धं संवदन्नसौ सायं चन्द्रमुखी-कुट्टिनी-साहाय्येन प्राणनाडीं कनकलतां तस्याश्चन्द्रशालायां सञ्जगाम।

## सुभद्रापरिणयम्[1]

### कथानकम्

सुभद्रापरिणयनाटके महाभारत-पुराणेषु प्रसिद्धोऽर्जुनेन सुभद्राहरण-वृत्तान्तः पल्लवितो विद्यते।

दुर्योधनः सुभद्रयात्मनो विवाहं कामयते स्म। अर्जुनस्यानुपस्थितौ स बलरामं प्राभावयत्—अहमेव सुभद्रायोग्य इति। अथ क्रमेण तीर्थान्यटतार्जुनेनापि तस्याः प्राप्तये प्रयतितम्। कृष्णमतेन स साधुवेशः ससख्याः सुभद्राया द्वारकायां सम्मुखीनो बभूव। अर्जुन इत्यभिज्ञाय कृष्णस्वसा तं मनसा वरयाम्बभूव। तदानीमेव बलस्तत्र समागतः। तं वीक्ष्य सखीसमेता सुभद्रा गता। बलोऽभिज्ञानं विनैव साधुवेशधरस्यार्जुनस्य राजकीयोद्याननिवासमनुमन्यते स्म।

एकस्मिन् दिवसे संदिहाना सुभद्रा स्वयमर्जुनस्य सेवामकृत्वा तदर्थं चेटीं प्रेषितवती। तद्दिवसे कृष्णेच्छया भगवाञ्छङ्करोऽर्जुनं युयोध। एतस्मिन्नेवान्तराले दुर्योधनश्चेटीं सुभद्रां मत्वा हृतवान्।

ततः सुभद्रायाः सन्देहः पोषणं लेभे। ग्लानिवशा सात्महत्यां चिकीर्षति स्म। समयादागत्यार्जुनेन सा तत्कर्मणो निवारिता। अथ च तयोः प्रणयः परिणये परिणतः।

---

१. सुभद्रापरिणयस्य हस्तलिखिता प्रतिः मद्रासस्य राजकीय-संस्कृत-पुस्तकालयस्य R O 778 संख्यायां विद्यते।

## सप्तदशशताब्द्या अपराणि रूपकाणि

### मधुरानिरुद्धम्[1]

**कविपरिचयः**

मधुरानिरुद्धनाटकस्य कविश्चन्द्रशेखरः सप्तदशशतकस्य प्रथमचरणे बुन्देलखण्डनरेशस्य राज्ञो वीरसिंहस्याश्रयं प्राप्तवान् ।

**कथानकम्**

बाणासुरः शिवस्य वरं लब्ध्वोद्धतोऽस्ति सञ्जात इति नारदो बल-कृष्णौ वक्ति । अनन्तरं वीरभद्रस्य संवादेन ज्ञायते यद् बाणस्य गर्वेण चिन्तितः शिवः शोणितपुरं विहाय कैलासं गतोऽस्ति । भवान्यपि बाणासुरदुहित्रेऽचिरं पतिं लब्धेति वरं प्रदाय गता । बाणनन्दिनी पार्वतीवरदानस्य रहस्यं स्वसख्यै निवेदयति ।

अनिरुद्धोऽपि बाणनन्दिनीं स्वप्नेऽवलोकयति । नारदस्तस्मै तस्याः परिचयं प्रयच्छति स खलु शोणितपुरं गत्वा तत्र परितोऽग्निपरिखां दृष्ट्वा ज्वालामुखीं प्रसादयति । प्रसन्ना देवी तस्मै गगनचारिताया वरं ददाति । स आकाशमार्गेण नायिकायाः सान्निध्यं प्राप्नोति । तयोः परस्परं गान्धर्वविवाहो भवति । अथ केतुपतनाच्चिन्तितो बाणासुरस्तद्वृत्तं वेत्ति । विदित्वा चानिरुद्धेन सह युद्धमादिशति । नारदेन तद्वृत्तं विदित्वा रामकृष्णादयो यादवा अनिरुद्धस्य सहायतार्थं शोणितपुरमनु-रुन्धन्ति । भगवान् भवानीपतिरपि बाणहेतवे सगणो कृष्णादिभिर्युद्धं करोति । अन्ततः कृष्णो बाणस्य चतुरूनं भुजसहस्रं निकृन्तति । पार्वती-परमेश्वरयोरिच्छानुसारमुषा अनिरुद्धाय दीयते । शिवो बाणं महाकाल-नामानं पार्षदं करोति ।

---

१. मधुरानिरुद्धस्य चर्चा विल्सनेन The Theatre of Hindus इति नाम्नो ग्रन्थस्य १४३–१४५ पृष्ठयोः कृता ।

## नलानन्दनाटकम्[1]

### कविपरिचयः

नलानन्दनाटकस्य रचयिता जीवबुधो वर्तते। अस्य पिता कानेरीराजासीत्। अस्य जन्म उपद्रष्टाकुलेऽभवत्, यस्मिन् पण्डितराजजगन्नाथो बभूव। कविरिदं नाटकं स्वपितृव्यस्य सुब्रह्मण्यस्य वचनात् रचयाम्बभूव।

### कथानकम्

नाटकस्य कथानकं प्रमुखतया महाभारतीयं दमयन्तीनलोपाख्यानमुपजीवति। दमयन्त्याः स्वयंवरमारभ्य विवाह-द्यूत-नलपराजय-ऋतुपर्णसारथ्यादिघटनानामुपन्यासपूर्वकं नायिकायाः पुनर्मिलनपर्यन्तमस्मिन् वर्णनं विद्यते।

## कृष्णाभ्युदयम्[2]

### कविपरिचयः

कृष्णाभ्युदयस्य रचयितुर्लोकनाथस्य जन्म सप्तदशशतकस्य पूर्वार्धेऽभवत्। लोकनाथस्य पिता वरदार्यः कविशेखरोपनामावासीत्। कथ्यते यद् विश्वगुणादर्शस्य रचयिता वेङ्कटाध्वरी प्रस्तुतकवेर्मातुलोऽवर्तत।

### कथानकम्

प्रायः समग्रेऽस्मिन् प्रेक्षणके नारीणां प्राकृतभाषायां संवादो विलसति। विश्ववेदिनी वसुदेवगृहं गत्वा गर्भभरालसां देवकीं ब्रूते—भवत्यास्तु सर्वं शुभमेवास्ते। ततः सा मञ्जूषातः काञ्चनशलाकां निःसार्य पुष्पाक्षतैः प्रपूज्य हस्तौ सम्पुटीकृत्य अन्यान्यपि शुभानि वक्ति। ततस्तस्या हस्तं दृष्ट्वा कथयति—इयमपत्यरेखा। एतदनुसारं तव पुत्रो भविष्यति। स च—

---

१. अस्य हस्तलिखिता प्रतिः तञ्जौरस्य सरस्वतीमहलपुस्तकालये ४३६१ संख्यायामस्ति।

२. अस्य प्रकाशनं जबलपुरात् १९६४ ईसवीये संवृत्तम्।

विश्वम्भराभारहरो धुरीणः विश्वातिगो विश्वविधानदक्षः ।
आकल्पमव्याहतपुष्पकान्तिदीप्तार्कज्योतिरथ वासरस्य ॥ १६ ॥

अथ कृष्णस्य जन्म बभूव । दिव्यमङ्गलवाद्यानि नेदुः । दिवः पुष्पवृष्टिः पपात । अप्सरोभिर्नृत्यमनुष्ठितम् । देवकी पुत्रं वसुदेवस्य हस्ते समर्पयामास । हर्षनिर्भरो पिता प्राह स्म—

अङ्गमङ्गममृतोपमेन मे स्पर्शनेन सुखयस्व पुत्रक ।
अङ्गकैरमृतवृष्टिशीतलैरेधि तापहरणाभिलाषुकैः ॥ २८ ॥

भक्तानामतिप्रीतिसम्पादिकेयं रचना ।

## कृष्णनाटकम्[1]

### कविपरिचयः

कृष्णनाटकस्य प्रणेता मानवेदः ( एरलपट्टि वा ) कालीकटस्य महाराजः ( जमोरिन ) आसीत् । स परमवैष्णवो 'गुरव-यूरस्य' विष्णु-मन्दिरे प्रायो निवसति स्म । स १६५५ ईसवीये महाराजपदं लेभे । श्रूयते यत् स आत्मन आध्यात्मिकगुरोर्विल्वमङ्गलस्यानुग्रहेण बालकृष्णं वंशीं वादयन्तमवलोकयति स्म । स कृष्णेन समं स्पर्शपूर्वकं स्नेहं कर्तुमियेष, तदा तु स मयूर-पक्षं विहायान्तरधीयत ।

महाराजो मानवेदो नारायणभट्टात् साहित्यम् पिशारोटीतश्च व्याकरणमधीतवान् । १६१६ ईसवीये तेन पूर्वभारतचम्पूरिति रचना व्यरचि ।

### कथानकम्

कृष्णनाटकं गीतिनाट्यं वर्तते । अस्मिन्नाख्यानतत्त्वं पद्येषु, भाव-विशिष्टं च तत्त्वं गीतेषु विद्यते । क्वचित् क्वचित् कीर्तनपरम्पराप्यङ्गी-कृता । एवं हि नाटकमिदं रूपकपरम्पराया अभिनवशैल्याः प्रतिनिधित्व-मावहति ।

---

१. अस्य प्रकाशनं त्रिचूरस्थ—'मङ्गलोदयकम्पनीतः' १९१४ ईसवीये समवर्तत ।

## गीतदिगम्बरम्[1]

गीतदिगम्बरनाटकस्य रचयिता वंशमणिर्मैथिलब्राह्मणस्य पिता रामचन्द्र आसीत्। स नेपाले राजाश्रयमुपलभ्य निवसति स्म। १६५५ ईसवीये काठमाण्डूनगरे महाराजः प्रतापमल्लो ब्राह्मणेभ्यः कवचयुनस्यात्मनो भारतुल्यं स्वर्णं रत्नानि च वितताार। तस्मिन्नेवावसरेऽस्य नाटकस्याभिनयो नृपाणां विदुषाञ्च मनोरञ्जनाय विहितः। नाटकेऽस्मिन् चत्वारोऽङ्का विलसन्ति।

## हास्यसागरप्रहसनम्[2]

हास्यसागरप्रहसनस्य रचयिता सरयूपारीणो ब्राह्मणो मधुकरात्मजो रामानन्दोऽवर्तत। १६५६ ईसवीये दाराशिकोह अमुं विराड्विवरणग्रन्थस्य लेखनाय प्रार्थयामास। एतेन कवेर्वैदुष्यं प्रमाणाभवति। कविरयं न केवलं साहित्यविद्याधुरीणः, अपि तु षड्दर्शनस्यापि महान् पण्डित आसीत्।

प्रहसनेऽस्मिन् कुलकलङ्किनी बिन्दुमतीनाम्नी ब्राह्मणवधूः कलहप्रियया कुट्टिन्या मान्दुरिकाभिधानस्य यवनस्य सम्पर्के नीयते। बिन्दुमत्या भ्राता राज्ञे कुलकुठारायेमं वृत्तान्तं निवेदयति। तत्रैव बिन्दुमत्या दुर्वृत्तं सर्वैर्ज्ञायते।

नाटकेऽस्मिन् हिन्दीभाषाया अपि प्रयोगो विद्यते।

## शृङ्गारवापिका[3]

शृङ्गारवापिकाया रचयिता रानाडे उपाह्वयः विश्वनाथभट्टः मूलतः कोङ्कणराज्यवास्तव्य आसीत्। शम्भुविलासकाव्यानुसारं स संसारान्निर्विण्णः काशीमधिवसति स्म। अस्य पिता महादेवभट्टः पितामहश्च विष्णुभट्टोऽवर्तेताम्। अनेनाचार्याद् ढुण्ढिराजात् शास्त्रैः समं साहित्यमधीतम्। कमलाकरभट्टोऽप्यस्य गुरुरासीत्।

---

१. 'कैटलोगोरम'-स्य तृतीयभागे ३२ संख्यायाम्।

२. अस्य हस्तलिखिता प्रतिर्वाराणस्याः संस्कृत-विश्वविद्यालय-पुस्तकालये वर्तते।

३. शृङ्गारवापिकाया हस्तलिखिता प्रतिः होशियारपुरस्य विश्वेश्वरानन्द-वैदिक-शोध-संस्थाने ३५६१ संख्यायामस्ति।

शृङ्गारवापिकां विश्वनाथ आमेरीमहाराजस्य रामसिंहस्य (१६६७-७५ ई०) आश्रये प्रणीतवान्। उज्जयिन्न्या नरपतिश्चन्द्रकेतुश्चम्पावती-नरेशस्य रत्नपालस्य कन्यां स्वप्ने ददर्श। सिद्धयोगिन्या मुण्डमालायाः प्रयत्नेन तस्याः प्राप्तेः कथाविलासो विद्यते।

प्रस्तुतनाटिकायां कवेराश्रयदातू रामसिंहस्य प्रशंसनं बाहुल्येनास्ते। समस्यापूर्त्यात्मकं कविसम्मेलमप्यस्यां विलसति।

## मदनाभ्युदयभाणः[1]

मदनाभ्युदयभाणस्य प्रणयनं सप्तदशशतके वशिष्ठगोत्रोद्भवेन सर्व-शास्त्रिणः सूनुना कृष्णमूर्तिना कृतम्। कविरात्मानम् अभिनवकालिदासं कथयति स्म। यक्षोल्लासाभिधानास्यापरा कृतिरस्ति, यस्मिन्नुत्तरमेघस्य कथा प्रपञ्चिता वर्तते।

## कुशलवविजयम्[2]

कुशलवविजयस्य रचयिता वेङ्कटाद्रेः पुत्रो वेङ्कटकृष्णदीक्षितः तञ्जौर-महाराजस्य शाहजिन आश्रयं प्राप्तवान्। स खल्वुच्चकोटिकः कविरासीत्। स नटेशविजयकाव्यं, श्रीरामचन्द्रोदयकाव्यम्, उत्तरचम्पूमपि प्रणिनाय। शाहजीच्छया कविनेदं नाटकं विरचितम्।

१६६३ ईसवीये वेङ्कटकृष्णेन शाहजिपुराग्रहारे भाग उपलब्धः।

## युक्तिप्रबोधनाटकम्[3]

युक्तिप्रबोधनाटकस्य रचयिता मेघविजय-गणी आसीत्। कृपा-विजयो विजयप्रभसूरिश्चास्य गुरू बभूवतुः। ताभ्यामयं व्याकरणे, ज्योतिषि न्यायशास्त्रे साहित्ये च पाटवं लम्भितः। अस्य सप्तसन्धान-काव्यमभिनवां शैलीमावहति। देवानन्दाभ्युदये विजयदेवसूरेश्चरितं

१. मदनाभ्युदयभाणस्य प्रतिः Triennial Cat. of Sanskrit Mss. in Oriental Libray द्वितीयखण्डे २०७३ संख्याका वर्तते।

२. अस्य हस्तलिखिता प्रतिः ७६ संख्यायां त्रावणकोरे विद्यते।

३. अस्य प्रकाशनं रतलामस्य 'ऋषभदेवकेसरीमल-श्वेताम्बरसंस्थातः' संवृत्तम्। आगरायां निवसता कविना नाटकमिदं विरचितम्।

वर्णितम् । शान्तिनाथचरिते चानेन नैषधीयचरितस्य कवित्वं समस्यारूपेणोपस्थापितम् । मेघदूतसमस्यालेखे विजयप्रभसूरितः प्राप्तस्य सन्देशामृतस्य वर्णनमस्ति । अस्यैव सूरिमहाभागस्य चरितं दिग्विजय-महाकाव्येऽभिवर्णितमस्ति ।

मेघविजयेन युक्तिप्रबोधनाटके न्यायदर्शनस्य सिद्धान्ताः प्रतिपादिताः । लेखकेनास्य टीकापि स्वयमेव लिखिता । अस्य प्रधानमुद्देश्यं पण्डितबनारसीदासस्य मतस्य खण्डनं वर्तते । बनारसीदासेन न्याय-सम्बन्धिसम्प्रदायः १६८० विक्रमाब्दे स्थापितः ।

## रतिमन्मथम्[1]

रतिमन्मथनाटकस्य रचयिता जगन्नाथः तञ्जौरनृपतेरेकोजितः (१६७५-१६८४ ई०) मन्त्रिणो बालकृष्णस्यात्मज आसीत् । वसुमती-परिणयमिति कवेरपरं नाटकमस्ति । शरभराजविलासाभिधानाप्य-स्यापरा कृतिः ।

सरफोजिप्रथमस्य (१७१२–१७२८ ई०) आश्रयो जगन्नाथेन समुपलब्धः । स्टेनकोनोमतानुसारमस्य गुरुः कामेश्वरोऽवर्तत । अयं प्रायेण स एव जगन्नाथः, यस्तञ्जौरवास्तव्य आसीत्, शाहजहाँसम्राज-स्तनयस्य दाराशिकोहेन च सम्बद्धो बभूव ।

## अतन्द्रचन्द्र-प्रकरणम्[2]

### कविपरिचयः

अतन्द्रचन्द्रप्रकरणस्य रचयिता जगन्नाथोऽस्ति, यस्याश्रदाता फतेह-शाहः (१६८४-१७१६ ई०) आसीत् । कविरयं तीरभुक्तेः प्रख्याते काव्य-जीविनि वंशे सम्बभूव । अस्य पितामहो रामचन्द्र उच्चकोटिको विद्वान् आसीत् । अस्य त्रयोऽग्रजा अपि श्रेष्ठा विद्वांस आसन् । कवेः पिता पीताम्बराभिधानोऽवर्तत ।

---

१. अस्य हस्तलिखिता प्रतिः तञ्जौरसरस्वतीमहलपुस्तकालयेऽष्टमे भागे ३४९० संख्यायामस्ति ।

२. अस्य हस्तलिखिता प्रतिः 'भण्डारकर-ओरिएण्टल रिसर्च इन्स्टीट्यूट' पूनायामास्ते ।

जगन्नाथस्य कृतिषु केवलमिदमेवोपलभ्यते। अस्य प्रणयनमाश्रयदातुः सामन्तानाञ्च मनोरञ्जनमुद्दिश्य कृतम्। अस्मिन् सप्ताङ्का विलसन्ति। युगेऽस्मिन् प्रायः प्रकरणकोटिकानां रूपकाणामभावो दृश्यते। अतएवापि रूपकस्यास्य महत्त्वमसन्दिग्धं वर्तते।

## कथानकम्

अतन्द्रचन्द्रप्रकरणस्य चरितनायकाः प्रकृतिप्राङ्गणे विचरणशीलाः सन्ति। अस्य नायको नैशतमोहरश्चन्द्रो वर्तते। अयं चन्द्रिकायामनुरक्तः। अपरश्चास्य नायको गाम्भीर्योपमानः सागर आस्ते, यस्य चन्द्रकलया प्रणयव्यापारो वृद्धिङ्गतो विद्यते।

चन्द्रस्य प्रतिनायकः तमिस्राजातो विमूढोऽस्ति। कादम्बिनीनाम्नी सिद्धयोगिनी प्रतिनायकस्य सहायिका वर्तते। तस्या योजनया चन्द्रिकायाः परिणयो विमूढेन सार्धमायोजितः। किन्तु सानुमत्यभिधाना नायकस्य प्रियङ्करी सिद्धयोगिनी स्वप्रपञ्चेन चन्द्रिकायाः सख्या साकं विमूढस्य विवाहं कारयति। अनन्तरं शिक्षिता कलावती प्रतिनायकस्य भगिनीं सागरेण सह सङ्गमस्य प्रलोभनं दत्वात्मना सह नयति।

विमूढेन चिन्तितं यदयं चन्द्रसागरयोर्दुरभिसन्धिरस्ति। अतः स तावभिषेणयति सेनया सार्धम्। द्वयोरपि सेनयोर्लोमहर्षकरं युद्धं प्रवर्तते। अन्ततो विमूढः पराजयमाप्नोति।

कादम्बिनी तिरस्करिण्या विद्यया चन्द्रिकाया हरणं सम्पादयति। तया वियुक्तश्चन्द्रो मर्तुकामो भवति। तन्मित्रेण सागरेणापि मृत्यावेव श्रेयः समवलोक्यते। एवं स्थितौ चन्द्रिकायाः पक्षधारिणी शारदाभिधाना योगिनी विद्याया आकर्षिण्याः प्रयोगेण तां चन्द्राय रक्षति। अनन्तरं तयोः परिणयः सम्पन्नः। चन्द्रकला तु सागरस्य प्रागेव बभूव।

प्रस्तुतं प्रकरणं स्त्रीप्रधानं वर्तते। अस्मिन् पुरुषपात्राणां संख्या पञ्चैवास्ति, परन्तु नार्यस्त्रयोदश सन्ति। रूपकेऽस्मिन् समग्रभारतस्य प्राकृतिकविभूतीनां संग्रहोऽवलोक्यते। गङ्गया समं गोदावरी-पञ्चवट्यादयो विलसन्ति।

## कल्याणपुरञ्जनम्[1]

कल्याणपुरञ्जनस्य रचयिता शठमर्दनगोत्रोद्भवः तिरुमलाचार्यो वर्तते। आचार्योऽयं तेलङ्गानाया गडवलमधिवसति स्म। गडवलस्य रेड्डीनरेशाः संस्कृतविद्याया उन्नायकाः आसन्। कविना पालभूपालस्याश्रय उपलब्धः। कल्याणपुरञ्जने द्वावेवाङ्कौ स्तः।

१. अस्य हस्तलिखितप्रतेर्निर्देशो 'मैसूरकैटालाग'–द्वितीये भागे १८६४ संख्यायामास्ते।

# इन्दुराजस्य काव्यतत्त्वविवेचनं इन्दुराजयोरैक्यञ्च[1]

डॉ० दशरथ द्विवेदी

संस्कृतकाव्यशास्त्रे प्रसिद्धौ खलु द्वाविन्दुराजनामानौ काव्यशास्त्राचार्यौ। भट्टोद्भटस्य काव्यशास्त्रग्रन्थस्य काव्यालङ्कारसारसङ्ग्रहस्य लघुवृत्तिटीकाकृन्मुकुलभट्टशिष्यः प्रतीहारेन्दुराज इति तयोः प्रथमः[2]। द्वितीयश्च श्रीमदभिनवगुप्ताचार्यस्योपाध्यायत्वेन लोचनादिषु सङ्कीर्तितः भट्टेन्दुराज इति[3]। प्रतीहारभट्टेत्युपाधिभेदात्, लघुवृत्तौ च ध्वनेरलङ्कारादावेव समावेशात् भिन्नावेताविन्दुराजाविति साहित्यदर्पणस्य भूमिकायां स्वर्गीयाः म० म० काणे महोदयाः, श्रीमन्तः सुशीलकुमारदे प्रभृतयो विद्वांसश्च स्वस्वप्रवन्धेषु प्रतिपादयन्ति[4]। अत्र च द्वयोरपीन्दुराजयोरैक्यं

---

१. निवन्धोऽयमखिलभारतीयप्राच्यविद्यासम्मेलनस्याष्टाविंशतितमेऽधिवेशने धारवाडाख्यस्थाने षट्सप्तत्यधिकैकोनविंशतिशततमेऽब्दे पण्डितपरिषदि समुपस्थापितः।

२. विद्वद्ग्रथान्मुकुलादधिगम्य विवेच्यते। प्रतीहारेन्दुराजेन काव्यालङ्कारसङ्ग्रहः। लघुवृत्तौ, श्लोक सं० ३, इत्यत्र, पुनश्च लघुवृत्तिसमाप्तौ—काव्यालङ्कारसारे लघुविवृतिमधात् कौङ्कणः श्रीन्दुराजः। तथा च काव्यालङ्कारसारसङ्ग्रहस्य प्रतिसर्गविवृतिसमाप्तौ—इति श्रीमहाश्रीप्रतीहारेन्दुराजविरचितायामुद्भटालङ्कारसारसङ्ग्रहलघुवृत्तौ—वर्ग इति विवृत्तौ वृत्तिकृता स्वयमेव प्रतीहारेत्युपाधिनालङ्कृतं स्वनाम।

३. भट्टेन्दुराजचरणाब्जकृताधिवास—इति ध्वन्यालोकलोचनस्य द्वितीये श्लोके, यथास्मदुपाध्याय—भट्टेन्दुराजस्येत्येवमेव लोचनेऽभिनवभारत्याञ्चाभिनवगुप्तेन बहुशः भट्टेन्दुराज इति नाम्ना स्मृतः।

४. द्रष्टव्यात्रभूमिका साहित्यदर्पणस्य स्वर्गीयस्य म० म० पाण्डुरङ्ग वामन-काणे महोदयस्य १९३३ तमेशवीयवर्षसंस्करणस्य; तथा च डा० दे महोदयस्य हिस्ट्री आव संस्कृत पोपटिक्स पृष्ठाङ्काः ७४–७६; अपि च प्राच्यविद्यासंशोधनमन्दिरस्य पञ्चविंशत्यधिकैकोनविंशतिशततमेशवीय-वर्षस्य पूनासंस्करणस्य काव्यालङ्कारसारसङ्ग्रहस्य लघुवृत्ति-

तथा च लघुवृत्त्याश्रितेन्दुराजकृतकाव्यतत्त्वविवेचनमेव प्रतिपाद्यते विद्वदुत्कण्ठाविनोदाय। स्वभावतश्चास्य निबन्धस्य विषयाश्रितौ भागौ द्वौ सम्पद्येते। प्रथमे च भागे इन्दुराजयोरैक्यमेव विनिबद्धम्। तत्र तावदिन्दुराजस्य काव्यतत्त्वविवेचनमेवोपस्थाप्यते प्रथमं समासतया।

( १ )

द्विजराजस्येन्दुराजस्य लघुवृत्त्याश्रितकाव्यतत्त्वविवेचने काव्यप्रयोजनम्, काव्यस्वरूपं, काव्यस्यात्मतत्त्वावेक्षणं, गुणालङ्कारवृत्तीनां स्वरूपं काव्ये स्थानञ्च, शब्दशक्तिनिरूपणं, ध्वनिपरीक्षणादिकञ्च विषयमवलम्ब्यैवात्र किमपि किञ्चित् प्रतिपित्सुरस्मि। तत्र च काव्यप्रयोजनमेव तावत्प्रथमं विचार्यत इन्दुराजस्य—

( १ ) काव्यप्रयोजनम् :—अलङ्कारप्रजापतयः भामहोद्भटादिप्राचीनालङ्कारकाराः विश्वनाथप्रभृतयश्च नव्याचार्याः चतुर्वर्गफलावाप्तिरेव काव्यस्य प्रधानप्रयोजनमित्यङ्गीकुर्वन्ति[१]। लघुवृत्ताविन्दुराजोऽपि एवमेव चतुर्वर्गफलप्राप्तिमेव काव्यप्रयोजनत्वेनोपपादितवान्। भाविकालङ्कारलक्षणे—'प्रत्यक्षा इव यत्रार्था दृश्यन्ते भूतभाविनः। अत्युद्भुताः

---

भूमिकायां २६ पृष्ठे श्रीनारायणवनहट्टीमहोदयस्य विवेकोऽपि द्रष्टव्यः। श्रीवनहट्टी महोदयेन द्वयोरपीन्दुराजयोर्भेदमाशङ्क्यापि द्वयोरभेदत्वं सम्भाव्यत इति विनिश्चितम्। न च निश्चयेन अभेदत्वमूचिवान्। तथाप्यस्य मतस्य डा० दे महोदयेन स्वकीयकाव्यशास्त्रेतिहासग्रन्थे विधिवदालोचना कृता। पीटर्सनमहोदयश्च सुभाषितावल्लयाः भूमिकायां द्वयोरभेदत्वमेव प्रतिपादितवानिति देकाणेप्रभृतिषु ग्रन्थेपूल्लेखः। तदेवं स्थितायां विमतौ द्वयोरपीन्दुराजयोरस्मिन् प्रबन्धे सतर्कं मया अभेदत्वं स्थाप्यते।

१. धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति प्रीतिं कीर्तिं च साधुकाव्यनिषेवणम्॥ इति भामहालङ्कारे, १।२
चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि। काव्यादेव—विश्वनाथः, साहित्यदर्पणे, १।२
एवमेव प्रायशोऽन्य एव सर्वे आलङ्कारिकाः।

स्यात्तद्वाचामनाकुल्येन भाविकम्।' इति भट्टोद्भटोक्तलक्षणव्याख्याना-वसरे चतुर्वर्गफलावाप्तिरेव कवेर्विशिष्टोल्लेखसाफल्यमितीन्दुराजेनोदाजहारि। तद्यथा—

'वाचामनाकुलता व्यस्तसम्बन्धरहितलोकप्रसिद्धशब्दोपनिबन्धात् झगित्यर्थप्रतीतिकारिता। तस्यां हि कवेः सम्बन्धी यो भावः आशयः शृङ्गारादिरससंवलितचतुर्वर्गोपायभूत विशिष्टार्थोल्लेखी स कविनेव सहृदयैः—स्वाभिप्रायाभेदेन—साक्षात्क्रियते। (ल० वृ० पृ०, ७६) पुनरपि तत्रैवाभिनयादिद्वारेणैव चतुर्वर्गोपायलाभो भवति इति सुष्ठूपपादितमिन्दुराजेन।[1] इति चतुर्वर्गफलावाप्तिरेव काव्यप्रयोजनमितीन्दुराजस्य विचारः, शृङ्गारादयश्च तदुपायतया काव्येषु कविभिः निबध्यन्त इति।

(२) काव्यस्वरूपम्—संस्कृतकाव्यशास्त्रे शब्दार्थौ काव्यमिति प्राचीनाद्यतनाश्च सर्व एवाचार्याः प्रायः मन्यन्ते। काव्यस्वरूपविषये इन्दुराजोऽपि प्राचीनसर्राणमनुसरन् वामनोद्भटपथानुयायीतिप्रतीयते। काव्यालङ्कारसूत्रवृत्तिकृता वामनेनोक्तं—, 'काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते। भक्त्या तु शब्दार्थमात्रवचनोऽप्रगृह्यते।[2] 'काव्यलिङ्गं व्याचक्षाणः इन्दुराजोऽपि शास्त्रलिङ्गात् काव्यलिङ्गस्य वैशिष्ट्यं प्रतिपादयन् काव्यस्वरूपमवोचत्। तत्तु वामनमतानुसार्येव। तस्यैव शब्देषु—

(१) काव्यं खलु गुणसंस्कृतशब्दार्थशरीरत्वात्।[3]

(२) शब्दार्थशरीरत्वेन काव्यस्यावस्थानात्।[4]

(३) गुणसत्क्रियमाणशब्दार्थशरीरं काव्यं दृश्यते।[5]

---

१. अभिनयादिद्वारेण शृङ्गारादिरससंवलितत्त्वं चतुर्वर्गोपायस्योक्तम्। ल० वृ०, पृ० ८०।

२. वामनः काव्यालङ्कारसूत्रवृत्तौ, सूत्रस्य वृत्तौ, तुलनीयं ल० वृ०, पृ० ८१–८५।

३. तत्रैव लघुवृत्तौ, पृ० ८१।

४. तत्रैव, पृ० ८१।

५. तत्रैव, पृ० ८२।

( ४ ) गुणसंस्कृतशब्दार्थशरीरत्वात्सरसमेव काव्यम् ।[1]

( ५ ) गुणसंस्कृतशब्दार्थशरीरमेव काव्यम् ।[2]

( ६ ) गुणसंस्कृतशब्दार्थशरीरत्वात् काव्यस्य सरसत्वम् ।[3]

एवमिन्दुराजदृशा गुणसंस्कृतशब्दार्थशरीरमेव काव्यमित्यायातम्। यथा च कुन्तकप्रभृतयः न केवलं शब्दः न केवलं वाच्यमेव वा रचना-चमत्कारकारि काव्यमिति प्रतिपादयन्ति इन्दुराजोऽपि तथैव काव्ये खलु शब्दार्थयोः विशिष्टमेव साहित्यमभिप्रेतमिति मन्यते। काव्यलक्षणे गुणसंस्कृतपदोपानादेतत्सिद्धम्। काव्यस्वरूपविषये वामनस्यैवैतन्मतं प्रतिपादयति लघुवृत्तिकारः इति नात्र भ्रमितव्यम्। यतोहि 'काव्यं ग्राह्यमलङ्कारात्' इति वामनसूत्रं व्याचक्षणः गोपेन्द्रतिप्पभूपालः काव्य-स्वरूपविषयकमेकं श्लोकमुद्भटस्येति कृत्वोद्धृतवान्। तद्यथा तेषामेव शब्देषु—

भट्टोद्भटेनापि कथितम्—

गुणालङ्कारचारुत्वयुक्तमप्यधिकोज्ज्वलम् ।
काव्यमाश्रयसम्पत्त्या मेरुणेवामरद्रुमम् ।। इति ।।[4]

एवं गुणालङ्कारसंस्कृतं गुणालङ्कारचारुत्वं युक्तमेव वा शब्दार्थशरीरं काव्यमित्येवाभीष्टमासीदुद्भटभट्टस्यापि। वामनेन तदनुचेन्दुराजेनोद्भट-मतमेवोपबृंहितमिति।

( ३ ) काव्यात्मविवेचनम् :—काव्यलिङ्गालङ्कारव्याख्यावसर एव तट्टीकाकृदिन्दुराजः रस एव काव्यस्यात्मेति सिद्धान्तितवान्। तेषामेव मुखेन—

'न खलु काव्यस्य रसानां चालङ्कार्यालङ्कारभावः। किन्त्वात्मशरीर-भावः। रसाः हि काव्यस्यात्मत्वेनावस्थिताः। शब्दार्थौ च शरीररूपतया।

---

१. तत्रैव, पृ० ८३।

२. तत्रैव, पृ० ८४।

३. तत्रैव, पृ० ८४।

४. वामनस्य काव्यालङ्कारसूत्रवृत्तौ, १–१–१–सूत्रस्य टीकायाम्, गोपेन्द्रतिप्पभूपालः।

यथा ह्यात्माधिष्ठितं शरीरं जीवतीति व्यपदिश्यते तथा रसाधिष्ठितस्य काव्यस्य जीवद्रूपतया व्यपदेशः क्रियते तस्माद्रसानां काव्यशरीरभूतशब्दार्थविषयतयात्मत्वेनावस्थानं नत्वलङ्कारतया ।'[1] इति ।

अवधेयं खल्वत्र । उद्भटस्तु रसाद्यभिव्यक्तावेव रसवदाद्यलङ्कारा इति मन्यते । रसवदलङ्कारव्याख्यावसरे चेन्दुराजः—'स्फुटरूपतया शृङ्गारादिरसाविर्भावो दृश्यते तत्काव्यं रसवत् । रसाः खलु तस्यालङ्काराः ।'[2] इति व्याख्यानं प्रददद्रसस्यालङ्कारतामपि सम्यगूचिवान् । किन्तूद्भटमतावस्थापनमेवात्र टीकाकारस्याभिप्रेतमिति न भ्रमितव्यं यदिन्दुराजः काव्येषु रसस्यालङ्कारतामूरीकरोति । रसवदलङ्कारविचारावसरे—

'रसानां भावानां च काव्यशोभातिशयहेतुत्वात् किं काव्यालङ्कारत्वमुत काव्यजीवितत्वमिति न तावद्विचार्यते ग्रन्थगौरवभयात् । रसभावस्वरूपं चात्र न विवेचिमप्रकृतत्वाद्बहुवक्तव्यत्वाच्च ।'[3]

इति प्रतिपादयन् टीकाकारः सुतरामेव स्वमनोऽभिनिवेशोन्मीलनं चकार । इत्युक्तवाक्येन प्रतीयते यदिन्दुराजः रसस्वरूपं तस्यात्मत्वमित्याद्यन्यत्र कुत्रापि विचारितवान् । काव्यलिङ्गव्याख्यानावसरे चात्मत्व सिद्धान्तस्तु तस्य सुतरां परिदृश्यत एव न च तत्रास्ति तन्मताभिमतं रसस्वरूपविवेचनमत एव सिद्धमिदं यत्स ध्वनिवाद्येवासीत् । अत्र तूद्भटभट्टमतमनुसरन्नेव तेन रसस्वरूप परिचर्चा कृता । बहुतरवक्तव्यत्वाच्चात्र न तेन विस्तरेण लघुवृत्तौ रसस्वरूपं व्याख्यातम् । रसाद्यभिव्यक्तिश्च काव्ये कथमुपजायते इति त्वग्रे किमपि किञ्चित् निदर्शयिष्यामः ।

## ( ४ ) गुणालङ्कारवृत्तिस्वरूपं काव्ये स्थानञ्च

काव्यलिङ्गालङ्कारलक्षणव्याख्यान एवेन्दुराजेन गुणालङ्कारयोः स्वरूपविवेको कृतः । स च वामनानुसारी । तन्मते च काव्येषु गुणानामलङ्कारापेक्षया नित्यत्वमेव भवति । काव्यं खलु गुणसंस्कृत-

---

१. ल० वृ०, पृ० ८३ ।

२. तत्रैव, पृ० ५३ ।

३. तत्रैव, पृ० ५४ ।

शब्दार्थशरीरमेव। गुणाश्च माधुर्योजःप्रसादलक्षणास्त्रिधा। अत्र च गुणानां संख्यानिर्धारणे भामहमतमेवानुसरतीन्दुराजः। वामनेन शब्दार्थयोः प्रत्येकस्य दश गुणाः व्याख्याताः। तन्नादृतमिन्दुना। गुणानां त्रैविध्यं भामहेन तदनु चेन्दुराजेन, संभाव्यते चोद्भटेनाप्यङ्गीकृतम्। ततश्च ध्वनिवादिभिरपि गुणानां त्रैविध्यमेव स्वीक्रियते। आचार्यमम्मटभट्टेन वामनादिप्रोक्तदशगुणाः त्रिविधेष्वेव गुणेष्वन्तर्भाविताः। इन्दुराजस्य व्याख्यया त्रिविधगुणेषु प्रसादस्यैव प्राधान्यम्, वस्तुतस्तु माधुर्यौजोभ्यामुपबृंहितप्रसादेनैवाव्यवधानेन रसाद्यभिव्यक्तिर्जायत इति लघुवृत्तिकारस्याशयः। तेषामेव पङ्क्तयोऽत्र द्रष्टव्याः—

'माधुर्यमाह्लादकम्। ओजो गाढता। प्रसादस्त्वव्यवधानेन रसाभिव्यक्त्यनुगुणता। तदेतेषां त्रयाणां गुणानां प्रसादस्य प्राधान्यम्। माधुर्यौजसोस्तु तत्तद्रसाभिव्यक्त्यानुगुण्येन तारतम्येनावस्थितयोः प्रसाद एव सोपयोगता।'[1]

न चोक्त्यानयालङ्काराणां निरूपयोगित्वमित्याकलनीयम्। गुणाहितशोभे काव्येऽलङ्काराणां शोभातिशयविधायित्वात्। लौकिकालङ्कारवत्। यथा च संस्कृत एव युवतिवपुषि निबद्ध्यमानानां हारकेयूरादीनां कृतकृत्यता शरीरशोभावृद्धिश्च तथैव काव्येष्वपि, गुणसंस्कृतकाव्येऽलङ्काराणां कृतकृत्यता जायते। जरद्योषित्यलङ्कारा निबद्ध्यमानाः तस्याः शोभां तु नैव जनयन्ति, अलङ्काराणां सौभाग्यं च हीयते। अतएव काव्येष्वलङ्काराणामनित्यधर्मत्वं, गुणानाञ्च नित्यत्वम्। गुणरहितं काव्यमकाव्यमेव भवति, न त्वलङ्कारविरहितम्। अत्र चेन्दुराजः स्वसिद्धान्तसमर्थनाय दृढीकरणाय च वामनमतमुत्थापयति—'काव्यशोभाया कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः पूर्वे नित्या इति'।[2] अन्तरञ्च अलङ्काररहितमपि काव्यं गुणसंस्कृतशब्दार्थमयत्वात्

---

१. तत्रैव, पृ० ८१।

२. तत्रैव, पृ० ८२–८३, तथा च वामनः, का० सू० वृ०, ३. १. १–३, वृत्तिरपि। 'गुणाहितशोभे काव्येऽलङ्काराणां शोभातिशय' विधायित्वाल्लौकिकालङ्कारवत्। न खलु निर्गुणेऽपि काव्ये निबद्ध्यमानानामलङ्काराणां जरद्योपिदलङ्कारवच्छोभाविधायित्वं दृश्यते। जरद्योषिति

सरसतामापादयितुमीष्ट इति प्रतिपित्सुः अमरुकस्य रसस्यन्दिश्लोकमेकमवतार्य तत्रालङ्काराभावो रसाविर्भावश्च, 'कथमपि कृत प्रत्यापत्ता'[1] वित्यादौ प्रदर्शितवान्। अत एवायातमिदम्—रसाभिव्यक्तिश्च गुणेष्वेव। ते च त्रिधा। काव्येषु गुणाः नित्यधर्माः, अलङ्काराश्च नित्या एवेतिलघुवृत्तिकारविवेकः।

'वृत्तयो रसाद्यभिव्यक्त्यनुकूलवर्णव्यवहारात्मिकाः'[2] इति वृत्तिस्वरूपमुन्मीलितमिन्दुराजेन वृत्त्यनुप्रासलक्षणव्याख्यानावसरे। रीतीनान्तु लघुवृत्तावुल्लेख एव नास्ति। 'अलङ्कारस्य खल्वलङ्कार्यपरतन्त्रतया निरूपणे क्रियमाणे सुष्ठु स्वरूपं निरूपित भवति,[3] इत्युक्त्वा टीकाकारेण शब्दार्थालङ्कारगुणादिविवेके आश्रयाश्रयिभाव एव समाश्रयणीय इति रूय्यकादेर्मार्गप्रदर्शनेन महदुपकृतम्। एवमेव तत्तदलङ्काराणामन्वर्थकत्वं, परस्परमलङ्काराणां भेदः, जातिगुणक्रियाद्रव्यादीनाञ्चेति विविधाना-

---

अलङ्कारा निबद्ध्यमाना न तस्या शोभाङ्कुर्वन्ति। प्रत्युत तेषामात्मीयमेव सौभाग्यं हीयते। ल० वृ० पृ० ८१–८३।

१. कथमपिकृत प्रत्यायत्तौ प्रिये स्खलितोत्तरे
विरहकृशया कृत्वाव्याजप्रकल्पितमश्रुत्रम्।
असहनसखी श्रोत्रप्राप्तिप्रमादससंभ्रमम्
विवासितदृशाशून्येगेहे समुच्छ्वसितं ततः॥

न खल्वत्रार्थालङ्कारः कश्चित् परिदृश्यते। अथ च माधुर्यौजोभ्यां परिबृंहितस्य प्रसादस्य विद्यमानत्वात्काव्यरूपता। तत्रैव, पृ० ८२–८३। मुक्तकेषु प्रबन्धेष्विव रसबन्धाभिनिवेशिनो कवयो दृश्यन्ते। यथा ह्यमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव। ध्व०, पृ० ३५५, तत्रैव च लोचने उद्धृतोऽयं पूर्वोक्तश्लोकः, लो० पृ० ३५५, अनेनापि प्रतीयते यदभिनवभट्टः श्लोकमिमं इन्दुराजानन्तरं तदभिनिवेशमेव ज्ञात्वोद्धृतवानासीच्चेन्दुराजभट्टः तस्य गुरुः लघुवृत्तिकर्तेति।

२. तत्रैव, पृ० ५।

३. तत्रैव, पृ० २।

मनेकेषां काव्योपयोगिधर्माणां श्लेषादेरलङ्कारेषु प्राधान्यमित्यादि च बहुप्रतिपादितं टीकाकारेण। न च विस्तार्यते तत्सहृदयानामरुचि-भयात्।

शब्दशक्ति ध्वनित्वादिविवेचनञ्चोद्भटटीकाकर्तुः अभिनवभट्टगुरोश्चै-क्यसमर्थनपरमिति तत्रैव विचारयिष्यते। नातोऽत्र तदुपबृंहणमिति।

( २ )

## इन्दुराजयोरैक्यम् :

यद्यपि श्रीपीटर्सनबनहट्टीमहोदयौ[1] प्रतीहारभट्टेन्दुराजयोरभिन्नत्वं प्रतिपादितवन्तौ तथापि यथोक्तमस्माभिः पूर्वस्वर्गस्थाः महामहोपा-ध्यायाः काणेमहोदयाः, श्रीमन्तो सुशीलकुमार दे प्रभृतयश्च द्वाविन्दुराजा-विति समर्थितवन्तः[2]। तेषां तर्कः—

(१) समकालीनौ, समानदेशावलम्बिनौ, काश्मीरावपि द्वाविन्दु-राजावास्ताम् संस्कृतकाव्यशास्त्रे। मुकुलभट्टस्य शिष्यः, कौङ्कणः उद्भटस्य काव्यालङ्कारसारसङ्ग्रहग्रन्थस्य टीकाकृत्, प्रतीहार इत्युपाध्य-लङ्कृतः इन्दुराजः पृथक् श्रीमदभिनवगुप्ताचार्यगुरोः, विद्वत्कविसहृदय-चक्रवर्तिनो, काव्यविद्याप्रवीणात्, कात्यायनगोत्रीयश्रीभूतिराजतनयात्, भट्टेत्युपाधिविभूषितादिन्दुराजात्।[3] प्रतीहेन्दुराजः ध्वनिविरोधी

---

१. श्री दे महोदस्य हि० सं० पो० ग्रन्थस्य ७४ पृष्ठे द्रष्टव्यात्रटिप्पणी। तथा च पूनासंस्करणस्य सलघुवृत्तिकाव्यालङ्कारसारसङ्ग्रहस्य श्रीबन-हट्टी कृतभूमिकायाः पृष्ठाङ्काः, २६ द्रष्टव्याः। अभिन्नत्वसमर्थकतायां द्वौ तर्कौ बनहट्टी महोदयस्य—(१) इन्दुराजसमये आनन्दवर्धनः नूतनः कविरासीत् (२) भट्टेन्दुरपि कविरासीत् प्रतीहारेन्दुरपि अतः अभिन्नौ द्वाविति।

२. द्र० हि० सं० पो०, पृ० ७४-७६ तथा च काणे महोदयस्य साहित्य-दर्पणस्य त्रयोविंशत्यधिकैकोनविंशतिशततमेशवीयसंस्करणस्य भूमिका। तथा च तेषां सं० का० इ० ग्रन्थस्य पृष्ठाङ्काः, २५६-२५९।

३. विद्वद्ग्रयान्मुकुलादधिगम्य विविच्यते। प्रतीहारेन्दुराजेन काव्यालङ्कार सङ्ग्रहः॥ ल० वृ०, पद्याङ्काः ३।

भट्टेन्दुराजश्च ध्वनिसमर्थकः। इति महान् विचारभेदः द्वयोरपि। ध्वनिवादी भट्टेन्दुरन्यत्रापि भट्टेन्दुरित्येव नाम्ना प्रकीर्तितः क्षेमेन्द्रादिकविभिः।[1] प्रतीहारेन्दुर्नासीत प्रसिद्धकविः, न च ध्वनिवादी, प्राधान्येन च स उद्भटमतानुयाय्येवासीत्। यद्यपि स ध्वनिसिद्धान्तस्य सम्यग्ज्ञातासीत् न च तस्य क्वापि कदाचिदपि श्रद्धास्मिन्नभिनवसिद्धान्तेऽवलोक्यत इत्यवश्यमेव द्वयोः पार्थक्यमिति।[2] एवमेतद्वक्तुं शक्यते—

(१) प्रतीहारभट्टेन्दुराजौ भिन्नौ, मुकुलभट्टशिष्य ध्वनिविरोधी, अपरश्चाभिनवभट्टगुरुर्ध्वनिवाद्यासीत्।

---

मीमांसा सारमेघात्पदजलधिविधोस्तर्कमाणिक्यकोशात्
साहित्यश्रीमुरारेर्बुधकुसुममधोः सौरिपादाब्जभृङ्गात्।
श्रुत्वा सौजन्यसिन्धोर्द्विजकरमुकुलात्कीर्तिवल्ल्यालवातात्
काव्यालङ्कारसारे लघुविवृतिमधात्कौङ्कण श्रीन्दुराजः॥

तत्रैव टीकान्ते पुष्पिका। तथा च प्रतिवर्गटीकासमाप्तौ, इति श्री प्रतीहारेन्दुविरचितायामुद्भटालङ्कार सारसङ्ग्रहलघुवृत्तौ। इति। तथा च लोचनेऽभिनवभारत्यामुभयत्रापि चाभिनवाचार्यः बहुधोल्लेखं करोति भट्टेन्दुराजस्य। लोचनस्य प्रारम्भे, 'भट्टेन्दुराज चरणाब्ज कृताधिवास' इत्यादिश्लोकः, ध्वन्यालोकस्य 'स्वेच्छाकेसरिणः' इत्यादिमाङ्गलिकश्लोकलोचने। एवं वस्त्वलङ्काररसभेदेन त्रिधा ध्वनिरत्रश्लोकेऽस्मद्गुरुभिर्व्याख्यातः लोच०, पृ० ७ लोचनान्तेऽपि, भट्टेन्दुराजमतिसंस्कृत बुद्धिलेशः, इति। परवर्तिमम्मटरूय्यकप्रभृति समग्रालङ्कारिकैरपि भट्टोद्भटस्यैव नाम्नः सङ्कीर्तन परिदृश्यते।

१. क्षेमेन्द्रकविः 'औचित्यविचारचर्चायाः' २५, ३१ श्लोकयोरधस्तात् सुवृत्तितिलकस्य, २, २४, २९, ३० श्लोकानाञ्चाधस्तात् इन्दुराज भट्टेन्दुराज इति नाम्नैवोल्लिखितवान्। उद्धृत हि० सं० पो० पादटिप्पणीतां, पृष्ठाङ्काः ७१ हिन्दीसंस्करणस्य। भगवद्गीतायां अभिनवस्य टीकया भट्टेन्दुः श्रीभूतिराजपुत्रः, कात्यायनगोत्रीयसौचकस्य च पौत्र आसीदिति ज्ञायते। उद्धृत चैतत् बहलरनाम्ना दे महोदयग्रन्थस्य हिन्दी संस्करणे ७१ तमे पृष्ठे।

२. तत्रैव, डा० दे काणे महोदयौ विस्तरशः द्रष्टव्यौ।

(२) प्रतीहारेन्दुरालोचक एवासीन्न च कवित्वशक्तिसमन्वित: भट्टेन्दुस्तूभयत्रापि विचक्षण आसीत्।

(३) अभिनवगुप्तस्याचार्यत्वेन ख्यात: भट्टेन्दुरेव पश्चात्तनीनै: काव्यमर्मज्ञै: समुद्धृतस्तत्तत्स्थानेषु। समुद्रबन्धस्य द्वयो: साम्यसमर्थकवाक्यं भ्रान्तिपरमिति[1] क्रमेण चैतेषां खण्डनमिन्दुराजयोरैक्यञ्चाग्रे प्रतिपाद्यते सयुक्तिकप्रमाणै:—(१) रसाभिव्यक्तिश्च गुणैरेव जायत इत्यत्र प्राय: समान एव विचारो ध्वनिकाराभिनवगुप्तेन्दुराजस्य। तद्यथा—

(क) शृङ्गार एवं रसान्तरापेक्षया मधुर:। प्रह्लादहेतुत्वात्। तत्प्रकाशनपरशब्दार्थतया काव्यस्य स माधुर्यलक्षणो गुण:। इति ध्वनिकार:।[2]

(ख) वस्तुतो माधुर्यं नाम शृङ्गारादे रसस्यैव गुण:। तन्मधुरसाभिव्यञ्जकयो: शब्दार्थयोरुपचरितं मधुरशृङ्गाररसाभिव्यक्तिसमर्थता शब्दार्थयो:। इति लोचनकार:।[3]

(ग) रसाभिव्यक्तिश्च यथा योगं माधुर्यौजोभ्यां तारतम्येनावस्थिताभ्यां उपबृंहितो योऽसौ प्रसादात्मा गुणस्तेन क्रियते। इति लघुवृत्तिकार:।[4]

पदावलिभिन्नत्वेऽपि त्रिष्वप्युदाहृतेषु वचनेषु समान एवाभिप्राय इति त्रयोऽप्येते काव्यतत्त्वज्ञा समान विचारवन्तो पथैकगामिन इति। न चात्र शङ्का कार्या यल्लघुवृत्तिकारोक्तौ प्रसादस्यैव प्राधान्यं, ध्वनिकारेणाऽपि 'स प्रसादो गुणो ज्ञेयो सर्वसाधारणक्रिय:'[5] इति प्रसादस्य प्राधान्यं प्रतिपादितत्वात्।

१. काणे, सं० का० इ०, पृ० २५९, दे महोदयस्य इतिहासग्रन्थे पृ०, ७४ पादटिप्पणी-३।

२. ध्व, पृ० २१८।

३. लोचने, पृ० २१८।

४. ल० वृ०, पृ० ८३।

५. ध्व०, २।१०।

(२) गुणाश्चात्मभूतरसस्यैव धर्मा इति प्रतीहारेन्दुराजस्य मतम्। 'कथमपि कृतप्रत्यापत्तौ' इत्यादिश्लोकव्याख्यायां तेनोक्तम्—

'अत्र विप्रलम्भश्रृङ्गारोपकृतस्य सम्भोगश्रृङ्गरस्य सगुणकाव्यात्मत्वेनावस्थानं न तु काव्यं प्रति अलङ्कारतया[1]। 'अत्र माधुर्योजोभ्यामुपबृंहितः प्रसादो नाम गुणोऽस्तीत्यपि तेनामानि। एवं 'सगुणकाव्यात्मत्व' पदोपादानेन गुणा आत्मभूतरसस्यैव धर्मा इति। ध्वनिसमर्थकानामभिनवमम्मटादीनां मतसमर्थनात्प्रतीहारेन्दुरपि ध्वनिसमर्थक इति प्रतीयते। अपि च ध्वनिकारेणोक्तम्—'मुक्तकेषु प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। यथा ह्यमरुकस्य कवेर्मुक्तकाः श्रृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धाः[2]।' अत्रोदाहरणतयाभिनवगुप्तपादो लोचनेऽमलकस्य तमेव श्लोकमुदाहृतवान् यमिन्दुराजः स्वलघुवृत्तौ गुणनिदर्शने प्रस्तौति। तद्यथा—

'कथमपि कृतप्रत्यापत्तौ प्रिये स्खलितोत्तरे
विरहकृशयाकृत्वा व्याजप्रकल्पितमश्रुतम्।
असहनसखीश्रोत्रप्राप्तिं विशङ्क्य ससंभ्रमं
विवलितदृशा शून्ये गेहे समुच्छ्वसितं ततः॥

इत्यत्रश्लोके स्फुटैव विभावादिसम्पत्प्रतीतिः[3]।'

स्पष्टतरं यत्स्वगुरोरिन्दुराजादेवैतदुदाहरणमभिनवगुप्तेनाहृतम्। इति प्रतीहारेन्दुरेवासीदभिनवस्य गुरुर्भट्टेन्दुरिति।

(३) 'रसो हि काव्यस्य जीवितभूता' इत्यपि प्रतीहारेन्दुकथनं तस्य ध्वनिसमर्थकत्वं सूचयति उक्तं च तेन—

---

१. ल० वृ०, पृ० ८२–८३।
२. ध्व०, पृ० ३५५ तथा च तत्रैव लोचनमपि।
३. द्र०, ध्व०, पृ० ५५, तस्य च लोचनमपि।

'काव्यस्य रसानां त्वात्मशरीरभावः। रसा हि काव्यस्यात्मत्वेनावस्थिताः। शब्दार्थौ च शरीररूपतया। यथात्मात्माधिष्ठितं शरीरं जीवतीति व्यपदिश्यते तथा रसाधिष्ठितस्य काव्यस्य जीवद्रूपतया व्यपदेशः क्रियते। तस्माद्रसानां काव्यशरीर-भूतशब्दार्थविषयतयात्मत्वेनावस्थानं नालङ्कारतया।'[1] इति स्पष्ट एव प्रतीहारेन्दुराजो ध्वनिसमर्थक आसीत्।

(४) मुकुलोद्भटभट्टाचार्यौ नियतमेवाभिधावादिनौ आस्ताम्। अतएव काव्ये ध्वनेरेव प्राधान्यमिति मन्वानोऽपि प्रतीहारेन्दुः लघुवृत्तौ अभिधायाः प्रकारद्वयं सम्यग्विवेच्य सान्तरार्थनिष्ठलक्षणयैवोद्भटदृशा केषाञ्चिद्रूपकाद्यलङ्काराणां निरूपणं भवतीति प्रतिपादयति। लक्षणयैव च पर्यायोक्तादौ गम्यमान वस्तु गतार्थतामेतीत्याद्यपि उद्भटमतेनैव स परीक्षाञ्चक्रे। मुकुलादीनां शब्दशक्तिविवेचनसमानपद्धतिरिति तुलयितुं तेषामेव पदकदम्बकमत्रप्रस्तूयते—

(क) 'एवमयं मुख्यलाक्षणिकात्मविषयोपवर्णनद्वारेण शब्दस्याभिधाव्यापारो द्विविधः प्रतिपादितो निरन्तरार्थविषयः सान्तरार्थनिष्ठश्च।' इति मुकुलः।[2]

(ख) 'शब्दाश्छन्दोऽभिधानार्थो' इति अभिधानस्य शब्दाद्भेदं व्याख्यातुं भट्टोद्भटो बभाषे, 'शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्च।' इत्युद्भटमतप्रस्तावकोऽभिनवगुप्तः।[3]

(ग) 'श्रुतिर्निरन्तरार्थनिष्ठः शब्दव्यापारः। निरन्तरार्थनिष्ठेनाभिधाव्यापारेण यः पदान्तरेण सम्बन्धस्तच्छून्यत्वाद्गुणवृत्तिता।' इति।

---

१. ल० वृ०, पृ० ८३।

२. अभिधावृत्तिमातृका, पृ० ३ (चौखम्बा सं०, १९७३)।

३. लोचने, पृ० ३४ (चौ० सं०)।

'विरुद्धार्थाभिधायिनोः समानाधिकरणयोः शब्दयोर्निरन्तरार्थनिष्ठत्वेनाभिधाव्यापारेणानुपपद्यमानान्योन्यसमन्वयत्वाद्येकस्य लक्षणाया गुणवृत्तित्वमभिधीयते ।' इति ।

'श्रुतिर्निरन्तरार्थनिष्ठोऽभिधाव्यापारः' इति च लघुवृत्तिकारः[1] । एवं शब्दशक्तिविवेचने प्रतीहारः उद्भटमतमेवोपस्थापयति न च स्वयमपि तत्समर्थकः । उद्भटाचार्योऽभिधासमर्थक एवासीदिति पूर्वोक्ताभिनवगुप्तस्य लोचनवाक्येन स्पष्टमेव । अभिनवगुप्तश्चोक्तं पूर्वमुद्भटमतं इन्दुराजादेव जग्राहेत्यत्र नास्ति विसंवादः । अतएव भट्टेन्दुः प्रतीहारेन्दुरेवासीत् ।

( ५ ) टीकाकर्तुः सिद्धान्तः कर्तव्यं च भवति ग्रन्थकृन्मतसमर्थनम् । अत एवोद्भटानभिमतत्वेऽपि इन्दुराजेन विविधस्थलेषु ध्वनिसङ्कीर्तनं तत्खण्डनं च ग्रन्थकारदृशा तस्य प्रत्युत ध्वनिसमर्थकतामेवोपपादयति । तस्य ध्वनिसमर्थत्वोपपादकानि कतिपयानि स्थलानि यथा—

( क ) 'युवतिवदनानां चन्द्रेणोपमितत्वात् असितोत्पलस्य शशकरूपता ध्वन्यते ।' इति लाटानुप्रासोदाहरणव्याख्याने ।

( ख ) 'फलं चैवमभिधानस्योपमालङ्कारध्वननम् ।' इति ससन्देहालङ्कारविवरणे । अपि च, 'क्वचिदिवादिशब्दसामर्थ्यादुपमा वाच्यभूता प्रतीयते । क्वचित्तु केवलादेवार्थसामर्थ्यात्तस्याः प्रतिपत्तिर्यथा रूपकदीपकप्रतिवस्तूपमादिषु '[2] इति ।

इत्यादि स्थलेषु 'ध्वन्यते' 'ध्वननम्' इति तेन प्रयोगस्तस्य ध्वनिसमर्थकत्वं सुतरामेव सूचयति । तथा च प्रतीहारभट्टेन्दुराजयोरैक्यमप्यनेन प्रमाणितं भवति ।

( ६ ) लघुवृत्तौ ध्वनेर्विंशतीनां भेदानां पर्यायोक्तादिष्वेवान्तर्भावात् भेदप्रतिपादनपराः काणेप्रभृतयः प्रतीहारं ध्वनिविरोधित्वेनोपस्थाप्य

---

१. ल० वृ० रूपकविवेचने, पृ० १०-१२ । पुनश्च प्रतीहारः पुनरुक्तवदाभासव्याख्याने एवमुक्तवान्—'काचित्खलु गम्यमानार्थान्वयेनाभिधा प्रवर्तते काचित्त्वभिधीयमानार्थान्वयेन' । ( ल० वृ० पृ०, २ ) । इत्यनेनापि तस्य ध्वनिसमर्थकत्वं सूच्यते ।

२. तत्रैव, पृ० ३० ।

भट्टेन्दुना तस्य पार्थक्यं वदन्ति ।[1] वस्तुतस्तु प्रतीहारोऽत्रोद्भटमतमेवा-नुसरंस्तथा करोति । तन्मुखेनैव ध्वनेरन्तर्भावं पर्यायोक्तादिषु प्रदर्शयति । न च तत्र तस्य कोऽपि समर्थनासमर्थनाभिनिवेशः । तत्प्रयुक्तान्यधस्त-नानि वाक्यानि ध्वनिविरोधित्वे तस्यौदासीन्यं प्रकटयन्तिः—

( क ) 'एतच्चविद्वद्भिर्विचार्य ग्रहीतव्यं न त्वविमृश्यैवासूयितव्यमित्य-लमतिवाचालतया ।[2]

अर्थान्नाथ ममैतन्मतम् । मया तु ग्रन्थकारदृशैव प्रतिपादितः ध्वनेः पर्यायोक्तादावन्तर्भावः । अतः न खलु मां प्रति असूया कार्या । ध्वनि-समर्थकोऽपि बहु प्रलपितवानस्मि इति नाधिकं वक्ष्यत इति भावः ।

एवमेव रसवदाद्यलङ्कारविवेचने,—'रसभावस्वरूपं चात्र न विवेचितं अप्रकृतत्वाद्बहुवक्तव्यत्वाच्च'[3] इति प्रतीहारोक्तिः प्रमाणयति यत् रसभावा-दिस्वरूपं यथोद्भट. मन्यते न तथाभिमतम्मे । अत एवात्र तद्विवेचनम-प्रकृतमेव । अपि चोद्भटभट्टस्तु रसादिप्रतीतावेव रसवदाद्यलङ्कारं ब्रवीति न च मेऽभिमतमिदमपीति । बहुवक्तव्यमत्र, नातो विचार्यत इति ।

---

१. ननु यत्र काव्ये सहृदयहृदयमानिनः प्रधानभूतस्य स्वशब्दव्यापारा-स्पृष्टत्वेन प्रतीयमानैकरूपस्यार्थस्य सद्भावस्तत्रतथाविधार्थाभिव्यक्ति हेतुः काव्यजीवितमूतः कैश्चित्सहृदयैर्ध्वनिर्नाम व्यञ्जकत्व भेदात्मा काव्यधर्मोऽभिहितः स कस्मादिह नोपदिष्टः । उच्यते । एष्वेवालङ्कारे-ष्वन्तर्भावात् । तथाहि प्रतीयमानैकरूपस्य वस्तुनस्त्रैविध्यं तैरुक्तं वस्तुमात्रालङ्काररसादिभेदेन । एवमन्यत्रापि वस्तुमात्रे प्रतीयमाने पर्यायोक्तितावाच्या । तस्मान्न वस्तुमात्रे प्रतीयमाने तदभिव्यक्तिहेतुः काव्यधर्मो ध्वनिर्नामार्थान्तरम् । ( एवमलङ्काराणामपि व्यञ्जकत्वे लावण्यकान्तीत्यादौ ) पर्यायोक्तमलङ्कारः । ( सुवर्णपुष्पामि'त्यादौ ) निदर्शना ( वामनाभिमता च सादृश्याल्लक्षणावक्रोक्तिरिति ) वक्रोक्तिः ( इत्यादि प्रतिपाद्य )—तेनालङ्कारनिष्ठस्यापि अभिव्यञ्जकत्वस्योक्ते-ष्वेवालङ्कारेष्वन्तर्भावः ।—अतश्च रसादिष्वभिव्यञ्जकत्वस्य नार्थान्तरता । ल० वृ०, पृ० ८५-८९ ।

२. तत्रैव, पृ० ९१ ।

३. तत्रैव, पृ० ५४ ।

एवमत्र सुस्पष्टतया वक्तुं शक्यते यल्लघुवृत्तिटीकाकृदेवासीदभिनवस्याचार्यः भट्टेन्दुः। यतो हि प्रतीहारेन्दुरपि भवति ध्वनिवादी। ध्वनिसमर्थकत्वे च तस्यैतानि वाक्यानि सन्ति निदर्शनीयानि—

'काव्येन रसानां त्वात्मशरीरभावः। रसाः हि काव्यस्यात्मत्वेनावस्थिताः शब्दार्थौ च शरीररूपतया।—तदाहुः—

रसाद्यधिष्ठितं काव्यं जीवद्रूपतया यतः।
कथ्यते तद्रसादीनां काव्यात्मत्वं व्यवस्थितम्॥ इति।

'यत्तु रसादीनां पूर्वमलङ्कारत्वमुक्तं तदेवंविधभेदाविवक्षया।'[1] इति।

'तच्चेहप्रतीयमानं प्रधानत्वादलङ्कार्यतया वक्तुं मुक्तं न त्वलङ्कृतिकारणतया। अतः कथं तस्यालङ्कारव्यपदेशः। उच्यते। प्रधानमपि गुणानां सौन्दर्यहेतुत्वादलङ्कृतौ साधनत्वम्भजते। अतोऽत्रापि प्रतीयमानस्य सत्यपि प्रधानत्वे स्वगुणभूत-वाच्यसौन्दर्यसाधकतमत्वादलङ्कारव्यपदेशः।'[2] इत्येतानि पदकदम्बकानि प्रतीहारस्य ध्वनिवादित्वसमर्थकपराणि सन्तीति द्वयोरिन्दुराजयोरैक्यं समीहितम्भवति।

(७) ध्वनेर्विंशतिभेदान् खलु लघुवृत्तौ प्रतीहारेन्दुः प्रोवाच। न चैष ध्वनिप्रकारतासरणिर्ध्वन्यालोके काव्यप्रकाशे वा परिदृश्यते। प्रथमन्तावल्लघुवृत्तिकृतम्ध्वनिप्रभेद एवोपस्थातव्यम्। 'द्विविधं व्यञ्जकत्वं वाचकशक्त्याश्रयं वाच्यशक्त्याश्रयं च। वाचकशक्त्याश्रयमलङ्काराणामेव व्यङ्ग्यत्वात् एकप्रकारकम्। तत्र ह्यलङ्कारा एव व्यज्यन्ते न तु वाच्यस्य विवाक्षितत्वैकरूपत्वम्। वस्त्वलङ्कारविषये तु वाच्यशक्तिमूले व्यञ्जके प्रत्येकं वाच्यस्य विवक्षितत्वाविवक्षितत्वाभ्यां द्विभेदता। तत्समाश्रयणेन त्रिविधप्रतीयमानार्थनिष्ठस्यापि षट्प्रकारता।—यत्र च विवक्षितत्वं तत्र वाच्यस्य स्वतः सम्भवित्वात्प्रौढोक्तिमात्रनिष्पन्नत्वाच्च द्वैविध्यम्। अतस्तत्र तस्याष्टौ भेदाः भवन्ति।—एते विवक्षितत्वाविवक्षित्वाभ्यां सङ्कलिता दश–

---

१. तत्रैव, पृ० ८३।

२. तत्रैव, पृ० ८६।

पदवाक्यप्रकाश्यतया च भजमाना विंशतिर्भवन्ति ।[1] इत्येतानधस्तनता- लिकया सारल्येन समीक्ष्यन्ताम्—




एवमेते दशभेदाः प्रत्येकं पदवाक्यप्रकाश्यतया विंशतिर्भवन्ति। ध्वनेरेष विभागो ध्वनिकारस्यानन्दस्य ध्वन्यालोके मम्मटस्य काव्यप्रकाशे वा न दृश्यते । तुलनार्थं मम्मटस्य ध्वनि-विभागो यथा—

१. तत्रैव, पृ० ८९–९२, तथा च बनहट्टी टीका, पृ० १७८ ।


ध्वनिः ( ५१ भेदाः—भेदास्तदेकपञ्चाशत ) ।
अविवक्षित वाच्य ४
विवक्षितान्यपर वाच्य
अर्थान्तरसंक्रमित वाच्य
अत्यन्त ति. वा
असंलक्ष्यक्रमव्यङ्ग्य रसादिः ६
संलक्ष्यक्रमव्यङ्ग्य ( ४१ )
पदगत
वाक्यग.
पदगत
वाक्यग.
वर्ण
पद
वाक्य
पदैकदेश
रचना
प्रबन्ध
शब्दशक्त्युत्थ ४
अर्थशक्त्यु. ३६
शब्दार्थोभय गत १ )
वस्तु
अलंकार
पदग.
वाक्यग.
पदग.
वाक्यग.


↑
स्वतः संभवी
प्रौढोक्तिमात्रसिद्ध
कविप्रौढोक्तिमात्रसिद्ध
वस्तु अलं.
अलं. वस्तु
वस्तु. वस्तु
अलं. अलं.
पदग. वाक्यग. प्रबंध
पदग. वाक्यग. प्रबंध
पदग. वाक्यग. प्रबंध
पदग. वाक्यग. प्रबंधग.
वस्तु–अलं.
अलं. वस्तु
वस्तु–वस्तु
अलं.–अलं.
पदग. वाक्यग. प्रबंधग.
पदग वाक्यग प्रबंधग.
पदग. वाक्यग. प्रबंधग.
पदग. वाक्यग. प्रबंधग.
वस्तु–अलं.
अलं.–वस्तु
वस्तु–वस्तु
अलं.–अलं.
पदग. वाक्यग. प्रबंधग.
पदग. वाक्यग. प्रबंधग.
पदग. वाक्यग. प्रबंधग.
पदग. वाक्य. प्रबंधग.

निर्णेतुं शक्यते यदिन्दुराजतो प्रागपि संभवतया ध्वनिकारानन्दवर्द्धनादपि प्राग्ध्वनिसिद्धान्तः प्रचलित आसीत्। तस्यान्यथाभेदप्रकारास्त्वानन्देन सुव्यवस्थापिताः ध्वन्यालोके। प्रतीहारेन्दुरत्र प्राचीनस्यैव कस्यचिदपि सहृदयस्य ध्वनिप्रकारान् उद्भटनयेन पर्यायोक्तादावन्तर्भावितवानिति विनिश्चयः। अत एव आनन्दात्प्रागपि कश्चिद्ध्वनिप्रवर्तकः सहृदयनामा आसीदिति काणेमहोदयोक्तिरपि सङ्गच्छतेतराम्[1]।

(८) अपि च कियन्त्यो हि कारिकाः लघुवृत्ताविन्दुराजेनोदाहृता भामहोद्भटदण्डिरुद्रटानन्दग्रन्थेषु नोपलभ्यन्ते। ताश्च यथैताः—

तदाहुः—रसाद्यधिष्ठितं काव्यं जीवद्रूपतया यतः।
कथ्यते तद्रसादीनां काव्यात्मत्वं व्यवस्थितम्॥[2] इति॥

तदाहुः—विवक्ष्यमविवक्ष्यं च वस्त्वलङ्कारगोचरे।
वाच्यं ध्वनौ विवक्ष्यं तु शब्दशक्तिरसास्पदे॥
भेदषट्के चतुर्धा यद्वाच्यमुक्तं विवक्षितम्।
स्वतःसंभवि वा तत्स्यादथवा प्रौढिनिर्मितम्॥
दशभेदा ध्वनेरेते विंशतिः पदवाक्यतः।
प्रधानवद्गुणीभूते व्यङ्ग्ये प्रायेण ते तथा॥ इति॥[3]

किमेता कारिका भट्टोद्भटकालीनस्य कस्यचिद्ध्वनिवादिनः सहृदयस्य उत् प्रतीहारस्यैव ? 'तदाहुः' इति पदप्रयोगाच्च नैता प्रतीहारस्येति तु सुनिश्चितमेव। प्रतीयते यदुद्भटसमसामयिकस्यैव कस्यापि सन्त्येताः कारिकाः। तस्यैवेतद्ध्वनिविभागोऽप्यस्ति। ध्वन्यालोके लोचने च भाक्तवादिनां मतस्य खण्डनाय बहुतरप्रयासो दृश्यते। प्रतिपादितं च मया, भट्टोद्भटमुकुलौ आस्ताम् भाक्तवादिनौ। अभिधाया द्वितीयभेदसान्तरार्थनिष्ठगौणत्वप्रकारकलक्षणयैव पर्यायोक्तादौ गम्यमानं वस्तु बोध्यत इत्युद्भटादीनां मतमासीत्। प्रतिष्ठितचरस्य सिद्धान्तस्य पर्यायोक्तादावन्तर्भावं गमयितुं मुकुलादेशादेवेन्दुराजः काव्यालङ्कारसारे लघुवृत्तिमधादिति स्वयमेव स वक्ति—

---

१. काणे०, सं० का० इति, पृ० २२२–२६०।

२. ल० वृ०, पृ० ८३।

३. ल० वृ०, पृ० ९२।

'विद्वद्र्याग्मुकुलादधिगम्य विविच्यते ।
प्रतीहारेन्दुराजेन काव्यालङ्कारसंग्रहः ॥ इति ॥'[1]

पुनश्च ग्रन्थसमाप्तौ पुष्पिकायाम्—

'श्रुत्वा सौजन्यसिन्धोर्द्विजवरमुकुलात् कीर्तितुल्यालवालात् ।
काव्यालङ्कारसारे लघुविवृतिमधात्कौङ्कणः श्रीन्दुराजः' ॥'

इति च तदुक्तिरेवात्र प्रमाणम् । एवम्प्रतीहारेन्दुरेवासीदभिनवभट्टगुरुः यश्च मुकुलानुसारि उद्भटमतपुरस्सरव्याख्यानं लघुवृत्तौ कृतवान्स्मादेव कारणात् नैव कुत्रापि स स्पष्टतया ध्वनिसमर्थनं करोति । अतएव समुद्रबन्धस्य इयमुक्तिरपि सुष्ठ्विति ग्राह्या—'भट्टेन्दुराजेन अप्रस्तुतप्रशंसोदाहरणे—भट्टोद्भटग्रन्थे—व्याख्यातम् ।'[2] इति प्रतीहारभट्टेन्दुरेकवासीदिति ।

( ६ ) अपि च दे प्रभृतीनां तर्कः यदभिनवगुप्तेन स्वगुरोर्नाम भट्टेन्दुरिति सङ्कीर्तितः इति तन्न वक्तुं क्षमम् । अभिनवभारत्यामेकत्र स इन्दुराजस्य नाम एवम्प्रकारेण जग्राह—

'अनुभावप्राधान्यं यथाशुद्धसारस्वतप्रवाहपवित्रसकलवाङ्मयमहार्णवपूर्णभावसम्पादनात् द्विजराजस्येन्दुराजस्य ।'[3]

इति न सर्वत्रैवाभिनवः प्रतीहारेन्दोर्भट्टेन्दोर्पार्थक्याय भट्टेन्दुरित्युक्त्यैव स्वाभिमतगुरोः स्मरणं करोति ।

इत्येवमुक्तप्रकारेण इन्दुराजयोरैक्यं ध्वनिवादित्वं च सिद्धमेतीत्यलमतिविचारितेनातश्च डा. के. सी. पाण्डेयमहोदयोऽपि ऐक्यप्रतिपादनाय प्रशंसार्ह इति शम् ।[4]



---

१. तत्रैव, कारिका–२, पुष्पिकायामन्तिमः श्लोकश्च ।

२. समुद्रबन्ध, पृ० १३०, उद्धृतं—काणेमहोदयस्य, सं० का० इ० ग्रन्थात् , पृ० २५९ ।

३. रससूत्रोपरि अभिनव-व्याख्यानम् । सं० डा० दशरथ द्विवेदिनो, अभिनवरससिद्धान्त, पृ० ५५ ।

४. डा. के. सी. पाण्डेयस्य, अभिनवगुप्तविषयके ग्रन्थे, पृ० ७४, १४२ उद्धृतं काणे महोदयस्य ग्रन्थात् २५७ पृष्ठतः ।

## प्राध्यापकानां प्रकाशिताः कृतयः

### डा० रामजी उपाध्यायेन विरचिताः सम्पादिताश्च कृतयः

१. प्राचीन भारतीय साहित्य की सांस्कृतिक भूमिका
२. भारतस्य सांस्कृतिकनिधिः
३. द्वासुपर्णा ( संस्कृतोपन्यासः )
४. संस्कृत-साहित्य का आलोचलनात्मक इतिहास
५, Sanskrit and Prakrit Māhākavyas
६. संस्कृतसाहित्य का आलोचनात्मक इतिहास भाग १–२
७. मध्यकालीन संस्कृत-नाटक
८. आधुनिक संस्कृत-नाटक
९. महाकविः कालिदासः
१०. पूर्वपथ—हिन्दी नाटक
११. धम्मपदं
१२. आधुनिक-संस्कृतसाहित्यानुशीलनम्
१३. संस्कृतनिबन्धावली
१४. सागरिका–त्रैमासिकी शोधपत्रिका ( वर्ष १ से १५ )

### डा० वनमाला भवालकर विरचिताः

१५. महाभारत में नारी
१६. पाददण्डम् ( संस्कृतरूपकम् )
१७. रामवनगमनम् ( संस्कृत-संगीतिका )
१८. पार्वतीपरमेश्वरीयम्

### डा० राधावल्लभ त्रिपाठी

१९. संस्कृत कवियों का व्यक्तित्व, संस्कृत–निबन्धकलिका

## विभागे समापन्नाः शोधप्रबन्धाः

*डी० लिट् उपाधेः*

| *शोध विषयः* | *उपाधिप्राप्ता* |
|---|---|
| १. प्राचीन भारतीय साहित्य की सांस्कृतिक भूमिका | डा. रामजी उपाध्याय |

*पी० यच् डी० उपाधेः*

| | |
|---|---|
| २. रामायण का एक अध्ययन | डा. एल. एन. करन्दिकर |
| ३. जैन अङ्गशास्त्र के अनुसार मानवव्यक्तित्व का विकास | डा. हरीन्द्र भूषण जैन |
| ४. गुप्तकालीन नाटकों के नारी पात्रों का अध्ययन | डा. कृष्णा सिन्हा |
| ५. पतञ्जलि-कालीन भारत | डा. प्रभुदयाल अग्निहोत्री |
| ६. ऋग्वैदिक आचार | डा. विष्णुदेव शर्मा |
| ७. महाभारत में नारी | डा. वनमाला भवालकर |
| ८. श्रीहर्ष के नाटकों का आलोचनात्मक अध्ययन | डा. गोकुलप्रसाद त्रिपाठी |
| ९. पौराणिक उत्सवों का अध्ययन | डा. पद्मा भार्गव |
| १०. महाभारत में शिक्षण-पद्धति | डा. इन्द्रजीत उप्पल |
| ११. महाभारतीय शिष्टाचार | डा. प्रेमदत्त पंचोली |
| १२. महाभारतीय धार्मिक प्रवृत्तियाँ | डा. शशिबाला श्रीवास्तव |
| १३. आचाराङ्गसूत्र का समीक्षात्मक अध्ययन | " परमेष्ठीदास जैन |
| १४. पण्डिता क्षमाराव—एक अध्ययन | " कृष्णकान्त शर्मा |
| १५. महाभारत में लोककल्याण की राजकीय योजनाएँ | " कामेश्वरनाथ मिश्र |

१६. कथासरित्सागर में सांस्कृतिक प्रवृत्तियाँ — डा. ओ३मप्रकाश हर्ष
१७. बीसवीं शती में संस्कृत-पत्रकारिता का विकास — " रामगोपाल मिश्र
१८. श्री महेशचन्द्र तर्कचूडामणि—एक अध्ययन — " जगदीशप्रसाद मिश्र
१६. रामावतारशर्मा—एक अनुशीलन — " अच्युतानन्द झा
२०. मध्यप्रदेश में संस्कृताध्ययन का विकास — डा. कन्हैयालाल द्विवेदी
२१. सायण भाष्य तथा ऋग्वेद के द्वितीय मण्डल के मन्त्रों का अध्ययन — डा. सिद्धनाथ शुक्ल
२२. पारिजातहरण कथा का विकास — " गौतमप्रसाद मिश्र
२३. वैष्णव पुराणों में आचार समीक्षा — " प्रेमनारायण द्विवेदी
२४. अप्पाशास्त्री राशिवडेकर-व्यक्तित्व और कृतित्व — " हीरालाल शुक्ल
२५. अमरकोष में भारतीय संस्कृति — " गोमतीप्रसाद शुक्ल
२६. टीकासाहित्य का विकास — " कृष्णहरि शर्मा
२७. महालिंग शास्त्री—व्यक्तित्व और कृतित्व — " सुदर्शन त्रिपाठी
२८. स्वातन्त्र्योत्तर संस्कृत का विकास — " निर्मला उपाध्याय
२६. प्रमुख उपनिषदों में सांस्कृतिक प्रवृत्तियाँ — " साधना गुप्त

३०. सोलहवीं शती में संस्कृत रूपकों का विकास — डा. गणेश प्रसाद
३१. सत्रहवीं शती में संस्कृत रूपकों का विकास — " शंकरलाल स्वर्णकार
३२. अट्ठारहवीं शती में संस्कृत रूपकों का विकास — " विहारीलाल नागार्च
३३. उन्नीसवीं शती में संस्कृत रूपकों का विकास — " शिवदर्शन त्रिपाठी
३४. बीसवीं शती में संस्कृत रूपकों का विकास — " गुलाबचन्द्र जैन
३५. संस्कृत साहित्य में गांधीवाद का प्रभाव — " रमाप्रसाद वाजपेयी
३६. श्री मद्भागवत—सांस्कृतिक अध्ययन — " किशोरी शरण
३७. यतीन्द्रविमल चौधुरी व्यक्तित्व और कृतित्व — " श्रीमती मनोरमा तिवारी
३८. उन्नीसवीं शताब्दी में गीतिकाव्य का विकास — " कृष्णा खरे
३९. महाभारत में चरित्र-निर्माण — " श्रीमती दिनेश नन्दिनी
४०. आचार्य मेधाव्रत शास्त्री अध्ययन — " माया परमहंस
४१. संस्कृत-साहित्य में गंगावतरण — " विजया कक्कड़
४२. उन्नीसवीं शती में संस्कृत महाकाव्य का विकास — " कन्हैयालाल पाण्डेय
४३. संस्कृत कवियों का व्यक्तित्व — " राधावल्लभ त्रिपाठी
४४. महाकवि हरिचन्द्र — " पन्नालाल जैन

४५. संस्कृत नाटकों में प्रकृति-चित्रण — डा. रंजना मिश्र
४६. संस्कृत नाटकों में आचर — " गायत्री देव
४७. महाभारत में अर्थशास्त्र का मूल — " जयप्रसाद वार्ष्णेय
४८. महाभारतीय तीर्थानुशीलन — " राजाराम हजारी
४९. महाभारत में प्रकृति का अनुशीलन — " वीरेन्द्रकुमार
५०. संस्कृत-निबन्धशैली का विकास — " वीणा ओखदे
५१. व्यायोग रूपक का विकास — " रविनन्दन त्रिपाठी
५२. कलिदासीय नाटकों की नाट्यशास्त्रीय समीक्षा — " कुसुम भूरिया



# सागरिका–लेखानुक्रमणिका

## प्रथमवर्षतो पंचदशवर्षपर्यन्तम्

### प्रथमं वर्षम्

| निबन्धः | लेखकः |
|---|---|
| राजेन्द्रप्रसादचरितम् | श्री रामजी उपाध्यायः |
| परमपादराजेन्द्रगौरवाष्टकम् | डा. वि. काणे |
| तस्माद् युध्यस्व भारत | श्री रामजी उपाध्यायः |
| गङ्गावतरणम् | " विष्णुदत्त शुक्लः |
| महाभारतीयं तपः | कु. शशिबाला श्रीवास्तवः |
| लीलामयलीली | श्री महावीर प्रसाद जोशी |
| शाक्तदृष्ट्या सृष्टितत्त्वविमर्शः | " गोपीनाथ कविराजः |
| विश्वशान्तेरुपायः | " योगेशः |
| मन्दमारुतपञ्चकम् | " मा. कृष्ण नम्पूतिरिपादः |
| स्फोटसमाम्नायः | " रसिकविहारी जोशी |
| नाटकीयमितिवृत्तम् | " विश्वनाथ भट्टाचार्यः |
| सागरिका-संवर्धनम् | " बटुकनाथशास्त्री खिस्ते |
| संस्कृतपत्रकारिता | " रामगोपाल मिश्रः |
| महाभारते नारी | श्रीमती वनमाला भवालकरः |
| वलिपुष्टविलसितम् | " के. राजन्न शास्त्री |
| कथासरित्सागरे विज्ञानस्वरूपम् | " ओ३म्प्रकाश हर्षः |
| गीतामञ्जरी | भेषराज सापकोट शास्त्री |
| संस्कृतशोधकर्मपरिचयः | |
| ग्रन्थसमालोचनम्, संस्कृतवृत्तम् | विश्वनाथ भट्टाचार्यः |

## वर्षं द्वितीयम्

| | |
|---|---|
| आधुनिकशिक्षानीतिः | डा. रामजी उपाध्यायः |
| राजेन्द्रस्य युद्धोद्योगः | श्री भोजराजः |
| सांख्यानां साक्षी | " शिवचन्द्र भट्टाचार्यः |
| गीतम् | दिनेशः |
| सरस्वती | कुमारी शशिबाला श्रीवास्तवः |
| नवावतारिका | तेलकपल्ले विश्वनाथ शर्मा |
| महाभारतीयतीर्थयात्रा-विश्लेषणम् | कु. अर्चना वसुः |

| निबन्धः | लेखकः |
|---|---|
| नाटकीयं वृत्तप्रपञ्चनम् | डा. विश्वनाथ भट्टाचार्यः |
| सद्गुरुस्तवनम् | " वनमाला भवालकरः |
| संस्कृतपत्रकारिता | श्री रामगोपाल मिश्रः |
| पद्मावती | डा. वासुदेव विष्णु मिराी |
| भारतं तद्विराजताम् | " मंगलदेव शास्त्री |
| अग्निसंहिता | श्री जगन्नाथ वेदालङ्कार |
| काव्ये रसपर्याप्तिविमर्शः | डा. राममूर्ति त्रिपाठी |
| सुरापः | श्री मञ्जुल मयंकपन्तुलः |
| पाणिनीयस्य सुबोधता | " के. राजन्न शास्त्री |
| आर्यसमाजस्य संस्कृतसाहित्यकाराः | " विश्वनाथ शास्त्री |
| वसन्तवर्णनम् | स्व. म. म. रामावतार शर्मा |
| विज्ञानवादे प्रत्ययनिर्वाहः | डा. व्रतीन्द्रकुमार सेनगुप्त |
| मल्लिनाथानुवीक्षा | श्री रेवाप्रसाद द्विवेदी |
| उपनिषदां संस्कृत-समीक्षणम् | कु. साधना गुप्तः |
| संस्कृतवृत्तम् | डा. विश्वनाथ भट्टाचार्यः |
| म. म. स्व. रामावतार शर्मा | श्री अच्युतानन्द झाः |
| संस्कृत-प्रकाशनम् | " भोजराजः |
| बौद्धेषु प्रभात्वविमर्शः | " जगन्नाथ उपाध्यायः |
| कालिदासस्य संगीतकलाकृतित्वम् | " श. परांजपे |
| संस्कृतपत्रकारिता | " रामगोपाल मिश्रः |
| कतमः स्विदेव सः | जगन्नाथ वेदालङ्कारः |
| महाभारतीया आत्मगुणाः | कु. शशिबाला श्रीवास्तवः |
| संस्कृतसाहित्ये पारिजातहरणकथा | श्री गौतमप्रसाद मिश्रः |
| रामावतारशर्मणां समाजोद्बोधनम् | " अच्युतानन्द झाः |
| पाददण्डः | डा. वनमालाभवालकरः |

## वर्षं तृतीयम्

| निबन्धः | लेखकः |
|---|---|
| राजतरंगिणी | डा. रामजी उपाध्यायः |
| कुन्तकस्य वक्रोक्तिप्रस्थानं व्यञ्जना | " रविशंकर नागरः |
| कारणत्वं स्वभाववादश्च | श्री शिवचन्द्र भट्टाचार्यः |
| भारतीयसंस्कृतेर्वैशिष्ट्यानि | डा. रामजी उपाध्यायः |
| कर्णपूरस्याप्रस्तुतविधानपाटवम् | श्री गौतमप्रसाद मिश्रः |
| सप्तदशशतकस्य रूपकत्रयम् | " शंकरलालः स्वर्णकारः |
| अष्टादशशतकस्य त्रयो भाणाः | " बिहारीलालः नागार्चः |
| ऊनविंशशतकस्य नाटकत्रयम् | " शिवदर्शन तिवारी |
| विंशशताब्द्याः नाटकेषु राष्ट्रजागरणम् | " गुलाबचन्द्र जैनः |
| वसन्तवर्णनम् | पुल्लेल श्री रामचन्द्रडुः |
| काव्येष्वलङ्कारः | श्री भूपतिभट्टः |
| प्राच्ययूरोपीयविश्वविद्यालयेषु संस्कृताध्ययनम् | डा. रसिकबिहारी जोशी |
| कालिदाससमयनिर्णयः | म. म. डा. वा. वि. मिराशी |
| तिलकमञ्जरीकारो महाकविर्धनपालः | डा. हरीन्द्रभूषण जैनः |
| संस्कृतपत्रकारिता | " रामगोपाल मिश्रः |
| महाभारतयुद्धे नारी | " श्रीमती वनमाला भवालकरः |
| नाट्यस्वरूपपरामर्शः | " विश्वनाथ भट्टाचार्यः |
| पार्वतीतपोरहस्यम् | श्री रेवाप्रसाद द्विवेदी |

## चतुर्थं वर्षम्

| | |
|---|---|
| सप्तदशशतकस्य कतिपयरूपकाणि | श्री शंकरलालः स्वर्णकारः |
| असमदेशीयं रूपकत्रयम् | पं. बिहारीलालो नागार्चः |
| ऊनविंशशतकस्य रूपकत्रयम् | " शिवदर्शन तिवारी |
| विंशशताब्द्याः पौराणिकनाटकानि | श्री गुलाबचन्द्रो जैनः |
| पुराणमित्येव न साधु सर्वम् | पुल्लेल श्रीरामचन्द्रडुः |

## षष्ठं वर्षम्

## वर्षं सप्तमम्

**चतुर्थाङ्कः**

अभिनव-प्रकाशनम्

# आधुनिक-संस्कृत-नाटक ( हिन्दी में )

( नये तथ्य : नया इतिहास )

कतिपयवर्षैः सागरिका-सम्पादकः, सागर विश्वविद्यालयस्य प्राचार्यो डा० रामजी उपाध्यायः संस्कृत-नाटकस्य बृहदितिहासं हिन्दी-भाषया प्रस्तावयितुं व्यापृतो वर्तते ।

प्रथमो भागः अश्वघोषतो भवभूतिपर्यन्तः

४७५ पृष्ठानि मूल्यं १० रूपकाः

द्वितीयो भागः अष्टमशतकात् पंचदशशतकं यावत्

५०५ पृष्ठानि मूल्यं २५ रूपकाः

तृतीयो भागः षोडशशतकात् १९७५ ई० यावत् प्रायः

१००० पृष्ठानि मूल्यं ५० रूपकाः

भागद्वयं प्रागेव प्रकाशितम् । तृतीयो भागः सम्प्रति यन्त्रस्थः शीघ्रमेव प्रकाशमेष्यति । अत्र संस्कृतनाटकानां साहस्रं नाट्यशास्त्रीय-विवेचनपुरस्सरमैतिहासिकक्रमेण परिशीलितम् ।

प्रकाशनात् प्राक् केवलं २५ रूप्यकप्रदातृभ्यो ग्रन्थोऽयं वितरणीय इति प्रचार-योजना प्रकाशकेन संस्कृत-परिषदानुगृहीता । एतदर्थमधो लिखितेन संकेतेन धनराशिः प्रेषणीयः ।

मन्त्री, संस्कृत-परिषद्

## सागर-विश्वविद्यालय

सागर ( म० प्र० )

